CHOWKHAMBA SANSKRIT SERIES
A
COLLECTION OF RARE & EXTRAORDINARY SANSKRIT WORKS.
No's 486, 487, 488. & 489.

The

# PURĀṆA SAṂHITĀ

( REVEALED TO VEDAVYĀSA )

*Including*

ĀLAMANDĀRA SAṂHITĀ

BRIHATSADĀS'IVA SAṂHITĀ

and

SANATKUMĀRA SAṂHITĀ

*Edited with notes, introduction etc;*

By

SHRĪ KRISHNA PRIYĀCHĀRYA

PUBLISHED BY
JAYA KRISHNA DÂS HARIDÂS GUPTA
*The Chowkhamba Sanskrit Series Office,*
BANARAS.

1951

॥ श्रीः ॥

चौखम्बा—संस्कृत—ग्रन्थमाला

( ग्रन्थ-संख्या ८९ )

ग्रन्थाङ्काः ४८६, ४८७, ४८८, ४८९.

श्रीमद्द्वैपायनार्थं वेदशिवाभ्यामाविर्भाविता

# श्रीपुराणसंहिता

## आळमन्दारसंहिता- बृहत्सदाशिवसंहिता- सनत्कुमारसंहिता-

संवलिता

श्रीमज्जलपुरी 'तपती' तीरब्रह्मतीर्थपरायणेन श्रीमन्निजानन्दधर्मनादशास्त्रगाथाचार्येण

**श्रीकृष्णप्रियाचार्येण**

पाठभेदटिप्पण्यादियोजनपुरस्सरं संशोधिता ।



प्रकाशकः

जयकृष्णदास हरिदास गुप्तः,

चौखम्बा संस्कृत सीरिज आफिस,

बनारस—१

श्रीः



आनन्दवनविद्योतिसुमनोभिः सुसंस्कृता ।
सुवर्णाऽङ्कितभव्याभशतपत्रपरिष्कृता ॥ १ ॥
चौखम्बा-संस्कृतग्रन्थमाला मञ्जुलदर्शना ।
रसिकालिकुलं कुर्यादमन्दाऽऽमोदमोहितम् ॥ २ ॥

स्तबकाः ४८६, ४८७, ४८८, ४८९,

*Printed by Jaya Krishna Das Gupta*
*at the Vidya Vilas Press, Banaras.*
1951.

# प्रस्तावना

श्रीमत्पुराणसंहिताविषये विदांकुर्वन्तु तत्रभवंतो भवंतः, पुराणमुनिर्भगवान् श्रीवेदव्यासोऽष्टादशपुराणानि सोपौपपुराणानि महाभारत ब्रह्मसूत्रादिकं च कृत्वानंतरं विचारयामास—अतः परमन्यदपि किंचिज्ज्ञातव्यं मदवतारप्रयोजनं वावशिष्यते न वेति, चिन्तयत्येवं कृष्णद्वैपायने खल्वेकदा "अक्षरात्परतः पर" इति भगवती श्रुतिर्विद्युत्सन्निभवर्णैर्ध्यानपथमागता। विलोक्यैनां किमस्या यथाश्रुतमेवार्थः, उत परतःपदमक्षरपदस्य विशेषणम्, इत्थं च पुरुषद्वयं प्रतिभाति, यथाश्रुतेऽर्थे तु "अक्षराद्यः परस्तस्मादपि कश्चित्परः" इति पदार्थत्रयं सूच्यते। अथ को नु वास्तवोऽर्थोऽस्या इति चिरं विचारयन्नपि याथार्थ्यं नाप भगवान् बादरायणः। पुनरपि व्यचारयामास कं सर्वज्ञं सर्वदर्शिनं शरणं यामि। नारदसनकादिष्वपि मच्छंकां सतां हृदयतापिनीं निवारयितुमिमां न भाति सामर्थ्यमिति। इत्थं हि लोके तच्छंकापकर्तारमज्ञात्वा जम्बूद्वीपकेन्द्रवर्तिकनकाचलमेरोर्गुहामासाद्य वर्षशतत्रयं दुश्चरं तपश्चचार। ततस्तपसा तेन प्रसन्नाश्चत्वारो वेदाः स्वस्वरूपं द्विपादहस्तनेत्रं जटामुकुटमण्डितं दर्भमुष्टिकम्मृगत्वङ्मण्डितांसं ब्रह्मलोकदृश्यं दिव्यमृषये दर्शयित्वा तस्याश्च श्रुतेर्यथाश्रुतमेवार्थमुपदिशन्तो ब्रह्मांडाधिपतीनामक्षरवासनाभूतानां बृहद्दर्शनार्थं वैराजीधारणयोपयुपरि गच्छतां द्रुहिणहरिरुद्रेशसदेशानां ध्यानपथावतीर्णमक्षरहृदयभूतं गोलोकं वर्णयामासुः। ततः परतः परविषये ऋषिणा पृष्टास्ते निगमा गौरीनाथं सर्वसंशयछेत्तारमीशं विज्ञानपरं तत्त्वार्थदर्शनं लोकपावनं कालमाययास्पृष्टं निर्दोषं भ्रमज्ञानविवर्जितं सत्यवक्तारं सत्यलभ्यं सतां गतिं पशुपतिं शरण्यं तस्मै ह्यदर्शयन्। श्रीव्यासोऽप्यन्तर्हितेषु तेषु तत्रस्थ एव 'ॐ नमः शिवाय' 'शिवाय नमः' इति वा पंचाक्षरीं विद्यां जपन्मनसा महादेवं शंकरं शरणं गतः। भगवानाशुतोषोऽपि महता तेन तपसा संतुष्टः सन्नाविर्भूय पुरतस्तस्य परात्परतत्वं तस्मै वर्णयामास, यत्पूर्वं श्रीपार्वत्यै प्रकाशितमासीत्। यथा—'पार्वत्यै मे प्रकटितं ज्ञानमेतन्न कुत्रचित्। पुनस्त्वयाग्रे गदितं ज्ञात्वा विष्णुकलामिति' ।२५।६६। इत्थमस्याः संहिताया वक्तृबोधव्यपुरःसरं ज्ञाते महिम्न्यपरपरविद्याभ्यामप्यधिकं माहात्म्यमिति स्पष्टमेवावबोद्धुं शक्यते, यतो हि ऋग्यजुःसामाथर्वशिक्षाकल्पव्याकरणनिरुक्तच्छन्दोज्योतिषेतिहासपुराणन्यायमीमांसाधर्मशास्त्रशारीरकसूत्रागमतंत्रसंहिताद्या इमाः सर्वा विद्या अपरां विद्यां नातिवर्तन्ते। परया च विद्याऽदृश्यमग्राह्यमगोत्रमवर्णमचक्षुःश्रोत्रमपाणिपादं नित्यं विभुं सर्वगतं सुसूक्ष्मं भूतयोनिमव्ययं सर्वत आत्मभूतं कूटस्थमक्षरं' ब्रह्माधिगम्यते, धनुर्गृहीत्वौपनिषदमित्यादिश्रुतेः। एतादृशं ब्रह्मसूत्रगीतं भूतयोनिं परविद्याविषय-

---

१. क्वचित्प्रकृतिरप्यक्षरत्वेनोच्यते यथा स्कान्दे—'अपरं त्वक्षरं या सा प्रकृतिर्जड-

मक्षरं ब्रह्म त्वस्याः खलु श्रीपुराणसंहितायाः प्रथमेऽध्याये २१ श्लोकतः व्यास-संशयाकारानुविधायित्वेनैव ('तस्मादपि परः कोऽसौ' इत्यादिवाक्येन) पठितमिति। पुनश्च निगमकल्पतरुफलभूताच्छ्रीमद्भागवतादप्यस्याः संहितायाः (शास्त्रस्य) माहात्म्यमुपर्येव, श्रीव्यासस्यान्तिमसंदेहनिवर्तकत्वादागमनिगमपुराणदर्शनसंहिताज्ञानपर्यवसायित्वाच्च। "पुराणसंहितां च चक्रे पुराणार्थविशारदः।' वि० पु० ३।६।१५। 'पुराणसंहितां चक्रे सूतो व्यासप्रसादतः।' अ० पु० १५०।३१। इत्यादिग्रंथैर्ज्ञायते हि भगवान्वेदव्यासो वेदशंकराभ्यामधिगतां परायाः परां परब्रह्मविद्यामिमां सूतायैवोपदिष्टवान्, 'व्यासप्रसादादधिगतशास्त्रसबोधनेन चे'ति प्रमाणात्। सा चेयं परब्रह्मविद्या श्रीपुराणसंहिता शिवेन व्यासाय तेन सूताय तेन च शौनकादिऋषिभ्य उपदिष्टा। पश्चाद् ब्राह्मणैर्धृतविद्यातपोव्रतादिभिर्दैवीसम्पत्तिशालिभिर्धार्मिकीषु प्रजासु चिर रक्षिता। अथ च गच्छति काले जनानां दौर्भाग्यात्कलेः प्रभावाद्धर्मदूषकाणां मौहम्मदानां पैशाचधर्माश्रितानां म्लेच्छानां कठोराक्रमणेनात्याचारेण महासुरीसंपत्प्रभावेण च सत्यधर्माचारविचारयोगतपोविद्यादानादिदैवीसंपत्त्या सहेयं भगवती श्रीमती निगमागमसंहितासु श्रेष्ठतमा श्रीपुरुषोत्तमपरब्रह्मप्राप्तिसाधनभूता 'श्रीपुराणसंहिता' कलिमलदूषितानां मंदभाग्यानां नराणां मध्यतस्तिरोभूय भगवदन्तिकं सप्राप्ता विराजति स्म। अथ चास्मिन्सुमुखनाम्नि ब्रह्मांडेऽष्टावरणसवीतेऽष्टाविंशतिकलेः प्रथमचरणे गतपचसहस्रवर्षे श्रीनित्यधामविहारिणीनां चिदानंदस्वरूपाणां रसवियोगदलमापन्नानां श्रीभगवत्प्रियाणामविर्भावो बभूव। नित्यधामाधीश्वरी च समस्तप्रपचोल्लासवर्जिता श्रीचिदानंदात्मिका परमा शक्तिः श्रीमहाराजराजेश्वरी श्रीश्यामाख्या श्रीसुंदर्या आनंदाया वासनायामिह सद्गुरुश्रीदेवचंद्रनाम्ना कपटनृवपुर्दधार। स च परात्परो भगवान्महाराजराजेश्वरः पूर्णपुरुषोत्तमोऽपि प्रमोदायां स्वशक्ताविन्दिरायामन्तर्भूय श्रीमिहिरराजनाम्नेह सर्वजनलोचन गोचरोऽभवत्। संवत्सरे १६३८ मितावाश्विनशुक्लचतुर्दश्यां मरुदेशेष्वमरकोटिनगर्यां लब्धजनिर्भगवान् श्रीदेवचंद्रश्च भगवच्छ्रीकृष्णवियोगविरहविशोषितान्तः परित्यक्तस्वजनधामधराविभवः परिपूर्णं श्रीभगवन्तमन्वेष्टुं महीं बभ्राम। अवगततत्तत्सम्प्रदायाचार्यावेदिताखिलतत्त्वराद्धान्तोऽपि न क्वापि परमा शान्तिमगात्। तत्काले च किलाखिलभूमंडले श्रीवृंदावननिवासिनः स्वामिश्रीहरिदासस्य श्रीश्यामाश्यामोपासकस्य भागवतमूर्धन्यस्य धवलकीर्तिर्ज्योत्स्नेव दिग्विदिक्षु भगवत्प्रियेषु नितरां व्यद्योतिष्ट। श्रुत्वा तन्महिमान-

---

रूपिका। श्रीः परा प्रकृतिः प्रोक्ता चेतना विष्णुसंश्रया॥ तमक्षरं किल प्राहुः परतः परमक्षरम्। हरिमेवाखिलगुणमक्षरत्रयमीरितम्॥'

ममरकोटनिवास्यपरोऽपि कश्चिद्धरिदासो वैष्णवमुखाच्छ्रीमद्भागवतश्रवणा-दाप्तभगवद्विरहवैराग्यस्त्यक्तस्वकुटुम्बस्तुच्छीकृताकब्बरपातशाहामात्यपदवि-र्विविधसंप्रदायनानामतालोकनजातसंशयो भगवत्प्राप्त्याशया श्रीवृंदावनं धाम जगाम। तत्र तपसा व्रतेन दुष्करनियमेन गुरुशुश्रूषया स्वगुरुं श्रीहरि-दासं सततमतोषयत्। संतुष्टश्च स भगवान्कृपापीयूषवर्षी स्वामी श्रीहरि-दासस्तं दैन्यादियुजं गुरुसर्वस्वं स्वप्रियशिष्यं हरिकृपापात्रं श्रीकृष्णविरहिणं जितेन्द्रियं भगवत्सेवाधिकारिणं वीक्ष्यातिकृपया भगवदिच्छया च तस्मै स्वसर्वस्वं श्रीभगवंतं दिव्यं स्वयंभुवं श्री "बाँकेविहारी"नामानं स्वसेव्यमंति-मावस्थायांसमार्पयत्। सोऽपि हरिदासस्य प्रियशुश्रूषको हि सेवकोऽपर-हरिदासनामा खलु परमभागवतः संवत्सरे १६३२ मितौ श्रीस्वामिहरिदासा-नुग्रहाद्भगवंतं[1] श्रीबाँकेविहारिणमादायानिच्छयापि गुरुप्रेरितः स्वपुरमुमर-कोटनगरमाययौ। ततस्तदनंतरं भोज(पुरी)नगरं गत्वा स्वगुर्वाज्ञया श्रीश्यामाश्यामोपासनाविधिं प्रचारयामास। अथ च हरिमन्वेषयन् भगव-द्विरहेण तपसा व्रतेन भगवदन्वेषणभ्रमणश्रमादिना वा संशोषितगात्रो दुर्ब-लेन्द्रियः परिभ्रमन् भगवद्विरहातुरो भगवान् श्रीदेवचद्रोऽपि तच्छ्रीहरिदासा-श्रममाजगाम। तत्र च विनयेनार्जवेन शुश्रूषया तपसा च श्रीहरिदासमतो-षयत्। स चैनमधिकारिणं मत्वाथ विधिना दीक्षयामास। दीक्षितश्च श्रीदेव-चंद्रो गुरुसेवया श्रीभगवंतं तं बांकेविहारिणं प्रसन्नमकरोत्। तदनंतरं भग-वता श्रीबालमुकुंदेनाज्ञप्तः स्वामी श्रीहरिदासः श्रीबाँकेविहारिणो वस्त्रं सेव-

---

1. यथाह भट्टतुलजारामस्तारतम्यसागरे—'हरिदासस्वामी कृपा मोहे कीनी, सेवाश्री-बंकविहारी की दीनी।' सुंदरसागरेऽपि–'शिष्य स्वामीहरिदासजी के जेही, श्रीहरिदासभक्त-(जन) हे तेही। सेवा करिके गुरु रिझाये, स्वामी हरिदासपरमसुख पाये॥ तो सेवा बांके-विहारीजी की दीनी, गुरु ने कृपा सबोंविध कीनी।' १८।१४। एवमेव १६ प्रकरणेऽपि–'तब कृपा करिकें दई, न राख्यो अंतर कोय। श्रीबांकेविहारीजीकी, सेवा दीनी मोय॥७४॥ सो स्वामीहरिदासजी, कीनी कृपा निरवान, सेवा बांकेविहारीजी की, दीनी स्वरूपनिधान॥७६॥' ननु 'अतः प्रतिकृतिं तस्य हैमीं शैलीं च राजतीम्। मृण्मयीं दारवीं चापि त्रपुजां वा मनोहराम्॥ चैत्रीं चा(वा)पाद्य (मूर्तिमापाद्य) संस्थाप्य रम्यसिंहासनोपरि॥३३।८६।' इत्यादिप्रमाणैर्मूर्तिपूजाया विहितत्वेऽपि 'ए पूजतसब पत्थर' २९। 'पत्थरपानीआग पूजत, किन जानी नाहक्क तरफ। कह्या दरिया हैवानका, समझ न करै एक हरफ' (खु० १।४१) इत्यादिवाक्यादक्षरातीतपूजकानां कृते वृक्षस्य भौमस्य शस्त्रयादीनां वा पूजनस्य निषेधदर्शना-त्प्रत्यवायकरत्वमिति न च वाच्यं, खिजडापंथिभक्तैर्जामनगरे चिराद् वृक्षपूजनस्य सूर्यपुरे बहुचरीदेव्याः सशिवायाश्च पूजनस्यानिशं क्रियमाणत्वेऽपि दोषादर्शनाल्लाभस्य च भूरि-वर्धमानत्वान्मूर्त्यर्चायामविप्रतिपत्तिः प्रतीयते सर्वेषामिति।

नार्थं श्रीदेवचंद्रायाददात्। तां च मनोहरां दिव्यां श्रीवस्त्राभरणसेवां हरेरादाय श्रीदेवचंद्रः श्रीहरिप्रेरितो जामनगरमागत्योषित्वा 'श्रीश्यामजीमंदिरे' चतुर्दशसमाः सततं नियमेन श्रीमद्भागवतसंहितामशृणोत्। शृण्वतश्च भगवद्गुणानुवाद श्रीमद्भागवतं श्रीभगवान्करुणावरुणालयः सद्यो हृद्यवरुद्धोऽभूत् पूतात्मनः श्रीदेवचंद्रस्य। हृद्यवरुद्धश्चास्मै हरिरीश्वरः संवत्सरे १६७६ मिताश्विनकृष्णचतुर्दश्यां भानुवासरे प्रथमप्रहरे सप्तत्रिंशद्वर्षवयस्काय सच्चिदानंदविग्रहो भक्तानुग्रहतत्परः किशोराकृतिरच्युतो रसो वै सः श्रीकृष्णो दर्शनमुपदेशञ्च ददौ। तदा यद्रहस्यं श्रीशिवेन श्रीपार्वत्यै श्रीमाहेश्वरतंत्रे वेदशिवाभ्याञ्च श्रीकृष्णद्वैपायनाय श्रीपुराणसंहितायां हि प्रकाशितं तत्सर्वं रहस्यं श्रीभगवद्दत्तं श्रीदेवचंद्रस्य हृदये स्फुरितमभूत्। भगवान् श्रीकृष्णचंद्रो निजदर्शनं दत्वा यत्स्वरहस्यं स्वधनं श्रीदेवचंद्रायाददत्तदेव परब्रह्मविद्यारहस्यं सांगं भगवान् श्रीदेवचंद्रोऽपि भगवते श्रीमिहिरराजाय दत्तवान्। श्रीमिहिरराजोऽप्यवगतवेदचरमरहस्यजातपरमानंदो विनयार्जवादियुक् परमतपसा भक्त्या श्रीगुरुं हरिं च संतोषयन् त्यक्तस्वपरिजनस्तत्रैव गुरुसन्निधाववसत्। अथैकदा तपसा जर्जरितगात्रं भगवान् श्रीदेवचंद्रः श्रीमिहिरराजमवलोक्य जातकरुणः खलु आशयवानाह—'त्वं गत्वा गुर्जरदेशान्समाहेश्वरतन्त्रां श्रीपुराणसंहितां सुंदरीतंत्रं सनकादिकसनत्कुमारसंहिताञ्चानयेति'। गुरोर्भगवतस्तां दुःसाध्यामाज्ञामादायोध्दृतावेशेन गच्छता पथि प्रयतात्मना हि तेनैक आश्रमो रमणीयो दृष्टः कस्यचिद्ब्रह्मचारिणः। तत्रस्थो ब्रह्मचारी जटामुकुटधारी विशालमनोहरनयनः प्रलंबबाहुर्निगूढजत्रुर्नूतनजलधररुचिः प्राणभृतां हृदयंगमः श्वेतांशुकपरिधानश्च श्रीमिहिरराजमाहूय विदिततद्वृत्तांतो बहूनदर्शयत्तस्मै किल ग्रंथान्। अथानंतरं वीतस्पृहाय श्रीमिहिरराजायोक्तकतिपयग्रंथसहितां श्रीपुराणसंहितामर्पयित्वाऽमूल्यं 'गच्छ ते भद्रमस्त्वि'त्युक्त्वा तं प्रस्थाप्य स भगवान्ब्रह्मचारी भवभयापहारी परोपकारी तत्रैवान्तरधीयत। तस्य स्मितवीक्षणादिभिराकृष्टमानसो भगवान् श्रीमिहिरराजोऽपि यावत्परावृत्यावलोकयति तावत्तत्सर्वं भगवत्कृतिं मत्वाहो न मयावबुद्धोऽक्षिपथस्थोऽपि भगवानिति विरहव्यथाव्याकुलान्तस्तत्रैव मूर्च्छामवाप। मुहूर्तमात्रेण चोत्थाय गतदिग्विदिग्ज्ञानस्सर्वभूतानभिलक्षितेनोद्धृततद्ग्रन्थभारेण भगवता करुणया गृहीतहस्तः स्वगुरुसन्निधिमानीतो ययौ। स चापि श्रीसद्गुरुं श्रीचाकलामंदिरनियतनिवासं दंडवत्प्रणम्य सावधानीभूतो मर्त्यलोकात्तिरोहितां द्युलोकलभ्यां दिविषद्दुर्लभां परमेशदत्तां तां संहितां तस्मै समर्पयामास। तं च तामपि तथाविधमवलोक्यातितरामाश्चर्यं दर्शयन् भगवान् श्रीदेवचंद्रोऽवगतसर्ववृत्तांतो भक्ताननुगृह्णन्नुवाचेन्दिरावताराय 'संहितेयं परमपावनी भगवत्स्वरूपा तत्सिद्धांतपरार्थगंभीरा दिव्याचरै-

लिखिता स्वसकाशाच्चिदाकाशाद्ब्रह्मणैवास्मै श्रीमिहिरराजाय दत्ता निजजनोद्धारणार्थ'मिति। (श्रीमिहिरराजाभिमुखं वीक्ष्य) 'सौम्यातोऽस्याः वास्तवार्थानां स्फूर्तिरपि तवैव भविष्यति भावितात्मनां नृणां मध्ये प्रचारश्च भविते'ति। इत्थं श्रीहरिशकाशाल्लब्धां दिव्यामिमां श्रीपुराणसंहितां भगवान् श्रीमिहिरराजाचार्यः परमज्ञानिने विदेहाय परमहंसधराय बुंदेलखडाधीशाय चंपतिनृपतिनंदनाय श्रीछत्रसालाय पन्नावतीकेनयोर्नद्योरन्तिके विन्ध्याटव्यां पन्नावत्यां स वै पुरि स्थितः श्रावयामास। श्रुत्वा च तां कृतसलीलश्रीकृष्णसाक्षात्कारः प्रवृद्धधृत्युग्रमपौरुषः स वीरः छत्रशालो यवनकालो ढिल्लीशावरंगजेबासुरप्रहितानसुरान्मियांम्लेच्छान्बहुशो निहत्य विस्तृतां स्वराजधानीं पन्नावतीपुरीमकरोत्। विजयाभिनंदनबुद्धकल्क्यवतारप्रियसेवकः संवत्सरे १७०६ ज्येष्ठशुक्लतृतीयायां शुक्रवारे निजधाम्न एत्येहलब्धजनिर्धर्मपालितावनिस्तारतम्यज्ञानमहिम्ना मोहाब्धौ पुष्करपलाशवन्निर्लेपः वीतलेपो भगवद्धर्मं श्रीपुराणसंहितागीतं प्रजाभ्यः श्रावयित्वा सं० १७८८ पौषकृष्णतृतीयाभृगुवासरेऽपराह्णे श्रीप्राणनाथदत्तां तां दिव्यां पुराणसंहितामादायावनावेकं स्वकचुकं विनिक्षिप्य निजतुरगसहितमंतरधत्त मायापुर्यां स भूपालः छत्रशालः। निजधाम गते श्रीछत्रनरेशे पूर्वं श्रीप्राणनाथश्रावितः स्वसंसदि पुराणसंहिताया यावद्भागः श्रीब्रह्मर्षिस्वामिश्रीनवरंगगोवर्धनभट्टलालदासभीमभट्टविद्वद्दमनभट्टाचार्यादिभिः संगृह्य लिखितः सौराष्ट्रगुर्जरमेदपाटमालवबघेलबुंदेलखंडनेपालादिविषयेषु प्रचारितस्तदनु कलिमलदूषिताशयानां मानवानां मंदभाग्यतो विच्छिद्येतस्ततः खंडशोऽनादृतः पर्यस्त आसीत्स एव हरिप्रेरणया मया परिश्रमेणातिदीर्घेणैकत्रीकृतः। नैतावानपि भागः कैश्चिदप्यद्यावधि विद्वद्भीरैर्यैरासादितो भूवलये क्वापि। वायुपुराणेऽपि उत्तरार्द्धे ४२ अध्याये केवलमस्याः संहितायाः अध्यायद्वयमात्रमेवोपलभ्यते मुद्रितम्। इत्थं वै दुष्प्राप्य एतस्मिन्ग्रंथे श्रीकृष्णानुग्रहतो मया खलु प्रतित्रयमासादितम्। एका प्रतिस्तु नवानगरे श्रीमत्खिजडापंथाद्यप्रवर्तकबावा श्रीतेजसिहजीद्वारा सं० १७९९ कार्तिककृष्ण १४ शनौ विनिर्माय प्रतिष्ठापिताच्छमीमदिरादादरणीयानां नेपालदेशत्रेलमजुमराज्य-तारकूमडलवल्थुमग्रमवासिखसबावाजीकमलदासतनुलब्धजनिश्रीधनिदासमहोदयानां शमीमतादिपीठस्थानां सकाशादुपलब्धा, शुद्धप्राया संपूर्णा च। द्वितीया च श्रीमगलपुरीब्रह्मतीर्थे श्रीमिहिरराजाचार्यद्वारा गुर्जर सं०।१७२९ मितौ प्रतिष्ठापितात्स० १८९९ माघशुक्ल ५ शनौ महासिद्धेनाचार्यश्रीश्यामदासेन[1] महात्मना जीर्णोद्धारिताच्छ्रीकृष्णप्रणामिमहन्मंदिरादुपलब्धा मूलमात्रं

१ महात्मासौ श्रीश्यामाचार्य आसीत्प्रणामिमोटामंदिरस्य सप्तमः पट्टाभिषिक्तः। स० १९११ माघवति ३ शनौ स्वतनुं जहौ। समाधिश्चास्य सूर्यपुरपूर्वभागे श्रीतपस्याः

शुद्धतरा खंडिता च। कश्चिद्भागोऽस्याः सूरतगोपीपुरास्थश्रीमुकुंददासभागिनेयभावसारमोटामोरारदासमंदिरादुपलब्धो महाराजामरेश्वरठाकोरस्य। तृतीया च राजस्थानमेदपाटमुख्यभूतोदयपुरे सूर्यपोलांतर्वर्तिश्रीभगवन्नवरंगनाथादेशवशवर्तिमहाराणाश्रीअमरसिंहाविनाशिसाहाय्यविनिर्मितराजमंदिरात्प्रेमिद्वाराभिधात्प्राप्ता प्राचीनतमा शुद्धा खंडिता च। मुद्रणानतरं श्रीनवानगरस्थश्रीप्रणामिधर्मादिपीठश्रीचाकलामंदिराधीश्वरश्रीव्रजलालविट्ठलजीमहाराजसौजन्यादाप्तैका शोधनाय शुद्धा खलु। इत्थं वै महता प्रयासेन व्ययेन च संपादिता स्वरूपावाप्तिसाधनभूता परब्रह्मविद्यापरनामधेयेय श्रीमती पुराणसंहिता गोपिता खलु मया कंचित्कालम्। अथैकदासच्चिदानंदमूर्तिः किशोराकृतिर्नित्यधामविहारी कृपापारावरो भगवानद्धादिदेश 'मदाज्ञया प्रवर्तितः सुदरीन्दिराभ्यां प्रकाशितोऽस्मत्सिद्धान्तसन्मार्गोऽयमिदानीमासुरभावं गतैर्म्लेच्छान्नकुसगसंसर्गदूषितैर्म्लेच्छविद्याप्रभाववीतधर्माधर्मज्ञानैर्दुराशयैर्धर्मध्वजिभिर्वैडालिकैर्धर्मनिदकैर्जीवैरत्यन्तकलुषीकृतोऽतस्त्वमिमां संहितां मदनुग्रहात्त्वल्लब्धां मज्जनोद्धाराय प्रकाशय, न चैवं त्वामघोऽभिभविष्यति कैश्चिदकृतपुण्यैश्चाचिप्तमपि त्वां न त्यक्ष्यामि प्रत्युत कृतत्वत्सन्निधिस्त्वद्वाक्श्रद्धालुष्वहमनिशं गोचरतां गमिष्यामीति'। अथ प्राप्येमं भगवदादेशमेतत्संहिताप्रकाशनार्थमादिष्टो मया श्रेष्ठी श्रीजयकृष्णदासहरिदासगुप्तः सहर्षमिमां प्रकाशितवानसौ श्रीहरिकृपापात्राह्ः। संहितायामस्यां च "अक्षरात्परतः परः" इति श्रुतेरेवार्थः सम्यक्तया निरूपितः। तस्य चार्थस्य पुराणमुनेर्व्यासस्य सिद्धांतत्वेनाभिमतत्वादस्य शास्त्रस्यापि 'सिद्धांतसंहिता' इत्यभिधानत्वम्। पु० सं० ३४।६०। अक्षरस्य ब्रह्मणो निर्णयो ब्रह्मसूत्रे, तत्परस्य च रहस्यागमेषु कृतमेव किं तु अक्षरात्परतः पर इत्यस्य निरूपणं त्वस्यामेव कृतम् इतोपि विशेषविस्तृतसांगनिरूपणदर्शनाभिलाषच्चेत्तर्हि श्रीप्राणनाथमुखनि-

---

पश्चिमतटे अश्विनीकुमारनाम्नि क्षेत्रे कृतः। चमत्कारपूर्णस्य समाधेरुपरि रेल्वेलाईनस्य ब्रीज (सेतुः) आगत.। रेल्वेकर्मचारिभिस्समाधिर्यावत्खनितस्तावद्दिव्या नूतनाम्लानकुसुमस्रक् प्रज्वलद्दीपधूपादिधूपिता श्वेतश्मश्रुजटामुकुटतुलसीमालादिविभूषिताऽदृश्यत। आश्चर्यपारावारे निमग्नैस्तैस्ततस्थानात्सेतुमपसार्य रेल्वेलाईन धनुषाकारतया नीयमाना सूर्यपुरस्टेशनेनान्वसंधीयत। दृश्यमिदमयाप्याश्चर्यकरमनुमीयते। तत्समाधितश्च नागरिका अद्यापि स्वभावानुसारेणाभिलषितं लभंते।

१. एतत्संहितामुद्रणकाले सत्कर्मविघ्नभूतैः प्राणनाथट्रस्टकमेटीमेंबरापसदैरन्तरात्तशर्मीमतैराचार्यश्रीगोपालदासशर्मैर्निरयोन्मुखैर्माचांप्रबाहीकेइ प्रेनेत्यादिभिर्रिव्यासूसावासभिचोतितमपि त्वां जीवयिष्यामीति तथा त्वत्कृत्या वैडालिका दुष्टाः कृष्णप्रिया इष्टाश्च सततं भविष्यन्तीत्यपि संसूचितं तेनैव।

गतश्रीमहावाणीमध्यपाती 'प्रक्रमः' इति ग्रंथोऽवश्यमेवादरणीयः। सच्चिदानन्दस्याक्षरात्परतः परस्य चिदानंदस्वभावत्वेन श्रीश्यामाख्या स्वामिनी काचित्परमा शक्तिः, सदानंदस्वरूपत्वेन श्रीकेवलं ब्रह्म, सच्चिन्मात्रमूर्तित्वेन चाक्षरमभिमतम्। बृहतश्चाप्यानंदस्वरूपः श्रीगोलोकनाथः, चित्स्वरूपं शबलं ब्रह्म, सत्स्वरूपं चाऽव्याकृतं प्रकृतिर्निगद्यते। एतत्सर्वं सुस्पष्टं श्रीप्राणनाथेन सिद्धांतितम्। तस्य चेत्थं मंगलं वृत्तम्–पंचाब्दवयस्त उद्बुद्धशुभसंस्कारजातवैराग्यः श्रीदेवचंद्रो ब्रह्मान्वेषणतत्परो वारद्वयमाप्तभगवत्स्वरूपदर्शनः पुनर्नवानगरे श्रीश्यामसुंदरमंदिरे श्रीनित्यवृंदावनानंदिश्रीकृष्णाल्लब्धस्वात्मबोधः कृतदिव्यब्रह्मपुरसाक्षात्कारः सं० १६७८ मितौ परमभागवताय श्री'गांगजी' इत्यस्मै परात्परतरां ब्रह्मविद्यामुपदिश्य भगवदुक्तविधिना सिद्धांतप्रचारमकार्षीत्। प्रतिबुद्धश्च श्रीगांगजी सं० १६८२ मितावाषाढे राजमंदिराद्भगवन्त श्रीदेवचंद्रं स्वगृहमाहूय भगवद्बुद्धया वाचा कर्मणा संसेव्य श्रीकृष्णमतितरामतोषयत्। सतुष्टश्च परमात्मा व्रजरासलीलाविर्भावतः श्रीगांगजीगृहं तीर्थं कृत्वा स्वरूपदानेन परमानुग्रहेण तं सिद्धस्वरूपमकरोत्। इत्थमाप्तनिजस्वरूपं कृतकृत्यं स्वशिष्यं निरीक्ष्य सफलप्रयत्नो हृषितो भगवान्देवचन्द्रो राजकर्मचारिनगरश्रेष्ठिधनिकादिवर्गैर्निरंतरमाकीर्णं सामान्यवर्गैर्दुष्प्रवेशं तद्भवनं विहाय दीनदयालुः स किल स्वसदनं राजमंदिरं गत्वा सामान्यवर्गमपि शिक्षादीक्षादानादिनानुगृह्णन्कतिचिद्दिनान्युवास। अथ च श्रीगुरुचरणसंलग्नमनाः श्रीगुरुमेव सर्वस्वं मन्यमानो लक्षाधिपतिः स श्रेष्ठी श्रीगुरुचरणोज्झितं स्वहर्म्यं वीक्ष्य सततसंतप्तहृदयो दीन आर्जवेन गुरुसंमुखं गत्वा स्वगृहनिवासार्थं पुनः पुनरभ्यर्थयामास। स्वप्रियशिष्यानुनयमंगीकृत्य भगवान् श्रीदेवचन्द्रो हि सं० १६८६ चैत्रशुक्ल १४ मितौ भगवदुपासकैः रसिकैः सादरं नीयमानः श्रीगांगजीगृहमाजगाम। स वै श्रीगांगजी तदानीं स्वजीवनं धन्यातिधन्यं मन्वानः स्वजनं ससर्वस्वं च स्वगृहं श्रीसद्गुरवे देवचंद्राय समर्पयति स्म। श्रीदेवचंद्रश्चात्र सततं भक्तिप्रवणचित्तैर्विनयदैन्यादिसद्गुणसमुपेतैर्गुरुस्वैः स्वशिष्यैः संसेव्यमानोऽथातस्तत्सदनं (चाकलामंदिरं) विहाय क्षणमपि नो कुत्रापि जगामालयाय। अत्रैव खल्विन्दिराविर्भावस्वरूपः श्रीमिहिरराजः सं० १६८६ मार्गशीर्षशुक्ल ९ भौमे दीक्षितः स्वरूपञ्चालभत। अयञ्च जीवमोक्षार्थं निजधाम्नः सं० १६७६ आश्विन कृष्ण १४ रवाववतीर्णः। अस्य हृदि पञ्चविधावताराणां स्वरूपाणां वा सन्निपातः। सं० १७१४ भाद्रपदशुक्ल ८ रवावयं श्रीनित्यवृन्दावनेश्वर्याः साक्षात्कारतो दिव्यवाक्प्रकाशको जातः। सं० १७२२ मितावसौ सर्वं परित्यज्य महादशां प्राप्य देशात्प्रवव्राज। जीवान्मोहमहोदधेरुद्धारयन्सौराष्ट्रकच्छसिन्ध्वादिदेशेष्वटन् गुर्जरदेशशेखरीभूतां श्रीसूर्यपुरीमाजगाम। सैयदपुराभगवाननायकशेरीमध्ये मोहनदास-

भक्तभवने निवसन्पापिनो यमपाशाद्रक्षयन्ननंतरं सं० १७२८ आश्विन शुक्ल १४ श्यां सैयदवाडांतर्मालिश्रीशिवजीभाईगृहपार्श्ववर्तिसदनमागत्य भगवत्सिद्धांतप्रचारमकरोत् । लब्धप्रबोधाश्चात्र श्यामभीमभट्टादयो विद्वांसो भागवतैः संभूयाप्रतिमप्रतिभमेनमभिषिषिचुः । तदानीं खल्वस्य तनौ भगवच्छ्रीकृष्णस्य साक्षादाविर्भावः सर्वैर्व्यलोकि । सर्वाणि हि तीर्थानि तत्र मूर्तिमंति संति पामरैरप्यदृश्यंत । श्रीश्यामाश्यामसामरस्यसञ्जातश्रीयमुना महाराज्ञी हि स्वयं श्रीहस्ताभ्यां श्रीमिहिरराजमभिषिषेच । गतेष्वपि सर्वेषु तीर्थेष्वसौ खलु कालिन्द्यन्तःसलिला सती तत्रैवांतर्हितातिष्ठत् । सं० १९९६ मितौ वै सा महासिद्धाय श्रीब्रह्मतीर्थमंगलपुरीपट्टाभिषिक्ताय श्रीमद्गोपालाचार्याय स्वमूर्तिं दिव्यां दर्शयित्वा मामपावृतां कुरु मज्जनहितार्थमत्रभाविश्रीकृष्णलीलादर्शनमेव मत्प्राकट्यचिह्नमूहनीयमित्युक्त्वान्तर्दधे । तद्दर्शनजातसंमोदः स चाचार्योपि तन्निर्दिष्टस्थले कूपाकारतया मृदावरणमुत्सार्य तदुक्तेनैव विधिनादौ हिमगिरिशिखराद्गंगोत्तरीयमुनोत्तरीनामस्थानाद्गङ्गायमुनेऽप्यावाह्य मंदिरांतःसिंहासने च तन्निर्दिष्टदर्शनलीलामपि निरीक्ष्याथात्मानं कृतार्थं मन्यमान एतद्वृत्तस्मृत्यर्थं श्रीयमुनैवैतत्कूपेऽतर्हितेति श्रद्धावतां प्रत्ययाय शिलालेखश्चैकं तत्रास्थापयत् । एतत्स्थलमिदानीं गुर्जरगिरायामपि "ब्रह्मतीर्थ, मंगलपुरी, श्रीमत्प्रणामिमोटामदिरमि" त्यादिनाम्ना विश्रुतमस्ति । यद्यपीदानीमेतत्स्थलं विरोधिभिर्वैडालिकैस्सङ्करैर्द्रव्यदासैराचार्यशप्तैर्यथाशक्ति निंदितन्तथाप्यदोऽधुनापि नो जहाति निजमहिमानम् । अत्रैवातिसन्निकटवर्तिश्रीसूर्यपुत्रीं तापीमंतरेव संगम्य योजनांतवर्तिवारिधिमभियाति सा हि श्रीकृष्णभक्तिप्रदा भगवती कालिन्दी । इत्थं हि सूर्यपुरे विद्वद्गणाकीर्णे संहितोक्तधर्मप्रचारपीठं विधाय वर्षद्वयञ्चोषित्वा विद्वन्मंडलीपरिवृतः १७३१ मार्गशीर्ष शुक्ल १२ चंद्रवार इतो विनिश्चक्राम स भगवान्मिहिरराजाचार्यः । तापीनर्मदामहीसाबरमतीप्रदेशवर्तिजीवानामज्ञानावृतिमपसारयन्नहमदाबादनगरे चातुर्मास्यं कृत्वोत्तरगुर्जरमूर्धन्यं श्रीसिद्धपुरं गत्वा विन्दुसरःखिलातरवाडादिस्थलस्थस्तपोविद्याव्रतशालिनो वैदिकान्धर्मप्राणान्नृषीननुगृह्य सं० १७३३ कार्तिकशुक्लपूर्णिमायां सरस्वतीस्नानं विधाय ततश्च निःसृत्य प्रजाः प्रबोधयन् मरुमंडलस्थं मेरतानगरं गत्वा सं० १७३४ मितावानंदघनाख्यं लाभानंदं जैनयतिं प्रबोध्यावरगजेबास्याचारनिरीक्षणखिन्नान्तस्सन्धर्मं प्रचारयन् हरद्वारं कुंभसंमेलने गत्वा विजयाभिनंदनपदमलंकुर्वाणश्चानूपशहराभिधं नगरं जगाम । तत्राल्लाभगवता इंजीलजबूरतौरेत कुराणादिग्रन्थमलीकं ( मंसूख रद्द ) कृत्वा सर्वजनकल्याणाय स्वसकाशान्निजाज्ञाप्रमाणभूतो ( सनद रूपो ) दिव्य एको ग्रंथः सं० १७३५ श्रावणशुक्ल १४ मंगलेऽर्पितः । तमौरंगजिह्वाय दर्शयितुमन्यांश्चासुरानपि कयामतागमनप्रत्ययेन प्रबोधयन्

ढिल्लिकामागत्यावरंगजेबबोधार्थमकरोद्यत्नं महत् । अथ च तस्मिन्कृतभगव-
दाज्ञानादरे पीडितश्रीप्राणनाथानुचरवर्गेऽसुरेऽवरंगजेबे शापं पातयित्वा सं०
१७३६ मितावुदयपुरमागत्य माघवदि ८ सोमे वैराजीधारणायाः श्रीनिजधा-
म्नश्च सुंदरं चित्रपटद्वयं कारयित्वा भगवद्धर्मं च प्रचारयंस्ततेपि निःसृत्य
मंदसोरावरंगाबादहैदराबादोज्जयिनीबुढानपुराकोटरामनगरादिषु भ्रमन्मा-
यापुरीमागत्य श्रीछत्रशाल वीरमलभत् । सं० १७३६ माघशुदिपूर्णिमामंगल-
वारे श्रीछत्रशालाय दीक्षां चमत्कार पूर्णमसिञ्च दिव्यं दत्वानेकविधालौ-
किकीं लीला कृत्वा श्रीलक्ष्म्यवताररूपां पद्मावत्यपरपर्यायां किलकिलां नदीं
निर्विषां विधाय श्रीछत्रशालाय हि पद्मावती ( पन्ना ) नगरीपरितो हीरकनिः
सरणार्थं वरं च दत्वा, स० १७५१ मितौ कपटनृवपुस्त्यक्त्वा दिव्यं ब्रह्मपुरं
जगाम । स० १७१५ चैत्रशुदि ८ सोमे ढिल्ल्यां राज्यासनमारुह्य शाहावरंग-
जेबेन यदत्याचारः कृतस्तत्सर्वं श्रीप्राणनाथदत्तेन शत्रुसालेनासुरमर्दनावसरे
सकोचप्रसारशीलेनासिना सहसा विनाश्यावरंगासुरप्रहितान्महत्साधनसंपन्ना-
न्द्विपंचाशत्सुबान्मारयित्वा सर्वतो विजय लब्ध्वाश्रीप्राणनाथाधिष्ठिते पन्ना-
नगरे श्रीजोसेवायां[1] राज्ये च हृदयेशं हृदयप्रकाशाख्यग्रंथकर्तारं स्वपुत्रं
संस्थाप्य मऊनगर्यां स्वेच्छयैव निजाश्वेन देवदत्तेन सहान्तरधत्तेति । श्री-
तारतम्यज्ञानमहिम्ना श्रीप्राणनाथवदसावपि न वै मृतः । अस्ति च पन्नापुरे
उत्तरदिशि समीपे चौपडानाम श्रीछत्रशालस्थानं, यत्राधुनापि कदाचित्
श्रद्धावतां रात्रौ तत्र निवसतां व्रतिनां दर्शनोत्सुकानामजरामरस्य श्रीसकुंड-
लावताररूपस्य देवदेवस्य दिव्यदेहस्य श्रीछत्रशालस्य दर्शनं भवतीति
श्रूयते । संहितायामस्यां यः सिद्धांतस्स तु पठनादवगतो भविष्यत्येव किं तु
तन्निष्कर्षस्तावदित्थम् यद्यपि जगत्प्रवृत्तावनेककारणानि भवंति तथाप्यस्य
भगवल्लीलार्थत्वाल्लीलायाश्च रसरूपत्वाद्रसस्य हि भावद्वयविशिष्टत्वाद्विप्रलं-
भोन्मुखत्वे प्रातिभासिक्यादिलीलाधिष्ठानत्वेनाधोव्रजलीलोपयोगित्वमेवश्च
येन रूपेण श्रींनिजधाम्नि नित्यविहारो भवति न तेनैवाद्धा जगति विहारो
न च जगतः प्रवृत्तिरित्यत्र राद्धांतः । यथोक्तं वृंदावनमाहात्म्ये विधिना
'अहं वहामीह गति तदीयां रूपद्वयं नित्यमतोऽस्य विष्णोः । एकेन नित्यं
नियतो विहारस्तथा द्वितीयेन जगत्प्रवृत्तिः' ( हंसविलासे ४७ उल्लासे ) ।
आदिपुराणेऽपि च 'शृणु तेऽहं प्रवक्ष्यामि विष्णो रूपं द्विधा मतं । नित्यं वि-
हार एकेन चान्येन सृष्टिरेव हि' ( १०।१६ ) इति येनस्वरूपेण सृष्टिर्भवति
तत्सद्रूपं भगवतोऽक्षरं ब्रह्मेत्युच्यते, तथा चोक्तं माहेश्वरतंत्रे 'अक्षरे सृष्टि-
कर्तृत्वान्न शृंगाररसोदयः । अमायत्वाद्रसात्मत्वान्नापरः सृष्टिकृत्प्रिये' ( ७।

१. बुंदेलवंशावतंसश्रीछत्रसालान्वयः कथमिदानीमुज्झितप्राणनाथमत इतीतिहासः
सरहस्योऽन्वेष्टव्यः ।

८० )। अत्र 'अक्षरोऽप्यक्षरातीतः' ( हं० पि ३६।२८ ) इत्यादिप्रमाणेन स्वरूपद्वये भेदाभावेऽपि श्रेष्ठत्वं स्वात्परस्यैव, तच्चोक्त श्रीबुद्धगीतायां 'अधः प्रोक्तः परश्चैव ह्यक्षरश्च परात्परः' इति। अस्याक्षरस्य परात्परत्वं मृत्युंजयतंत्रेऽपि यथा—'ब्रह्मांडस्योर्ध्वतो देवि ब्रह्मणः सदनं महत्। तदूर्ध्वं देवि विष्णूनां तदूर्ध्वं रुद्ररूपिणाम्॥ तदूर्ध्वं च महाविष्णोर्महादेव्यास्तदूर्ध्वगं। पारे पु(रे)रि महादेव्याः कालः सर्वभया(व)पहः॥ ततः श्रीब्रह्मपीयूषवारिधिर्नित्यनूतनः। तस्य तीरे महाकालः सर्वग्राहकरूपधृक्॥ अत्र ब्रह्मणः सदनं सत्यलोकः। विष्णूनां-विकुंठासुनानां वैकुंठः। रुद्ररूपिणामित्यहकारावरणस्थो रुद्रलोकः। महाविष्णोरिति महत्त्वावरणस्थो महाविष्णुलोकः। महादेव्या इति प्रकृत्यावरणस्थो महादेवीलोकः। ब्रह्मपीयूषवारिधिरिति कारणार्णवः। महाकालः परमव्योमस्थो महावैकुठनाथस्तस्यैव कारणार्णवजलांतर्गतभवनं। तन्महाकालपुर फाल्गुनो ददर्शेति पूर्वेणान्वयः' इति। स च महाकालोऽक्षरब्रह्मणो जायते 'अक्षरात्संजायते कालः' इति श्रुतेः। तच्चाक्षरं ब्रह्म श्रीयुगलमूर्तिश्यामाश्यामलीलाविलासस्थानं भवति, यथोक्तं सुंदरीतंत्रे 'अक्षरब्रह्महृदये वास्तवीं विद्धी'ति। जगतश्चापि श्रीयुगलविहारनिमित्तकत्वं, यथोक्तं हंसविलासे ३६ उल्लासे 'यथेहेन्द्रियक सार्वभौमपदं सर्वतः समु-तमीक्ष्यते तद्वदतीन्द्रियपदमप्युपर्युपरि यत्तदुत्तमोत्तममिति प्रत्येतव्य। यथा सार्वभौमपदात्त्रिविष्टपं श्रेष्ठमेवमेव विचार्यमाणे ब्रह्मांडाधिपतेर्ब्रह्मणः पदं सर्वतः सुंदरं। ततोपि वैष्णवं वैकुंठपदं वंद्य। तस्माद्रौद्रं कैलासलक्षणं रम्यं। रौद्रादपीश्वरपदमुत्कृष्टं, अडबाह्यत्वात्तथैव श्रीसदाशिवसदनं सुषम, जगदादिमत्वात्। ततोऽक्षरपदं श्रेष्ठ, सकलजगद्बीजभूतत्वात्। किञ्चाधारशक्तेः प्रभृत्यक्षरांतं सकल प्रपञ्चजाल श्रीशिवशक्त्यद्वैतयुगलमूर्तिविलासाय पदं भवती'ति। अथ च येन रूपेण निजधाम्नि नित्यविहारो भवति तद्रूपस्य तद्धाम्नश्चागम्यत्वादवर्णनीयत्वात्सर्वविलक्षणत्वाच्चाक्षरपरतः परत्व श्रूयते। तत्रैव वास्तवीलीलाधिष्ठानं, यथोक्तं हंसविलासे ( ३७ उ० ) 'शिवशक्त्योर्विहारभूमिका नार्हत्येव ब्रह्मांडोदरे भवितु, इति। अस्या भूमिकाया अधस्तादक्षरपदं सौमंगल्यं पदं नारायणपदं षट्त्रिंशत्तत्वप्रपञ्चश्चास्ते। तत्र क्षरप्रपञ्चे भगवत्क्रिडार्थसंसिद्धे ब्रह्मलीलांशस्य विभवादीनाञ्चाविर्भावे बहुकारणभेदः प्रतीयते। यथा हि—श्रीनिजधामविहारिणीनामक्षरखेलावलोकनायाक्षरस्य च नित्यविहारदर्शनोत्थमनोरथपूर्त्यै ब्रह्मांडे प्रादुर्भावः, इति श्री माहेश्वरतंत्रपुराणसंहितयोः। हंसविलासे ( १ उ० ) तु हंसस्य भगवत्क्रीडाक्षेपापराधाज्जगत्यागमनं, यथा—'अथ समयांतरे सं हंसमाहूय 'रे प्रिय शुश्रूषक संतुष्टोहं सांप्रतं त्वयि, प्रार्थय स्वमनोरथमि'ति विप्रलंभितः श्रीमज्जनेन च हंसः, परकीयेति द्वैतभावस्वान्मौग्ध्येन। ( हंस आह ) भोः स्वा-

मिन् भवत्त्वरलीलाविलोकनवांछास्तीति' सविनयं प्रार्थयामास। (शिव आह) रे रे पुनर्याच्यतामित्युदीरिते तदेव याचितम्। तृतीयवारमपि तथैव। तदा तु श्रीपरमशिवेन प्रेमप्राचुर्यात्तस्मै शिक्षापूर्वकं तन्मनोरथो दत्तः' इति। श्रीव्याससंहितायामप्ययमेवार्थः समर्थितो दृश्यते, यथा–'समयव्यवधानेन त्रिवारं प्रार्थितो विभुः' (२४।२५)। प्रार्थना स्वीकृता तासामतीतेनाक्षरा-यदा' इत्यादि। आशिक्कानां समये तु 'इश्क़का अर्शअज़ीममें, रब्द हुआ बिलद। तो फरामोशीमें इश्क़का, बेवरा दिखाया खावंद ॥' (खि० १०।५०)। अर्थात् श्रीनिजधाम्नि आसक्तेः प्रेम्णः (सखीकृष्णयोः स्वस्वप्रेमप्राचुर्ये मिथः) महान्संवादोऽभूत्, तस्मादेवेन्द्रजालरूपजगत्यासक्तेर्विवेकतारतम्य-मदर्शयत्स्वामी (श्रीप्राणनाथः) इत्यादीश्कविवादस्य हेतुत्वमुक्तम्। इत्यादि-कारणानि निजधामविहारशालिनामिहाविर्भावस्योक्तानि। गोलोकधामवि-हारिणां तु आज्ञा शापो वेति। यथा—'गोपाः सखायोनुज्ञां मे' 'व्रजध्वं वै मदादेशेन वै व्रजं' 'श्रीदामवचनाद्राधाप्रयातुव्रजमण्डलं' (पु० सं० २६।५–३१-३४) 'श्रीदामा राधिकाशापात्' (१५।८१) इत्यादि। श्रीसाकेतविहारि-प्रादुर्भावे युध्दादीच्छाया हेतुत्वम्। रमावैकुंठश्वेतद्वीपवासिभूमाद्यंशानामत्रा-विर्भावे शापभूभारजिहीर्षारमेच्छापूर्त्यादिकारणमिति।

इत्थं निजधाम अक्षरः। क्षरश्चेत्यधिष्ठानत्रयं भगवल्लीलानिमित्तम्। स चानंदो हि तत्र वास्तव्यादिलीलाभिदा विहरति, तत एवास्य भूतप्रपंचस्याप्यानं-दहेतुकत्वं श्रूयते 'आनंदाद्ध्येव खल्विमानि भूतानि जायंते' इति। चिन्मा-त्रस्य तु निराकृतित्वमेव पठ्यते किं तु तद्वशादानंदस्य सतश्च साकृतित्वमपि, तथा निजधाम ब्रह्मांडश्चेत्यादिव्याहृतिः। न चात्र कश्चित्तर्कोऽनुसन्धेयः। यथोक्तं हंसविलासे (१६ उल्लासे) 'यद्यदुत्पन्नं तत्तद्विनाशीति तर्कोऽ-चिन्त्यमहिम्नि नो चिन्त्यः' इति।

रसशास्त्रेष्वडोत्पत्त्यादावुक्तानि यानि कारणानि दर्शितानि तानि च कादाचित्कान्यपि ज्ञातव्यानि। न हि भवत्यक्षरातीतलीलाविर्भावः सततं सर्वेषु ब्रह्मांडेषु, यथोक्त भगवता श्रीमता प्राणनाथेन 'ए तीन ब्रह्मांड हुए जो अब, ऐसे हुए न होसी कब। इन तीनोंमें ब्रह्मलीला भई, व्रज रास और जागनी कही' ॥ अर्थात् एकादशवर्षद्विपञ्चाशद्दिनावधि व्रजभूमौ, योगमायोद्भवे वृंदावन आधिदैविकीषु, तासु रात्रिषु, सारस्वतकल्पभूते-ऽस्मिन्नंडे च परब्रह्मलीलाविर्भावाद्यथोक्तत्रयाणामधिष्ठानानां श्रैष्ठ्यं न तथेतरेषामंडानामित्यर्थः। इत्यादिप्रमाणेन लीलाविर्भावकादाचित्केऽपि खल्वक्षरपराशक्त्याऽप्रभवाप्ययोर्विरतेस्स्वभाव एवेति ज्ञातुं शक्यते। तत्रानुशयिनस्त्रिविधगत्या विचरंति। यदा कदाचिद्भगवांस्तेषु जीवेष्वनुग्रह करोति तदानंतलीलामध्यतो द्वित्रिलीलामात्रमाविर्भावयति। या या च लीलेह

क्षरे भगवताविर्भाव्यते सा सर्वापि ह्यक्षरे नित्या भूत्वा तिष्ठति। ब्रह्मांडे वाविर्भूय पुनर्बिम्बमभियातीति केचित्।

'नानादेशविशेषेषु संभविष्यंति वै कलौ' (३१।७६) 'एवं कलियुगे घोरे वासनाः कृष्णयोषिताम्। प्रादुर्भूता भविष्यंति' (३१।८७)। 'पुनर्यास्यंति तत्पदं' इत्याद्युक्त्येदानीमपि नित्यधामसंबंधिनो जीवाः कतिचनास्मदादयः श्रीपुरुषोत्तमेन साकं तिष्ठंति, यत्संगादधुनापीहाच्युतधामलीलासाक्षात्कारो भवति।

ननु हंसविलासे ३८ उल्लासे "वैकुंठं विशिनष्टयेकः कैलासं कश्चिदंगने। स्वर्गमुत्कर्षयंत्येके स्थगितास्तव मायया॥ एकोऽतिशेरते तद्वद्गोलोकं कृष्णपालितम्। निजधामापि तान् धिग् धिग् यतस्तेऽदीर्घदर्शिनः॥ इत्यादिभिर्निजधामोत्कर्षयतामपि धिक्त्वोक्तेः किमितिनिजधामसाक्षात्कारेणेति न च वाच्यं, मायासंकुचितदृष्ट्यभिप्रायकत्वाच्छिववशक्त्युद्भूताज्ञानावृतविनाशिलोकोत्कर्षाभिप्रायपरत्वाद्वास्य, यथोक्तं तत्रैव 'उद्भूतं शिवशक्तिभ्यां तत्सर्वं यद्यपीश्वरि। तथाप्यज्ञानावृतत्वान्नश्वरं निखिलं स्मृत'मिति। यस्य शिवशक्तिभ्यां श्रीमहानारायणादक्षराच्च परतः परत्वं श्रूयते तद्दर्शिनामपि धिक्त्वे का गतिस्तददर्शिनाम्। स्यादेतत्। किं चात्रोक्तश्रीनिजधाम्नो दिगपि भगवता ''शिवेन विना न केनापि ज्ञाता। श्रीव्यासेनापि महत्तपसोऽनंतरमेवास्योश्रवणयोग्यतापादिता। अस्य हि चिदाकाशस्थितत्वाद्घनीभूतरसाकारत्वाद्ब्रह्मांडाधिपतिभिरपि दुरधिगमत्वात्का वार्तात्रालीकविषयकधिक्त्वस्य। वस्तुतस्तु गुह्याद्गुह्यतममगम्यं रसरूपं श्रीनिजधाम भागवतै रसोपासकैस्तद्रूपैरेवावगम्यते। तत्तद्रूपतासिद्ध्यर्थं चाधोक्षजप्रियाणामिहापि देहे निजधाम सामग्रीसद्भावः समर्थितः (३३।१३ तः ८४)। त एते हरिप्रिया इह ब्रह्ममुनिब्रह्मसृष्टिपरमहंसतत्वदर्शिजनब्रह्मर्षिवासनाकृष्णप्रियेत्यादिपदप्रतिपाद्या भवंति, तेषामगसंगात्तीर्थौघा अपि पूयंते (३१।७७-८०) त एवेदानीं रसवियोगदलमापन्नाः संयोगविप्रलंभदलयोः संधौ वर्तमानाः केचित्प्रबुद्धाः कृत स्वस्वरूपव्यवस्थितय आसते। ये चाप्रतिबुद्धास्तेऽपि श्रीव्याससिद्धांतसंहिताद्वारा श्रीसद्गुरुसत्संप्रदायानुगमात्स्वरूपलाभं कुर्वाणाः प्रबोधसमयमलंकुर्युः।

अथैतत्सद्ग्रंथरत्नं स्वमुद्रणयंत्रद्वारा प्रकाश्य श्रीजयकृष्णदासश्रेष्ठिमहोदयश्चतुर्विधपुरुषार्थाधिगतये सद्बोधमधुमयसारपिपासवे श्रद्धालवे चतुर्वर्गमनुजनिवहायातितमामुपकृतिमातनुतामित्येतदर्थमस्य परमरहस्यभूतस्य ग्रंथस्य प्रकाशन परमहितावहमित्यवधारितं श्रीमत्प्रणामिधर्माचार्येण श्रीमङ्गलपुरीब्रह्मतीर्थनिवासिना श्रीकृष्णप्रियार्येणेति।

संवत्सरे २००७
माघ शुदि ५ रवौ
ता० ११-२-१९५१

विद्वदेकान्तवशंवदः
पूर्णब्रह्मश्रीप्राणनाथं शरणं प्रपन्नः
श्रीकृष्णप्रियाचार्यः

॥ श्रीपुरुषोत्तमाय कृष्णाय नमः ॥

श्रीमद्द्वैपायनप्रणीता

# पुराणसंहिता

*शौनक उवाच—

सूत सूत महाभाग त्वया भगवता सता ।
व्यासप्रसादाधिगतशास्त्रसम्बोधनेन च ॥ १ ॥
अष्टादशपुराणानि सेतिहासानि चानघ ।
उपक्रमोपसंहारविधिनोक्तानि कृत्स्नशः ॥ २ ॥
चतुर्दशसहस्रं तु मात्स्यं प्रोक्तमतिस्फुटम् ।
तत्संख्याकं भविष्यं च प्रोक्तं पंचशताधिकम् ॥३॥
मार्कण्डेयं महारम्यं प्रोक्तं नवसहस्रकम् ।
अथ भागवतं दिव्यमष्टादशसहस्रकम् ॥ ४ ॥
शतोत्तरं च ब्रह्माण्डं सूर्यसंख्यासहस्रकम् ।
कथितं ब्रह्मवैवर्तमष्टादशसहस्रकम् ॥ ५ ॥
सहस्राणि दशैवोक्तं पुराणं ब्रह्मनामकम् ।
अयुतश्लोकघटितं पुराणं वामनाभिधम् ॥ ६ ॥
तथैवायुतसंख्याकं षट्शताधिकमानिलम् ।
त्रयोविंशतिसाहस्रं वैष्णवं समुदाहृतम् ॥ ७ ॥
पंचविंशतिसाहस्रं नारदीयमुदाहृतम् ।
रुद्रसंख्यासहस्राणि प्रोक्तं लिंगाख्यमद्भुतम् ॥८॥
एकोनविंशसाहस्रं वैनतेयमुदाहृतम् ।
सहस्रपंचपंचाशत् पाद्मम्प्रोक्तं सुविस्तरम् ॥ ९ ॥
सप्तदशसहस्राणि कौर्मं प्रोक्तं मनोहरम् ।

---

* क्वचित् "शौनकादिऋषय ऊचुः" इति पाठः ।
१ पंचपंचाश साहस्रं 'पाद्मं प्रोक्तं सुविस्तरम्' इत्यपि पाठः ।

चतुर्विंशति साहस्रं शौकरं परमाद्भुतम् ॥ १० ॥
एकाशीतिसहस्राणि स्कान्दमुक्तं सुविस्तृतम् ।
एवमष्टादशोक्तानि पुराणानि बृहंति च ॥ ११ ॥
पुराणेष्वेषु बहवो धर्मास्ते विनिरूपिताः ।
रागिणां च विरागिणां यतीनां ब्रह्मचारिणाम् ॥ १२ ॥
गृहस्थानां वनस्थानां स्त्रीशूद्राणां विशेषतः ।
ब्राह्मणक्षत्रियविशां ये च संकरजातयः ॥ १३ ॥
गंगाद्या या महानद्यो यज्ञव्रततपांसि च ।
अनेकविधदानानि यमाश्च नियमैः सह ॥ १४ ॥
योगधर्मा बहुविधाः सांख्या भागवतास्तथा ।
भक्तिमार्गा ज्ञानमार्गा वैराग्यानिलनीरजाः ॥ १५ ॥
उपासनविधिश्चोक्तः कर्मसंशुद्धचेतसाम् ।
ब्राह्मं शैवं वैष्णवं च सौरं शाक्तं तथार्हतम् ॥ १६ ॥
षट् दर्शनानि चोक्तानि स्वभावनियतानि च ।
एतदन्यच्च विविधं पुराणेषु निरूपितम् ॥ १७ ॥
अतः परं किमप्यस्ति न वा बोद्धव्यमुत्तमम् ।
न ज्ञायेत यदि व्यासो गोपयेदथ वा भवान् ॥ १८ ॥
अत्र नः संशयं छिंधि पूर्णः पौराणिको यतः ॥ १९ ॥

सूत उवाच—

शृणु शौनक वक्ष्यामि प्रश्नमेनं सुदुर्लभम् ।
अतिगोप्यतरं दिव्यमनाख्येयं प्रवक्ष्यते ॥ २० ॥
पराशरसुतो व्यासः कृत्वा पौराणिकं नयम् ।
सर्ववेदार्थघटितं चिन्तयामास चेतसि ॥ २१ ॥
वर्णाश्रमवतां धर्मो मया सम्यगुदाहृतः ।
मुक्तिमार्गाः बहुविधा उक्ता वेदाविरोधतः ॥ २२ ॥

१ 'एवमष्टादशमहापुराणानि बृहन्ति च' इति पाठः ।
२ एतमन्यत् इत्यपि पाठः ।

जीवेश्वरब्रह्मभेदो निरस्तः सूत्रनिर्णये ।
निरूपितं परं ब्रह्म श्रुतियुक्तिविचारतः ॥ २३ ॥
अक्षरं परमं ब्रह्म परमात्मा परं पदम् ।
यदर्थं ब्रह्मचर्यादिवानप्रस्थयतिव्रतम् ॥ २४ ॥
आचरन्ति महाप्राज्ञा धारणां च पृथग्विधाम् ।
आसनं प्राणरोधश्च प्रत्याहारश्च धारणा ॥ २५ ॥
ध्यानं समाधिरेतानि यमैश्च नियमैः सह ।
अष्टांगानि यदर्थं वै चरन्ति योगिपुंगवाः ॥ २६ ॥
यदर्थं कर्म कुर्वन्ति वेदाज्ञामात्रतत्पराः ।
परार्पणधिया सम्यक् निष्कामाः कलिकोज्झिताः ॥२७॥
यज्ज्ञप्तये [1]निराकर्तुं पापा[2]चरणमात्मनः ।
गंगादितीर्थ[3]चर्याणि निषेवन्ते शुचिव्रताः ॥ २८ ॥
तद्ब्रह्म परमं शुद्धमनाद्यन्तमनामयम् ।
नित्यं सर्वगतं स्थाणु कूटस्थं कूटवर्जितम् ॥ २९ ॥
सर्वेन्द्रियचराभासं प्राकृतेन्द्रियवर्जितम् ।
दिक्कालाद्यनवच्छिन्नं नित्यं चिन्मात्रमव्ययम् ॥ ३० ॥
अध्यस्तं सर्पवद्यत्र विश्वमेतत्प्रकाशते ।
विश्वस्मिन्नपि चान्वेति निर्विकारं च रज्जुवत् ॥३१॥
सम्यग्विचारितो यद्वद्ब्धिः फेनोर्मिबुद्बुदात् ।
तथा विचारितं ब्रह्म विश्वस्मात्र पृथग्भवेत् ॥३२॥
सर्वं ब्रह्मैव नानात्वं नास्तीति निगमा जगुः ।
यस्माद्भवन्ति ब्रह्माण्डकोटयो न भवन्ति च ॥ ३३ ॥
यदुन्मेषनिमेषाभ्यां जगतां प्रलयोदयौ ।
भवेतां सा परा शक्तिर्यदाधारतया स्थिता ॥ ३४ ॥
यस्मिन्निदं यतश्चेदं येनेदं यदिदं स्मृतम् ।

---

१ 'पराकर्तुम्' इत्यपि पाठः । २ पापावरणमित्यपि पाठः ।
३ तीर्थचर्याणि इत्यपि पाठः ।

यदज्ञानाज्जगद्भाति यस्मिन् ज्ञाते जगन्नहि ॥ ३५ ॥
असत्यं यज्जडं दुःखमवस्त्वीति निरूपितम् ।
विपरीतमतो यद्वै सच्चिदानन्दरूपकम् ॥ ३६ ॥
जीवे जाग्रति विश्वाख्यं स्वप्ने यत्तैजसं स्मृतम् ।
सुषुप्तौ प्राज्ञसंज्ञं यत्सर्वावस्थासु संततम् ॥ ३७ ॥
यच्चक्षुषां चक्षुरथ श्रोत्राणां श्रोत्रमित्यपि ।
त्वक्त्वचां रसनं तस्य घ्राणं घ्राणस्य यद्विदुः ॥३८॥
बुद्धिर्ज्ञानेन च प्राणाः क्रियाशक्त्या निरन्तरम् ।
यन्नेशिरे समभ्येतुं ज्ञातुं च परमार्थतः ॥ ३९ ॥
रज्जावहिर्मरौ वारि नीलिमा गगने यथा ।
असद्विश्वमिदं भाति यस्मिन्नज्ञानकल्पितम् ॥ ४० ॥
घटावच्छिन्न एवायं महाकाशो विभिद्यते ।
कार्योपाधिपरिच्छिन्नं तद्वद्यज्जीवसंज्ञितम् ॥ ४१ ॥
मायया चित्रकारिण्या विचित्रगुणशीलया ।
ब्रह्माण्डचित्रमतुलं यस्मिन् भित्ताविवार्पितम् ॥४२॥
धावतोन्यानतिक्रान्तं वदतां वागगोचरम् ।
वेदवेदान्तसिद्धान्तैर्विनिर्णीतं तदक्षरम् ॥ ४३ ॥
अक्षरान्न परं किञ्चित्सा काष्ठा सा परा गतिः ।
इत्येवं श्रूयते वेदे बहुधापि विचारिते ॥ ४४ ॥
अक्षरस्यात्मनश्चापि स्वात्मरूपतया स्थितम् ।
परमानन्दसन्दोहरूपमानन्दविग्रहम् ॥ ४५ ॥
लीलाविलासरसिकं वल्लवीयूथमध्यगम् ।
शिखिपिच्छकिरीटेन भास्वद्रत्नचितेन च ॥ ४६ ॥
उल्लसद्विद्युदाटोपकुंडलाभ्यां विराजितम् ।
कर्णोपान्तचरन्नेत्रखंजरीटमनोहरम् ॥ ४७ ॥
कुंजकुंजप्रियावृन्दविलासरतिलंपटम् । १

---

१ जीवो इ० पाठः ।

पीताम्बरधरं दिव्यं चन्दनालेपमंडितम् ॥ ४८ ॥
अधरामृतसंसिक्तवेणुनादेन वल्लवीः ।
मोहयन्तं चिदानन्दमनंगमदभंजनम् ॥ ४९ ॥
कोटिकामकलापूर्णं कोटिशीतांशुनिर्मलम्[1] ।
त्रिरेखकंठविलसद्रत्नगुंजास्रगाकुलम् ॥ ५० ॥
यमुनापुलिने[2] तुंगे तमालवनकानने ।
कदंबचंपकाशोकपारिजातमनोहरे ॥ ५१ ॥
शिखिपारापतशुकपिककोलाहलाकुले ।
निरोधार्थं गवामेव धावमानमितस्ततः ॥ ५२ ॥
राधाविलासरसिकं कृष्णाख्यं पुरुषं परम् ।
श्रुतवानस्मि वेदेभ्यो यतस्तद्गोचरोभवत् ॥ ५३ ॥
एवं ब्रह्मणि चिन्मात्रे निर्गुणे भेदवर्जिते ।
गोलोकसंज्ञके कृष्णो दिव्यतीति श्रुतं मम ॥ ५४ ॥
नातः परतरं किञ्चिन्निगमागमयोरपि ।
तथापि निगमो वक्ति ह्यक्षरात्परतः परः ॥ ५५ ॥
गोलोकवासी भगवानक्षरात्पर उच्यते ।
तस्मादपि परः कोसौ श्रुतिभिर्गीयते सदा ॥ ५६ ॥
उद्दिष्टो वेदवचनैर्विशेषो ज्ञायते कथम् ।
श्रुतेर्वार्थोन्यथा बोध्यः परतस्त्वक्षरादिति ॥ ५७ ॥
श्रुत्यर्थे संशयापन्नो व्यासः सत्यवतीसुतः ।
विचारयामास चिरं न प्रपेदे यथातथम् ॥ ५८ ॥
इति श्रीपुराणसंहितायां व्याससंशयो नाम प्रथमोऽध्यायः॥१॥
श्लोकानां समष्ट्यंकाः ॥ ५८ ॥

---

१ 'कोटिचन्द्रांशुनिर्मलम्' इत्यपि पाठभेदः।
२ 'पुलिनोत्तुङ्गे' इति पाठः ।

## अथ द्वितीयोऽध्यायः ।

सूत उवाच—

विचारयन्नपि मुनिर्नाप वेदार्थनिश्चयम् ।
वेदो नारायणः साक्षाद्यत्र मुह्यन्ति सूरयः ॥ १ ॥
तदाप महतीमार्त्तिं सतीं[1] हृदयतापिनीम् ।
पुनर्विचारयामास कं व्रजामि करोमि किम् ॥ २ ॥
पृच्छामि कं च जगत्यस्मिन् सर्वज्ञं सर्वदर्शनम् ।
अज्ञात्वान्यतमं लोके संदेहविनिवर्त्तकम् ॥ ३ ॥
मेरोः कुहरिणीं गत्वा चचार दुश्चरं[2] तपः ।
यत्र कार्त्तस्वरस्फूर्जज्ज्योत्स्नाजालैर्निरन्तरम् ॥४॥
सदा प्रबाधते विश्वक् तमःस्तोमं दृशंतुदम् ।
चकास्ते यत्र परमं कान्तारमतिसुन्दरम् ॥ ५ ॥
नानाद्रुमलताकुञ्जे कूजत्पक्षिप्रतिध्वनत् ।
क्षुत्पिपासाभयक्रोधतापग्लानिनिवर्तकम् ॥ ६ ॥
जलाशयैर्बहुविधैः पद्मिनीखण्डमण्डितैः ।
जातरूपशिलानद्धतटसंचारिपाक्षिभिः ॥ ७ ॥
युक्तमंभोजपवनैः सेव्यमानं समन्ततः ।
शिवैरध्यासितं भावैर्हिंस्रैः सत्वैः समुज्झितम् ॥८॥
निर्जनं दिव्यलतिकाप्रियखंण्डविराजितम् ।
शुकैः[3] पारापतवृन्दैरुन्मदन्मत्तकोकिलम् ॥ ९ ॥
उत्पतत्पद्मरजसां पटलामोदिदिङ्मुखम् ।
तत्रापि काञ्चनी दिव्या गुहा परमशोभना ॥ १० ॥
तां प्रविश्य जिताहारो जितचित्तो जितासनः ।
सस्मार चतुरो वेदांस्तदैकाग्रमना मुनिः ॥ ११ ॥

---

१ सतां इत्यपिपाठः । २ परमं इ० पा० ।
३ शुकैः पारावतैर्हृद्यैरुन्मदन्मत्तकोकिलम् इत्यपि पाठः ।

अथो जगाम शरदां शतस्य स्मरतोऽस्य हि ।
प्रादुरासंस्ततो वेदाश्चत्वारश्चारुदर्शनाः ॥ १२ ॥
स्फुरत्पद्मपलाशाक्षा जटामुकुटधारिणः ।
कुशमुष्टिकराम्भोजा मृगत्वङ्मण्डितांसकाः ॥ १३ ॥
स्वरैः [1]षोडशभिः क्लृप्तवदनाः प्रणवान्तराः ।
क[2]चवर्गोद्भवैर्वर्णैः पञ्चावयवपाणयः ॥ १४ ॥
[3]टवर्गदक्षचरणाः वामपादास्त[4]वर्गतः ।
[5]अत्रिरत्यन्तवर्णश्च येषां कुक्षिद्वयात्मकौ ॥ १५ ॥
नाभिर्नि[6]द्राः फा[7]न्तपृष्ठाः [8]मोदरा वा[9]युर्हृ[10]त्कचाः ।

---

१ वर्णमूर्तिधराणां निगमानां प्रणवयुक्तेन— अकारेण—मौलिः । आकारेण-मुखम् । इकारेण-दक्षिणनेत्रम् । ईकारेण वामनेत्रम् । उकारेण-दक्षिणकर्णः । ऊकारेण-वामकर्णः । ऋकारेण-दक्षिणनासापुटम् । ॠकारेण-वामनासापुटम् । लृकारेण-दक्षिणकपोलः । लॄकारेण-वामकपोलः । एकारेण-ऊर्ध्वदंतपंक्तिः । ऐकारेण अधोदंतपंक्तिः । ओकारेण-ऊर्ध्वोष्ठः । औकारेण-अधरोष्ठः । अंकारेण-जिह्वामूलम् । अःकारेण-ग्रीवा । एकारैकारौ ओष्ठाधरौ ओकारौकारौ चोर्ध्वाधोदन्तपंक्तय इत्यपि केचित् ।

एभिः षोडशभिः स्वरैः क्लृप्तवदनाःप्रणवांतराः इत्यस्यार्थः ।

२ कचवर्गेति— ककारेण-दक्षिणबाहुमूलम् । खकारेण—दक्षिणकूर्परः । गकारेण-दक्षिणमणिबंधः । घकारेण-दक्षिणकरांगुलिमूलम् । ङकारेण-दक्षिणकरांगुल्यग्रम् ।

चकारेण-वामबाहुमूलम् । छकारेण-वामकूर्परः । जकारेण-वाममणिबंध । झकारेण-वामांगुलिमूलम् । ञकारेण-वामांगुल्यग्रम् ।

३ टवर्गेति— टकारेण-दक्षिणपादमूलम् । ठकारेण-दक्षिणपादजानु । डकारेण-दक्षिणपादगुल्फौ । ढकारेण-दक्षिणपादांगुलिमूलम् । णकारेण-दक्षिणपादांगुल्यग्रम् ।

४ तवर्गेति— तकारेण-वामपादमूलम् । थकारेण-वामपादजानु । दकारेण-वामपादगुल्फौ । धकारेण-वामपादांगुलिमूलम् । नकारेण-वामपादांगुल्यग्रम् । ५ अत्रिः-पकारः । अत्यंतः-फकारः ।

६ निद्रा-भकारः । ७ फान्तः-बकारः । ८ मः-मकारः ।
९ वायुः-यकारः । १० हृत्-अपलहाः ।

[1]अग्निदक्षांसरुचिरा [2]धराग्रीवा[3]मृतांसकाः ॥ १६ ॥
अन्त[4]स्थसंधिसंस्थाना वैखरीवाग्विजृंभिताः ।
अपश्यन्मथुरामेषां हृदयांभोजकल्पिताम् ॥ १७ ॥
हरेर्भगवतः साक्षादाविर्भावस्थली हि सा ।
काशीमपश्यद्भ्रूमध्ये मायामाधारसंस्थिताम् ॥ १८ ॥
लिंगदेशे ततः काञ्चीमवन्तीं नाभिमण्डले ।
कण्ठस्थां द्वारकामेषां प्रयागं [5]घ्राणगं तथा ॥ १९ ॥
सव्यापसव्ययोस्तेषां गंगां च यमुनामपि ।
मध्ये सरस्वतीं साक्षाद्गयाक्षेत्रं तथानने ॥ २० ॥
हनुग्रीवामध्यगतं प्रभासं क्षेत्रमुत्तमम् ।
बदर्याश्रममेतेषां ब्रह्मरन्ध्रे ददर्श ह ॥ २१ ॥
पौंड्रवर्द्धननेपालपीठे नयनयोर्युगे ।
पीठं पूर्णगिरिनाम ललाटे समदृश्यत ॥ २२ ॥
कण्ठे च कामरूपीठं काञ्चीपीठं कटिस्थितम् ।
जालंधरं तथा पीठं स्तनदेशेष्वदृश्यत ॥ २३ ॥
भृगुपीठं कर्णदेशे अयोध्यां नासिकापुटे ।
ब्रह्मरन्ध्रे स्थितं ब्राह्मयं शैवं सीमंतसीमनि ॥ २४ ॥
शाक्तं जिह्वाग्रधिषणं वैष्णवं हृदयांबुजे ।

---

१ अग्निः-रकारः । २ धरा-लकारः । ३ अमृतं-वकारः । तथा च- पकारेण-दक्षिणकुक्षिः । फकारेण-वामकुक्षिः । बकारेण-पृष्ठम् । भकारेण-नाभिः । मकारेण-उदरम् । यकारेण-हृदयम् । रकारेण-दक्षिणांसः । लकारेण-ककुद् । वकारेण-वामांसः । शषसहैः-कचाः । वायुहृत्कचा इत्यत्र क्वचित् 'यरलवोत्कचाः' 'वायुहृत्कजाः' इति च पाठो दृश्यते वायुहृत्कजा इत्यस्य वायुहृदयकमला इत्यर्थः । ४ अन्तस्थसंधिसंस्थानपदेन य र ल व श ष सै हं ळ क्षैश्च क्रमात् त्वगसृङ्मांसमेदोस्थिमज्जाशुक्राणि सप्तधातवस्तथा प्राण-शक्त्यात्मानोऽपि कल्प्याः इति । ५ प्राणगं इ० पा० ।

सौरं चक्षुःप्रदेशस्थं बौद्धं छायासु संगतं ॥ २५ ॥
सूत्रामणिं कंठदेशे पशुबन्धमथोरसि ।
वाजपेयं कटितटे अग्निहोत्रं तथानने ॥ २६ ॥
अश्वमेधं कटितटे नरमेधमथोदरे ।
राजसूयं शिरोदेशे आवसथ्यं तथाधरे ।
ऊर्द्धोष्ठे दक्षिणाग्निं च गार्हपत्यं मुखान्तरे ॥ २७ ॥
सभ्यं[1] श्रुतौ मंत्रभेदांस्तथा रोमस्ववस्थितान् ।
भृत्यैरिव महाराजं पुराणैर्न्यायमिश्रितैः ॥ २८ ॥
संहिताभिश्च तंत्रैश्च पृथक्पृथगुपासितान् ।
ब्रह्मतेजोमयान्दिव्यांस्तपतोऽर्कानिव च्युतान् ॥ २९ ॥
कर्मज्ञानोपासनाभिर्जनानुग्रहकारकान् ।
ज्वलतोऽग्नीनिवोदग्रान्कोटीन्दुसमशीतलान् ॥ ३० ॥
ववन्दे सहसोत्थाय दण्डवत्पतितो मुनिः ।
कृतार्थोऽहं कृतार्थोऽहं कृतार्थोऽहमितीरयन् ॥ ३१ ॥
अद्य मे सफलं जन्म अद्य मे सफलं तपः ।
अद्य मे सफलं चायुर्यद्भवन्तोऽक्षिगोचराः ३२ ॥
अलौकिकं लौकिकं च यत्किंचिदपि विद्यते ।
न तद्वोऽविदितं वेद्यं भूतं भव्यं भवच्च यत् ॥ ३३ ॥
न प्रवृत्तिफला यूयं दर्शयन्तोपि तां सदा ।
यदृच्छाकारसंकोचविधानायेह रागिणाम् ॥ ३४ ॥
प्रपञ्चस्यापि मिथ्यात्वे ब्रह्मत्वे वा विधीतरौ ।
न मृषा रागिविषयौ तत्संकोचविधिक्षमौ ॥ ३५ ॥
अतो लोकहितैर्नूनं परमार्थनिरूपणे ।
स्वोक्ता स्वर्गादिविषया नश्वरा इति निश्चिताः[2] ॥ ३६ ॥
अधिकारिविभेदेन कर्मज्ञानोपदेशतः ।

---

१ हव्यं इत्यपि पाठः । २ निश्चिताः इ० पाठः ।

आत्तं सर्वजगन्नूनं शब्दब्रह्मात्ममूर्त्तिभिः ॥ ३७ ॥
अतोहं प्रष्टुमिच्छामि भवन्तश्चेत्कृपालवः ।
कर्मणां फलमादिष्टं स्वर्गः कामैकचेतसाम् ॥ ३८ ॥
ईशार्पितधियां पुंसां कृतस्यापि च कर्मणः ।
चित्तशुद्धिस्ततो ज्ञानं मोक्षश्च तदनन्तरम् ॥ ३९ ॥
मोक्षो ब्रह्मैक्यमित्येव सच्चिदानन्दमेव तत् ।
सर्वं समाप्यते तस्मिन् ज्ञाते यद्धि कृताकृतम् ॥ ४० ॥
यन्निःसंगं चिदाकारं ज्ञानरूपमसंवृतम् ।
निरीहमचलं शुद्धं वाङ्मनोगोचरं शिवम् ॥ ४१ ॥
विकारेषु विनश्यत्सु निर्विकारं न नश्यति ।
यथान्धतमसा व्याप्तलोकस्य रविरोजसा ॥ ४२ ॥
लोहस्येव मणिस्तद्वन्मायायाश्चेतयितृ यत् ।
यदाभासेन सा सत्तां प्रतिपद्य विजृंभते ॥ ४३ ॥
जीवेश्वरादिरूपेण विश्वाकारेण चाप्यहो ।
तस्यामपि प्रलीनायां कूटस्थं च यदेकलम् ॥ ४४ ॥
भवद्भिरेवं निर्णीतं तत्तथैव न संशयः ।
तथापि मम जिज्ञासा वर्तते केवलं हृदि ॥ ४५ ॥
अतोपि परमं किञ्चिद्वर्तते किल वा न वा ।
तद्वदन्तु महाभागा भवन्तस्तत्वदर्शनाः ॥ ४६ ॥
यच्छ्रुवः फलमेवेह जनुषो मे कृतार्थता ।
एवं ब्रुवन्तमनघं व्यासं सत्यवतीसुतम् ॥ ४७ ॥
साधु साध्विति संकीर्त्य प्रत्यूचुर्निगमा वचः ।

॥ वेदा ऊचुः ॥

साधु साधु महाप्राज्ञ विष्णुरात्मा शरीरिणां ।
अजोपि जन्म संपद्य लोकानुग्रहमीहसे ॥ ४८ ॥
अन्यथा ते न घटते संसारः कर्मबन्धनः ।

अस्पृष्टो मायया देव्या कदाचिज्ज्ञानगूहया ॥ ४९ ॥
बिभर्षि स्वेच्छया रूपं स्वेच्छयैव निगूहसे ।
अस्मत्सम्मत एवार्थो भवता संप्रदर्शितः ॥ ५० ॥
पुराणेष्वितिहासेषु सूत्रेष्वपि च नैकधा ।
अक्षरं ब्रह्म परमं सर्वकारणकारणम् ॥ ५१ ॥
तस्यात्मनोऽप्यात्मभावतया पुष्पस्य गन्धवत् ।
रसवद्वा स्थितं रूपमवेहि मरमं हि तत् ॥ ५२ ॥
अनुभूतं तदस्माभिर्जाते प्राकृतिके लये ।
अक्षरात्परतस्तस्माद्यत्परं केवलो रसः ॥ ५३ ॥
न च तत्र वयं शक्ताः शब्दातीते तदात्मकाः ॥ ५४ ॥
इति श्रीपुराणसंहितायां व्यासनिगमसम्वादो नाम
द्वितीयोऽध्यायः ॥ २ ॥

आदितः श्लोकानां समष्ट्यङ्काः ॥ ११२ ॥

# अथ तृतीयोऽध्यायः ॥ ३ ॥

॥ व्यास उवाच ॥

अक्षरे ब्रह्मणि परे यदेवात्मतया स्थितम् ।
प्राकृते प्रलये नाथा युष्माभिर्गोचरीकृतम् ॥ १ ॥
तन्मे ब्रूत महाभागाः कीदृशः प्राकृतो लयः ।
तदप्यविषयं ब्रह्म कथं वा गोचरीकृतम् ॥ २ ॥

॥ वेदा ऊचुः ॥

शृणु व्यास प्रवक्ष्यामो यन्नः पृच्छसि तद्रहः ।
अवाच्यं सर्वथा लोके केवलं भावगोचरम् ॥ ३ ॥
नित्यो नैमित्तिकश्चैव प्राकृतिकोऽत्यान्तिकस्तथा ।
चतुर्धा प्रलयः प्रोक्तस्तत्त्वं वेत्सि न संशयः ॥ ४ ॥

सत्वं रजस्तम इति गुणास्ते बुद्धिसम्भवाः ॥
सत्त्वाज्जागरणं प्रोक्तं रजसा स्वप्न एव च।
सर्वप्रपञ्चसंहर्त्रीं सुषुप्तिं तामसीं विदुः ॥ ५ ॥
इंद्रियाणां हि सर्वेषां प्रकाशो यत्र जायते।
तदेव सत्वमित्युक्तं तन्मयी जाग्रती[1] दशा ॥ ६ ॥
इन्द्रियाणां लये जाते मनसो न लयो यदा।
तदा तद्भावनारूपः स्वप्नो राजस एव हि ॥ ७ ॥
बाह्यान्तरिन्द्रियाणां हि प्रलयो यर्हि जायते।
तमस्तदा विजानीयात्सुषुप्तिस्तन्मयी दशा ॥ ८ ॥
सत्वं शान्तं रजो घोरं तमो मूढं लयात्मकं।
एष एव लयस्तस्मान्नित्य इत्यभिचक्षते ॥ ९ ॥
सत्वं स्थितिकरं लोके रजः सृष्टिकरं स्मृतम्।
तमः संहारकं विद्धि त्रैविध्यं प्रकृतौ स्थितम् ॥ १० ॥
त्रिविधोपाधिसंवीतास्तस्माद्ब्रह्मादयस्त्रयः।
सृष्टिस्थितिलयेष्वेव प्रवर्तन्ते पृथक् पृथक् ॥ ११ ॥
बुद्धेरपि प्रवर्तन्ते गुणाः सत्वादयः किल।
प्रकृत्यंशस्वरूपाया विश्वाद्यास्तत्र साक्षिणः ॥ १२ ॥
रजो ग्रसति वै सत्वं तमो ग्रसति वै रजः।
आत्मनोऽन्यत्तदा नास्ति साक्षिणोऽज्ञानसंश्रितात् ॥१३॥
एवं प्रवर्तते नित्यं प्रलयः सर्वजन्तुषु।
पुनः प्रवर्तते सृष्टिस्तदज्ञानविजृंभणात् ॥ १४ ॥
एवं नित्यं प्रवर्तन्ते सृष्टयः प्रलयास्तथा।
अथ नैमित्तिकं वच्मि प्रलयं शृणु वै मुने ॥ १५ ॥
रजसोत्पादितं विश्वं सत्वेनापि प्रतिष्ठितम्।
तद्ग्रसिष्णुस्तमश्चान्ते वर्द्धते मुनिसत्तम ॥ १६ ॥

---

१ जाग्रतः।

राजसस्तु तदा ब्रह्मा निद्रया गुणरूपया ।
सत्वप्रधानपुरुषे विलीय परितिष्ठति ॥ १७ ॥
रजसः कर्मरूपत्वाल्लीने पुंसीह राजसे ।
कर्मसाध्या त्रिलोकीयं नश्यते नात्र संशयः ॥ १८ ॥
चतुर्युगसहस्रान्ते ब्रह्मणो दिवसात्मके ।
एष नैमित्तिकः प्रोक्तः प्रलयो मुनिसत्तम ॥ १९ ॥
प्रकृत्यवधिकार्याणां विलयः प्राकृतः स्मृतः ।
युगपत्सर्वजीवानां मुक्तिरात्यन्तिकः स्मृतः ॥ २० ॥
प्राकृते प्रलये प्राप्ते नष्टे ब्रह्माण्डमण्डले ।
पञ्चभूतेषु लीनेषु भूतादौ[1] कारणे द्विज ॥ २१ ॥
इन्द्रियेषु विलीनेषु राजसाहंकृतौ तथा ।
वैकारिके[2] च लीनेषु देवेषु च दशस्वपि ॥ २२ ॥
अहंकारे त्रिधालीने महत्तत्वगुणात्मके ।
तस्मिन् प्रकृतिसंलीने लीनायां परमात्मनि ॥ २३ ॥
कालिकाकालिकत्वेन द्विधासौ प्राकृतो लयः ।
महाप्रलयमित्याहुः केचित्प्राकृतमित्यपि ॥ २४ ॥
अपरस्मिन्[3] लये दृष्टमस्माभिः परमं पदम् ।
वायुप्रेरितवार्घोषघोषिताखिलदिङ्मुखा ॥ २५ ॥
राजते यमुना यत्र स्फुरत्स्वर्णाम्बुजाकुला ।
रत्नोभयतटक्रीडत्पक्षिलक्षगणस्वनैः ॥ २६ ॥
आह्लादयन्ती हृदयं मणिमण्डपकुट्टिमा ।
राजते यत्र सुमहान् गोवर्द्धनगिरीश्वरः ॥ २७ ॥
स्वर्णरूप्यायसैः शृंगैस्त्रिभिरुल्लासिताम्बरः ।
अनेकरत्ननिचयैरर्केन्दुरिवाचितः ॥ २८ ॥
अवरोहारोहसिद्ध्यर्थं सोपानालिपरिस्कृतः ।

---

१ भूतादिः तामसः । २ वैकारिकः, सात्विकः । ३ अकालिकप्राकृते ।

नितम्बतटनिर्गच्छत्सुधानिर्झरशीतलः ॥ २९ ॥
अनेकोद्यानसंचारिपक्षिकलैरुपासितः।
हंससारसचक्राह्वकोलाहलजलाशयः ॥ ३० ॥
एकादशभिरुद्यानैः परितो वेष्टितं महत्।
यत्र वृन्दावनं नाम राजते सुमनोहरम् ॥ ३१ ॥
बहुरत्नविचित्रतला सरला सरलालघुभिर्बहुशाखिपरैः।
सुमनःफलभारनमद्भिरधो वसुधा बहुधा प्रविभाति शिवा ३२
कर्णिकेव सरोजस्य वृन्दाविपिनमद्भुतम्।
चिताष्टाभिर्दलैः सापि कृष्णक्रीडारसाश्रयैः ॥ ३३ ॥
यदा भूमिगतः कृष्णः स्वलीलोपवनैः सह।
तदा नानाविधा लीला तत्र तत्र चकार ह ॥ ३४ ॥
दलं यत्पूर्वतस्तत्र हतः केशी महाहयः।
रसलीलाश्रयीभूतमहाकुंजगणावृतम्[1] ॥ ३५ ॥
त्रिविधैर्वायुभिर्जुष्टं षट्पदव्रातझंकृतम्।
अनेकसंकेतयुतं दिव्यामोदमनोहरम् ॥ ३६ ॥
आग्नेय्यां तद्दलं दिव्यमानन्दरससुन्दरम्।
दक्षिणस्यां दिशि दलं परानन्दमहार्णवम् ॥ ३७ ॥
वाङ्मनोगोचरं चारु चमत्कारैकपत्तनम्।
गोपीजनसहस्रैश्च कृष्णेन सुमहात्मना ॥ ३८ ॥
तत्र रासमहालीला यास्माभिरनुभाविता।
दलं नैऋत्यसंस्थानं यत्र व्योमासुरो हतः ॥ ३९ ॥
शंखचूडोपि तत्रैव यतस्ते[2] स्वेन निर्मिताः।
नाम्ना ब्रह्मदलं यत्तु पश्चिमे च व्यवस्थितम् ॥ ४० ॥
विरिंचिर्मोहमापन्नो यत्राघासुरमोक्षणम्।
यद्दलं वायुकोणस्थं कालीह्रदसमाश्रयम् ॥ ४१ ॥

---

१ रससंयुतमित्यपि पाठभेदः। २ यत्रैव येन ते इत्यपि पाठः।

कालीयो[1] दमितो यत्र कालिन्दीशुद्धिमिच्छता ।
उत्तरे रसविच्छित्ति निर्मुक्तममरैरपि ॥ ४२ ॥
दुःप्रवेशं दलाध्यक्षमाक्षिमान्यहृदुज्वलम् ।
ईशान्यां दिशि यच्चारु दलं दरसमुज्झितम् ॥ ४३ ॥
समीरोत्क्षिप्तपृषतसिक्तद्रुमलतोल्लसत् ।
यत्र देवीप्रसादेन सिद्धा नन्दकुमारिकाः ॥ ४४ ॥
हास्यकेलिमिषेणाशु श्रीकृष्णेन हृताम्बराः ।
कर्णिकाबाह्यतः सन्ति दिव्योपवनराजयः ॥ ४५ ॥
आविर्भावस्थलं साक्षादाद्यं मधुवनं दलम् ।
खादिरं च ततोऽप्यन्यल्लीलाक्रीडारसाश्रयम् ॥ ४६ ॥
यत्र गोवर्द्धनः साक्षान्मणिमाणिक्यमण्डितः ।
श्रीमन्नन्दगृहं यत्र वनं नन्दीश्वराभिधम् ॥ ४७ ॥
गोपालो यत्र भगवान् जातो भक्ताभयंकरः ।
कदंबखंडी रुचिरा यत्र क्रीडारसस्थली ॥ ४८ ॥
वायूदीर्णरजःपुञ्जरञ्जिताम्बरमण्डला[2] ।
वकुलं त्वपरोद्यानं मत्त(द)मत्तमधुव्रतम् ॥ ४९ ॥
ततस्तालवनं दिव्यं दिव्यतालालिसंकुलम् ।
यत्र रामो महाबाहुर्धेनुकं चाप्यजीघनत् ॥ ५० ॥
ततश्च कुमुदारण्यं काम्यारण्यं ततः परम् ।
ततो भाण्डीरमुद्यानं कृष्णक्रीडारसाश्रयम् ॥ ५१ ॥
ततो भद्रवनं दिव्यं भद्रभूरुहभूषितम् ।
श्रीवनं चापि रुचिरं श्रीप्रार्थितरजःकणम् ॥ ५२ ॥
महावनं लोहवनं चंपकारण्यमुत्तमम् ।
ततश्चाशोकमुद्यानमुद्यच्छोकविशोषणम् ॥ ५३ ॥
सुगन्धमादनोद्यानं केतकीवनमित्यथो ।

---

१ कालियः इत्यपि पाठभेदः ।　२ राजितेत्यपि पाठः ।

वृषभानुपुरं चैव संकेतं च ततः परम् ॥ ५४ ॥
केतुद्रुमं सरोवीरमुत्सुकं चन्दनं तथा ।
भोजनस्य स्थली दिव्या दिव्यप्रेमरसाप्लुता ५५ ॥
एवमादीनि विप्रेन्द्र वनान्युपवनानि च ।
गोलोकभूषणान्येव भूषणान्यपि तानि च ॥ ५६ ॥
वृन्दावनस्य दिव्यस्य दक्षिणे यद्दलं मुने ।
तत्र रासमहालीला नित्याखंडा प्रवर्तते ॥ ५७ ॥
यत्र कल्पद्रुमच्छायास्वधःकांचनमण्डपे ।
तन्माल्यसौरभमहद्वासिताखिलमण्डले ॥ ५८ ॥
व्युप्तरत्नांशुरुचिरं स्वर्णरेखापरिस्कृतम् ।
पद्मरागीयविलसत्पादपीठं मनोहरम् ॥ ५९ ॥
रत्नप्रतिकृतिभ्राजत्स्तंभमौलिविराजितम् ।
रत्नसिंहासनं चारु तस्मिन्नष्टदलाम्बुजम् ॥ ६० ॥
अष्टौ प्रकृतयस्तेषु मूलप्रकृतिसंज्ञिकाः ।
राधानाम सहस्थाना पत्रगाः परितस्तु ताः ॥ ६१ ॥
पूर्वपत्रे स्थिता साक्षाद्विशाखा कृष्णसुन्दरी ।
कृष्णाग्नेय्यां दक्षिणस्था भद्रा पद्मा च नैऋते ॥ ६२ ॥
स्थिता चन्द्रावली तत्र प्रतीचिं दिशमाश्रिता ।
कमला वायुकोणस्था उत्तरे श्रीमती तथा ॥ ६३ ॥
हरिप्रियेशकोणस्था सन्मुखे ललिता स्थिता ।
सा मूलप्रकृती राधा रसकल्पद्रुमञ्जरी ॥ ६४ ॥
माणिक्यहीरकोल्लासितुलाकोटिलसत्पदा ।
पदाम्बुजनखज्योत्स्नाजालैरञ्जितकानना ॥ ६५ ॥
नाभ्यालवालोद्यद्रोमलतिकाफलसत्कुचा ॥
उद्यद्दर्पणदर्पघ्नकपोलामलकान्तिषु ॥ ६६ ॥
मीनकुण्डलविद्योतैर्मुष्णन्ती प्रियचक्षुषी ।

कटाक्षशरनिक्षेपविद्धकृष्णमनोमृगा ॥ ६७ ॥
मृगमीनखञ्जनाब्जगर्वसर्वस्वहारिणी ।
हृदयांभोजगम्भीरसरसी रसवर्त्मना ॥ ६८ ॥
साञ्जनेन सरागेण कोटिकामकलामृता ।
निर्वापयन्ती कृष्णस्य धैर्यदीपं स्वचक्षुषा ॥ ६९ ॥
मन्दस्मितस्फुरद्दन्तज्योत्स्नाजालाञ्चिताधरा ।
नीव्यायतप्राणनाथपाणिपल्लवभर्त्सने ॥ ७० ॥
दोर्लताकङ्कणक्काणैर्दीपयन्ती मनोभवम् ।
कृष्णचित्तमृगस्येव वागुराग्रहसाधनम् ॥ ७१ ॥
कृष्णचित्तचकोरस्याह्लादकर्त्रीव कौमुदी ।
सुगन्धा सुमनोहृद्या षट्पदव्रातसेविता ॥ ७२ ॥
तप्तकृष्णमनोनागविरामोद्यानमण्डली ।
कृष्णहृत्पञ्जरस्यान्तःखेलंतीव सुसारिका ॥ ७३ ॥
कृष्णहृत्कुमुदोल्लासवर्द्धिनीवैन्दवी कला ।
आनन्दवर्षिणः कृष्णमेघस्येव तडिल्लता ॥ ७४ ॥
प्राणेश वदनांभोजरसलुब्धैकमानसा ।
त्यक्तान्यरससंसर्गा भ्रमरीव विनिश्चला ॥ ७५ ॥
प्राणेशचित्तमञ्जूषा महामुक्तेव निस्तुला ।
कामार्तिभाजः कृष्णस्य मनःपीडामहौषधी ॥ ७६ ॥
अत्यार्त्तप्रियसारङ्गसुखदाम्भोदमण्डली ।
कृष्णहृद्भूसमुजृम्भदानन्दतरुमञ्जरी ॥ ७७ ॥
रत्यब्धिपारदमोद्यत्कुचतुम्बीफलद्वया ।
भावपूरितदृक्प्रान्तवीक्षामात्रेण कोटिशः ॥ ७८ ॥
उत्पादयन्ती कन्दर्पान् जगत्क्षोभात्रतिप्रियान् ।
एषा राधा महाशक्तिः कृष्णप्राणैकजीवनं ॥ ७९ ॥

१ दृक्पात इ० पा० भे० ।　　२ जीवना इ० पा० भे० ।
३ पु० सं०

उत्थाय प्राणनाथेन ययौ कुंञ्जमनोभवम्[1] ।
सुगन्धमादनोद्यानचूडाभूषाविण्डकम् ॥ ८० ॥
अम्लानसुमनोभङ्ग्या स्फुरत्तारं नभो यथा ।
मत्तभ्रमरसंङ्गीतषड्जमध्यमधैवतम् ॥ ८१ ॥
उन्मादितं पिकशतैः प्रतिध्वनितशङ्कितैः ।
विकसत्कुन्दमन्दारपारिजातवनोद्यतैः ॥ ८२ ॥
सौरभ्याङ्किङ्कितैः शश्वद्वायुभिः परिसेवितम् ।
रत्नसोपानसरसां दिव्यानां जलजश्रियाम् ॥ ८३ ॥
दिव्यामृतजलौघानां मध्यमण्डपशालिनाम् ।
अन्तराविस्फुरद्रत्नप्रभाविद्योतिताम्भसाम् ॥ ८४ ॥
तटसीम्नि समुद्भासिरत्नमण्डपशालिनाम् ।
हंससारसचक्राह्वकूजितैः श्रोत्रहारिणाम् ॥ ८५ ॥
परितो मण्डितं श्रीमन्महानन्दरसस्थलम् ।
तस्मिन्मनोभवे कुञ्जे कृष्णो राधासमन्वितः ॥ ८६ ॥
तिसृभिः कोटिभिर्विप्र विधाय विविधा रतीः[2] ।
तस्य दक्षिणतः श्रीमद्रत्नसानुपरिस्कृतम् ॥ ८७ ॥
नानाधातुभिराकीर्णं सुधानिर्मलशीतलम् ।
कल्पवृक्षवनाकीर्णं पारिजातैः सुशोभनैः ॥ ८८ ॥
पद्मरागलतावृन्दैः कुन्दैः कुरबकैरपि ।
तमालैः सरलैराम्रैश्चन्दनैश्चम्पकाशनैः ॥ ८९ ॥
कदम्बैः कोविदारैश्च क्रमुकैः कदलीवनैः ।
वटैरश्वत्थनिचयैर्बकुलैः पनसैरपि ॥ ९० ॥
अम्लानपुष्पाभरणैर्नमद्भिःफलसम्पदा ।
रत्नजाम्बूनदमयैश्चन्द्रकोट्यंशुभास्वरैः ॥ ९१ ॥
बाय्वीरितरजःपुञ्जसुरभीकृतदिङ्मुखैः ।

१ कुञ्जमनोभवं इ० पा० भे० । २ रतिः इ० पा० भे० ।

मकरन्दरसास्वादमत्तभ्रमरभूषितैः ॥ ९२ ॥
महामरकतस्थल्यां पद्मरागालवालजैः ।
गायद्भिरिव गीतिभिः स्तबकाग्रहगालिनाम् ॥ ९३ ॥
उपासि (तं) तैः पक्षिगणैः दातारमिव याचकैः ।
एवंविधैरनेकैश्च पादपैः स्वर्गवेदिभिः ॥ ९४ ॥
दिव्यसद्रत्नपत्रालिफलपुष्पाङ्कुराश्रितैः ।
शोभमानं परिभ्राजत्सहस्रशिखरोज्ज्वलम् ॥ ९५ ॥
गोगोपगोपकन्यानां क्रीडारससमाश्रयम् ।
महाद्रिप्रवरं दिव्यं सर्वर्तुसुखसम्पदम् ॥ ९६ ॥
प्राप्य गोवर्द्धनं कृष्णो गोपकन्यागणावृतः ।
शृङ्गाररसलीलाभिस्तथाहास्यरसैरपि ॥ ९७ ॥
रौद्राद्भुतरसैः क्वापि भयानकरसैः क्वचित् ।
क्वचिद्वीररसक्ष्वेलया कदाचित्करुणारसैः ॥ ९८ ॥
क्वचिद्वीभत्सरसतो रेमे रत्यादिभावतः ।
वर्तुलाकारविलसन्मण्डपं सुमनोहरम् ॥ ९९ ॥
चतुर्द्वारसमायुक्तं घण्टाकोटिरवाकुलम् ।
स्वर्णभित्तिप्रविन्यस्तरत्नराजिसमुत्थितैः ॥ १०० ॥
विचित्रैस्तेजसां पुञ्जैर्बहिरन्तर्विलेपितम् ।
सहस्रस्तम्भमालाभिर्मणीनां दिव्यवर्चसाम् ॥ १०१ ॥
प्रतिस्तम्भप्रविन्यस्तपुत्रिकाभिरलंकृतम् ॥
भित्युपशाङ्कुविलसच्चारुचामरकोटिभिः ॥ १०२ ॥
इन्द्रनीलमयैः क्वापि मयूरैः स्तम्भमूर्धगैः ।
दीर्घिकाभिरसङ्ख्याभिर्वमन्तीभिर्जलोत्करान् ॥ १०३ ॥
रत्नाङ्गणलसच्चारुकुट्टिमस्थाभिरद्भुतम् ।
दिव्यमाणिक्यमुक्तादिस्फूर्जद्रुमिद्धतोरणम् ॥ १०४ ॥

१ दातारा इ० पा० भे०। २ एवं विधिः इ० पा० ।

पुष्पोद्यानसमीरेण सेव्यमानं समन्ततः ।
दिव्यैर्हृद्यैर्गन्धद्रव्यैः शुद्धैर्मिश्रैः सहस्रशः ॥ १०५ ॥
विरजावायुभिर्नॄणांश्चमत्कारकरं हृदाम्[1] ।
दिव्यागरुमहामोदधूपधूमैः सुधूपितम् ॥ १०६ ॥
दिव्याङ्गणसमाविष्टसहस्रपरिचारिकम् ॥ १०७ ॥
अक्षरात्मा परानन्दः किशोरः कामविग्रहः ।
माविश्य मण्डपस्थानं[3] नभोमण्डलवद्धनः ॥ १०८ ॥
विद्युद्भिरिव गोपीभिर्विष्टरे रत्नभासुरे ।
मध्ये रराज राकेशस्ताराभिरिव शारदः ॥ १०९ ॥
इति श्रीपुराणसंहितायां रासक्रीडासमारम्भो नाम तृतीयोऽध्यायः॥ ३॥
आदितः श्लोकानां समष्टयङ्काः ॥ २२१ ॥

---

## अथ चतुर्थोऽध्यायः ॥ ४ ॥

॥ वेदा ऊचुः ॥

तत्रोपविष्टो भगवान्पूर्णकामः परात्परः ।
गोपीभिर्विविधा क्रीडारसभावैः प्रसादितः ॥ १ ॥
व्युप्तमुक्तं पद्मरागदण्डं व्यजनमद्भुतम् ।
सरोजमृदुहस्तेन ललिता समवीजयत् ॥ २ ॥
गङ्गातरङ्गधवलं शरदिन्दुशीतं मुक्तामयूखसुधया परिसिक्तबालम् ।
विद्युत्स्फुरत्सुभगदंडमणिप्रकाश मादाय चामरमसेवत चित्रदन्ती॥३॥
सम्पूर्णशारदशशाङ्कसहस्रगौर मावद्धमौक्तिकमणिप्रभयानुविद्धम् ।
उद्दामहीरकलसोज्ज्वलमिन्दुरेखाछत्रं व्यधत्त मणिदण्डमनङ्गमूर्त्तेः॥४॥
परिस्कृतं जाम्बुनदेन दिव्यमनर्घ्यमुक्तामणिशोभमानम् ।
सुनिर्मलं दर्पणमादधाना तस्थौ पुरः प्रेमकला प्रियस्य ॥५॥

---

१ नृणाम् इ० पा० भे० । २ महामोद इ० पा० । ३ मण्डपस्यान्तः इ० पा० भे० ।

काचिन्मरालीति मनोज्ञवेषा कृष्णानने दत्तदृगन्तचित्ता ।
स्मेरानना धीरमृदङ्गवाद्यमास्फालयामास कराम्बुजाभ्याम् ॥६॥
काचित्कुरङ्गी मृदुहस्तभावा रसावशा वैणिकतन्त्रदक्षा ।
विनिघ्नती पाणिनखाग्रकोटया वीणामुपादाय सभाजयत्प्रियम् ॥७॥

षड्जऋषभगान्धारमध्यपञ्चमधैवतम् ।
निषाद इति वै सप्त स्वरा ग्रामास्त्रयः स्मृताः ॥ ८ ॥
तानाश्चैकोनपञ्चाशत् मूर्च्छनास्त्वेकविंशतिः ।
मूर्छनाग्रामवत्या च स्वरसप्तकभूषया ॥ ९ ॥
वर्णितं च प्रियं चेतांस्यविशन् गोपयोषिताम् ।
प्रियोपि तासामविशच्चेतांसि रसविग्रहः ॥ १० ॥
सखीभावं गतः कृष्णः प्रियाः कृष्णत्वमाययुः ।
व्यस्तात्मानस्तदान्योऽन्यं चक्रुश्चेष्टां स्वतोन्यथा ॥ ११ ॥
अहं कृष्ण अहं कृष्ण इत्यूचुः सर्वयोषितः ।
अहं श्यामा चित्रदन्ती ललितेत्यब्रवीत्प्रियः ॥ १२ ॥
ततः सङ्कल्पसिद्धाभिर्भूषाभिः कृष्णभावुका ।
राधा विभूषयामास स्वात्मानं धृतदर्पणा ॥ १३ ॥
दधार कटिदेशे सा पीतं वासः शुचित्विषा ।
मुक्तारत्न[1]स्फुरत्प्रान्तं चन्द्रज्योत्स्नामिवोद्गमत् ॥ १४ ॥
उत्तरीयं दधौ तद्वत्तादृशे चैव वाससी ।
दधार मूर्ध्नि विलसच्छिखिपिच्छं श्रियोज्वलम् ॥ १५ ॥
मुक्तास्रग्भिर्विचित्राभिर्लम्बमानाभिरत्यधः ।
भूमाववतरद्भिश्च प्रवाहैः स्वर्धुनेरिव ॥ १६ ॥
मन्दारपारिजातादिपुष्पस्तबकराजिभिः ।
विराजमानममलं स्वर्णभक्तिसमुज्ज्वलम् ॥ १७ ॥
कोटीन्दुविलसद्रत्नप्रभापूरितदिङ्मुखम् ।

---

१ मुक्तरत्न इ० पा० भे० ।

विद्योतयन्तमाकाशं किरीटमकरं श्रिया ॥ १८ ॥
दधार कर्णयुगले विद्युद्दामवमन्मुखम् ।
चन्द्रखण्डसमप्रख्यकपोलयमुनाम्भसि ॥ १९ ॥
प्रतरन्मीनयुगलमिव कुण्डलयोर्युगम् ।
वैडूर्यपद्मरागादिमुक्तामणिचितान्तरान् ॥ २० ॥
हारानाधच रुचिरान् द्योरिव ज्योतिषां गणान् ।
दधौ मुरलिकां वक्रे रन्ध्राष्टकविराजिताम् ॥ २१ ॥
शब्दब्रह्मानन्दमयीं मुक्तास्तवकलम्बिनीम् ।
न्यस्याधरदले दिव्यां मुरलीं मधुरस्वराम् ॥ २२ ॥
त्रिभङ्गललितो भूत्वा वादयामास वा यदा ।
सङ्कल्पमात्रसंसिद्धभूषाभूषितविग्रहः ॥
कृष्णो राधामयीं मूर्तिं धृत्वा मोहमुपागतः ॥ २३ ॥
राधात्ममानी कृष्णस्तु राधा कृष्णात्ममानिनी ।
कुपित्वा मानमास्थाय गत्वा कुञ्जान्तरेऽस्थितः ॥ २४ ॥
कृष्णवेषधराराधा राधावेशधरो हरिः ।
अन्यथाभावमापन्नौ अभूतां गाढमानिनौ ॥ २५ ॥
कृष्णमूर्त्तिस्तु सा राधा प्रेमात्मकलहातुरा ।
एकैव संस्थिता कुञ्जे गद्गदस्राकुलेक्षणा ॥ २६ ॥
कमलं कमलेन धारयन्ती कमलाभ्यां कमलं विमुञ्चती ।
अतिशुद्धसुवर्णकुम्भयोरिव मुक्ताफलवृन्दवर्षिणी ॥ २७ ॥
कमलोदरमध्यनिःसरत्मलयाद्रिप्रतिमेन वायुना ।
कमलान्यमलानि निर्गलन्मधुधाराणि विनिर्दहन्त्यपि ॥ २८ ॥
अतितापभरोरुतापितादधृदयान्निश्वसितेन सोष्मणा ।
विरसीकृतविद्रुमाधरा विरहव्याधिमवाप राधिका ॥ २९ ॥
अथ तत्परिचारिकागणः (जनः) सुदृढां तापदशां निरीक्ष्य च ।

---

१ पूर्णम् ।

उपचारविधानचञ्चुरः सहसोपासत कुञ्जसद्मनि ॥ ३० ॥
जलसिक्तसरोजिनीदलैः प्रमदा काचन तामवीजयत् ।
अतितापनिरासहेतवे जलजवृन्दमधादथोरसि ॥ ३१ ॥
कापि कोमलमृणालमालिकामादधार करयोस्तथोरसि ।
ऊर्णुनाव नयनाम्बुजे सखी कापि पाणिकमलेन सौहृदात् ॥३२॥
चन्दनद्रवविलेपमङ्गना कापि तद्धृदि ललाटमस्तके ।
मस्तकेशपरिमुक्तभूषणे व्याततान परितापशान्तये ॥ ३३ ॥
कापि वृक्षमृदुपल्लवोत्करैरत्यनल्पसुखतल्पमङ्गना ।
आरचय्य प्रणिनाय राधिकामन्तवह्निविरहज्वरातुराम् ॥ ३४ ॥
काप्युशीररचितेन वल्गुना प्रोक्षितेन मलयोद्भवैर्द्रवैः ।
तापभारपरिहारपण्डिता वीजति स्म व्यजनेन सुन्दरी ॥ ३५ ॥
कापि शीतलसुवासवासितं पद्मिनीपुटसमर्पितं पयः ।
राधिके पिब पिबेति वै पुरः संनिधाय मुहुराह राधिकाम् ॥३६॥
कोटिकामकमनीयविग्रहं विद्युदुल्लसदनर्घ्यकुण्डलम् ।
बर्हिबर्हमुकुटं कटिस्फुरद्रत्नमेखलमुदञ्चितभ्रुवम् ॥ ३७ ॥
शोकसागरविशोषणस्मितं चारुपीतपरिधानपेशलम् ।
उल्लसन्नखमयूखपूरितप्रान्तरन्ध्रमुरलीनिनादिनम्[२] ॥ ३८ ॥
फुल्लगल्लमवभुग्नकन्धरं श्यामधाममणिगर्वमोचनम् ।
दक्षिणोत्तरविवर्त्तितोल्लसद्रत्ननूपुरमयूखवर्षिणम् ॥ ३९ ॥
मालिकामुरसि हारशोभिते बिभ्रतं यश इवानन्यगम् ।
धीरनाभिवलिवल्गुमध्यमं गूढगुल्फयुगमुन्नमन्नखम् ॥४०॥
नीरजारुणपरिस्फुरन्नखव्रीडितायुततुषारमण्डलम् ।
सूक्ष्मलक्ष्ममृदुरोमराजिकां बिभ्रतं हृदयमाशु नाभितः ॥४१॥
कम्बुकण्ठपरिवर्त्तिभूषणद्योतसुस्मितमिथः प्रभाविलम् ।
वागतीतकथनामिकोल्लसन्मौक्तिकच्छविसुरङ्गवालिकम् ॥४२॥

---

२ तम् इ० पा० भे० ।

कुञ्चिताधरमुखोपसादितस्वर्णमुक्तमणिनद्धवेणुकम् ।
तन्निनादमृदुमाधुरीद्रवैस्तर्पयन्तमपि योषितां मनः ॥४३॥
लिख्य चित्रचतुरा तु चातुरीधाम कामकमनीयसौष्ठवम् ।
पश्य पश्य सखि कृष्णमन्तिके व्यादिदेश रतये यथा स्मरम्॥४४॥
मग्नचित्तमकराक्षरो दधौ भूय एव प्रतिपद्य चेतनाम् ।
शोकसागरजलेऽतिदुःसहे निःपपात परिलम्बवर्जिता ॥४५॥
वीक्ष्य चित्रलिखितं प्रियं प्रिया किञ्चिदुच्छ्वसितमानसेक्षणा ।
शान्तये प्रतिदधौ मनस्विनी तद्वियोगमयकृष्णवर्त्मनः ॥४६॥
चित्रमूर्त्तिमुपगूह्य सुन्दरी किञ्चिदाप मनसोपनिर्वृतिम् ।
घर्मतप्तकरिणीव शीतलं वायुमम्बुजवनोपमर्द्दिनम् ॥ ४७ ॥
आलि किं विरहतापशान्तये रच्यते सदुपचारचातुरी ।
अन्तराज्वलदनङ्गहव्यभुक्शान्तिमेति बहिरमृतोक्षणैः? ॥४८॥
पीडितस्य क्षुधया कृशीयसः प्रीतये भवति कोऽपि मद्गुणः? ।
मत्स्यमम्बुपरिवर्त्तनच्युतं तृप्तिमेति किमु दुग्धपायनैः ॥४९॥
चन्दनं यदपि शीतलं शिवं तापहारि वपुरेत्यमामकम् ।
तापकं भवति पावके पतद्दारु चन्दनभवं यथालि भोः ॥५०॥
एष मे तुदति वायुरुल्लसन्नम्बुजव्यजनजन्मवानपि ।
लोकमुल्बण इवातिनीरसः शुद्धवंशजनितोऽपि निर्घृणः ॥५१॥
मूर्द्धकण्ठपरिलम्बिनी शिवा मालिका मृदुमृणालसम्भवा ।
सर्पिणीव गरलाग्निवर्षिणी भाति मे हृदि किमुच्यतेऽपरम् ॥५२॥
तोयमेतदमलं सरोजिनीपत्रमध्यनिहितं ददासि यत् ।
नासिकाननसमीरदूषितं ताम्रजो द्रव इवातिदुःसहम् ॥५३॥
उत्तमैः कुसुमपल्लवैश्चितं तल्पमेतदपि नो सुखास्पदम् ।
भाति भामिनि भयप्रदं महाङ्गारराशिरचितं हविर्भुजः ॥५४॥
इन्दुरुल्लसति सौधबिन्दुभिस्तर्पयत्यखिलकाननौकसः ।
मद्वपुर्दहनसाधने कुतः प्राप्तवान् गरलवर्षिणः करान् ॥ ५५ ॥

स्पृष्ट एव सुतनु व्यथाकरो वह्निरस्ति जगतीति निश्चितम् ।
श्यामसुन्दरवरस्तु केवलं चिन्तितोऽपि दहनोपमोधुना ॥५६॥
चित्रितो[1] यदि भवत्यसौ बहिस्तापशान्तिरुपपद्यते तदा ।
अन्तरप्यपगते बहिर्यथा धिग्धिगर्थरहितायुषापि किम् ॥५७॥
आलि तत्कुरु सहाय्यमाशु मे दाववह्निविरहोपशान्तये ।
प्राणनाथमधुराधरामृतं पाययस्व प्रकृतिं यथा भजे ॥५८॥
इत्युदीरितवतीं मनस्विनीमन्तवह्निविरहज्वरातुराम् ।
राधिकामधिकमुग्धमानसां मानशान्तिकरमाह भामिनी ॥५९॥

॥ भामिन्युवाच ॥

मानमुत्सृज मुधानुतापिनं नापि तं पुनरुपैतुमर्हसि ।
कोऽपि वा सुखनिरासहेतवे दुःखदं विधिमुपैतुमिच्छति ॥ ६० ॥
कोऽप्यपूर्व इव मान एष ते भामिनीषु न मया विलोकितः ।
प्राणनाथप्रतिरूपलोकने लोचने रज इवारुणद्धि यः ॥ ६१ ॥
कार्यमर्थमुपयाति नो यदा हेतुतापितहृदा जनः स्वयम् ।
किं तदा विमलबुद्धिवृत्तिकं पृच्छतीह न यथार्थदर्शनम् ॥६२॥
मानिनीजनमनोनुखेदयन्मान एव किल विप्रयोगकः ।
प्रेमहेतुरपि तत्तिरोदधेद्वारिपूरमिव शैवलाकरः ॥ ६३ ॥
भावरत्नपरिपूरितान्तरो नायकापकृतिनक्रचक्रभूः ।
मान एष जलधिः प्रियंवदे तत्र मद्वचनपोतमाश्रय ॥ ६४ ॥
मद्वचस्यवितथे सखि सत्तां मानयस्व न वदामि मुधाहम् ।
नो हितं श्रुतिसुखं न च पथ्यं वल्लभं भवति मानिनि मन्ये ॥६५॥
त्वद्वियोगविवशीकृतचेता विस्मृतान्ययुवतीजनरागः ।
एकमेव तव नाम गृणीते राधिकेति पुनरेव पुनश्च ॥ ६६ ॥
चिन्तयत्यविरतं तव रूपमुल्लसद्भ्रुकुटिलालकजुष्टम् ।
भावपूरितदृगन्तमब्जाक्षं चन्द्रखण्डकमनीयकपोलम् ॥ ६७ ॥

(१) चित्ततो इत्यपि पाठान्तरम् ॥

अश्रुलुप्तनयनाञ्जनरेखं तापसन्ततिविशोषिताधरम् ।
वारिक्लिष्टकमलोपमवक्त्रं मानदन्दशुकदंशनघूर्णम् ॥ ६८ ॥
नोपयाति यदि तं स्वरविन्दलोचनं तव वियोगवह्निना।
तप्यमानहृदयं हृदयेशं तापयिष्यसि मनः स्वयमेव ॥ ६९ ॥
किं वदामि बहुमानिनि मानं मुञ्च पूरय मनोरथमस्य ।
त्वां मनोरथमयीं हृदि धृत्वा क्विञ्चिदुच्छ्वसति सन्ततज्वरः॥७०॥
कुञ्जपुञ्जपिहिता परिभूय स्वं प्रियं स्थितवतीति न युक्तम् ।
सोऽपि कुंञ्जशतसञ्चरमाणस्त्वामपश्य विवशाकृतिरस्ति ॥ ७१ ॥
नो वयं प्रियमुखं परिद्रष्टुं शक्नुमस्तव वियोगविमीदत् ।
राधिकेऽस्तमितचारुविभ्रमं द्वारदत्तहृदयेक्षणं मुहुः ॥ ७२ ॥
किं प्रिया प्रियतमं व्यथाभरोद्भ्रान्तचित्तमपि नावलोकयेत् ।
निर्दयासि सखि साम्प्रतं यतः खिन्नचेतासि न यासि वै दयाम्॥७३॥
तापशान्तिविधयः प्रयोजिताः सर्व एव विफलत्वमागताः ।
कल्पकालहुतभुग्वियोगजास्त्वां महौषधिमपेक्षते रुजः ॥ ७४ ॥
यं यमेव समयं विलम्बसे त्वं निमेषमपि तन्वि साम्प्रतम् ।
तत्र तत्र युगकोटिकल्पितां धैर्यविच्युतिमुपैति ते प्रियः ॥ ७५ ॥
हन्त हा कठिनचेतसोऽबलाः बालिशा विदितमेव साम्प्रतम् ।
यन्निरागासि विरागिणीव किं प्रेम नाशयसि नित्यरागिणि ॥७६॥
यः कपोलमवधृत्य पाणिना लक्षिताक्षितिरधोक्षिवारि यः ।
मुञ्चति प्रियतमस्तु तज्जलैः कुण्डमायतमहो समुत्थितम् ॥७७॥
यद्यमन्दतरमानगर्विता नो करोषि तदनुग्रहे दृशम् ।
तद्विलोचनजलैर्विनिर्मिताम्भोधिमज्जितमिदं भविष्यति ॥ ७८ ॥
त्वद्वियोगपवनोतिरंहसोन्मूलयत्यतनुधैर्यपादपम् ।
चातुरी तदनु माधुरी मतिः कान्तिरस्तमुपयाति पुष्पवत् ॥७९॥
मानव्यालविषाविघूर्णनयना राधा सखीसद्वचः,

१ विषाविघूर्णहृदया इत्यपि पाठः ।

पीयूषं परिपीय किञ्चिदमलस्त्रान्त्वानुसन्धत्त सा ॥
विक्षिप्तामलकावलिं स्वकरजैर्नीत्वा यथास्थानकं ।
नेत्रे बाष्पकलाकुले परिमृजन्त्याहाम्बरस्याञ्चलैः ॥८०॥

इति श्रीपुराणसंहितायां श्रीराधामानतापो नाम चतुर्थोऽध्यायः॥४॥
आदितः श्लोकानां समष्ट्यङ्काः ॥ ३०१ ॥

# अथ पञ्चमोऽध्यायः ॥ ५ ॥

॥ श्रीराधोवाच ॥

यदात्थ वाक्यं सुरसं मनोज्ञरूपं प्रियं तथ्यमनर्थहारि ।
तथापि दूति क्रियते किमत्र रसोऽयमेवंविध एव दृष्टः ॥ १ ॥
स्वतन्त्र एवास्ति जनो न नूनं मनोवशे वर्तत एव नूनम् ।
यद्यद्रसाविद्धमिदं यदा तदा तत्साम्यमाप्नोति किमत्र कृत्यम् ॥२॥
शृङ्गारहास्याद्भुतवीररौद्रभयानकाद्यैरनुविद्धमेतत् ।
उपेतसाम्यं भजते हि वृत्तीस्तथाविधास्तद्रसभावरूपाः ॥ ३ ॥
संयोगविश्लेषदलोपपन्नः शृङ्गार एषो द्विविधो रसश्च ।
मानोऽपि विश्लेषतया विनिश्चितः प्रवर्तते हेतुमुपेत्य नान्यथा ॥४॥
सहेतुकोऽयं मम मान एष प्रवर्त्तितस्तथ्यमवेहि भद्रे ।
प्रियः सदा क्रीडति कुञ्जपुञ्जे विमुग्धचित्तो विरजाविलासैः ॥५॥
य एकदा मामनुरक्तचित्तां विहाय तद्विभ्रममूढचेताः ।
विलासयुक्तां रतिभावपूर्णां कुञ्जादकस्माद्विरजां प्रयातः ॥ ६ ॥
प्रयातु वा किं मम तेन नष्टं प्रेमध्वजश्चित्तसमीरतन्त्रः ।
विक्रीडमानोऽपि मया विलासी न विस्मरत्येव तदीयवार्ताम् ॥७॥
तथापि धिक् चित्तमिदं विलज्जं पुनः पुनस्तं प्रति धावते यत् ।
पतिव्रता एव भवन्ति नार्यो नारीव्रताः के पुरुषा भवन्ति ॥ ८ ॥
अनङ्गकोटिप्रतिमस्य तस्य वचः सुधास्वादुरसानुबन्धि ।
मलीनमन्तःकुटिलं मानेऽस्य का नाम वेत्तुं निपुणेन शक्ता ॥९॥

---

२ विदग्धचित्तः इत्यपि पाठान्तरम् । ३ याचते इत्यपि पाठः ।

सहस्रशोसावनुभूतपूर्वस्तथापि तस्मिन् रमते मनो मे ।
रागी यथा दुर्विगमे सदार्थे जनस्तथा नो सुलभे स्वतन्त्रः ॥१०॥
यद्यप्यसौ वेत्ति निकाममन्तर्धूर्तं स्वमात्मानमहो तथापि ।
प्रतारितः कामकलाभिरामविलासिनीभिः स्वयमेव मन्ये ॥११॥
कुरङ्गशावाक्षि चरित्रमस्य विचारितं मद्धृदयं रुणद्धि ।
यदाधिमूलं हृदयेऽवगम्य निःसारितुं नाहमलं विमूढा ॥ १२ ॥
[1]विधूयमानं कितवस्य पार्श्वमायामि चेन्मत्सरिणीति सिद्धा ।
नायामि चेदस्य वियोगवह्निज्वालावलिव्याप्ततनुर्भवामि ॥ १३ ॥
वियोगवह्नौ तृणवत्तनुर्मे ज्वलत्वलं मानमपास्य नाहम् ।
गच्छामि धृत्याप्यनयापि किं स्यात्पुनर्निरीक्षेय[2] मुखं प्रियस्य॥१४॥
वियोगवार्द्धिप्रतरैकसेतुं धैर्यं गुणं यावदहं श्रयामि ।
अधीरतापूर उदग्रवेगः सहस्रधा तं दलयन्नुपैति ॥ १५ ॥
तथापि साहं कितवस्य तस्य न यामि पार्श्वं हतमानदीना ।
यदीहसे सन्धिमनार्यमेनमिहानयस्वावधिरस्ति नान्यः ॥ १६ ॥

॥ वेदा ऊचुः ॥

एवं प्रलपतीं राधां वीक्ष्य सा भामिनी हरिम् ।
गत्वा निवेदयामास तदवस्थां[3] यथेक्षिताम् ॥ १७ ॥

॥ भामिन्युवाच ॥

अहो कमलपत्राक्ष कृष्ण राधापते विभो ।
राधां मानवतीं नाहमनुनेतुं क्षमाभवम् ॥ १८ ॥
प्राणत्यागोन्मुखी दीना राधा प्राणप्रिया तव ।
न मिलिष्यति चेत्कृष्ण प्राणांस्त्यक्षत्यसंशयम् ॥१९॥
नवावस्था तया प्राप्ता विरहे तव दुःसहे ।
भविता चरमावस्था यदि त्वं तां न सान्त्वयेत् (येः)॥२०॥

---

१ विमुच्यमानं इत्यपि पाठः । २ निरीक्षे क इ० पा० । ३ तदवस्था यथेक्षिता इ० पा० ।

दुराग्रहः स्त्रीस्वभावः पुरुषा अपि तद्विधाः ।
अविवेकः सर्वगतो विवेकः कमुपाश्रयेत् ॥ २१ ॥
हस्तन्यस्तकपोला सा नेत्रयोर्मुञ्चती जलम् ।
शुष्काधरदला तापादन्तर्निःश्वसति प्रिया ॥२२॥
सुभगरुचिरवस्त्रमाल्यहाराऽमलतरदिव्यमनोज्ञगन्धसौख्यम् ।
तव विरहविदूयमानचित्ता स्वहृदि सुदुःखदमित्यवैति राधा ॥२३॥
न पिबति परितापवह्निदग्धा श्वसितसमीरविदूषितं पयः सा ।
सखि हरिरुपयात एव सोऽसौ[1] पुनरिति सा पुनरित्थमाह बाला २४
श्रवणनयननासिकादिवृत्तिस्त्वयि परमप्रियनामधाम्नि धीरे ।
प्रविशति बधिरेव सान्धमूका परमिह तिष्ठति कुञ्जपुञ्जमध्ये॥२५॥
तव वचनसुधाभिषेकतोऽन्यन्नहि किमपीह तदीयजीवनाय ।
तव गमनविलम्ब एव तस्याः स्वहृदयमर्मनिकृन्तनाय शस्त्रम्॥२६॥
दिशि विदिशि वियोगवह्निदग्धा विपिनगता हरिणीव यूथभ्रष्टा ।
परिचकितविलोचनाधिमग्ना मुहुरपि सा मुहुरीक्षते भवन्तम् ॥२७॥
उपवनतरवो लतास्तदीयातिशयितदुःखनिरीक्षणेऽत्रकल्पाः ।
स्वयमिह गुरुदुःखभारभुग्नाः कुसुममिषेण सृजन्ति बाष्पधाराम्।२८।
वनभुवनविहङ्गमाः प्रचण्डज्वरदहनाकुलिताक्षरं लपन्तः ।
विटपिविततिकुञ्जसञ्चरन्तः प्रसभमुदीक्ष्य भवन्ति रुद्धवाचः ॥२९॥
हरिणसहचरीगणोऽपि तस्या व्यथितमुदीक्ष्य नितान्तशोकतप्तः ।
तृणकवलमुपात्तमास्यमध्ये न चरति साश्रु विलोचनानि धत्ते ॥३०॥
प्रियतमसरसीरुहगृहस्था भवदभिधानमुखी मुखं निरीक्ष्य ।
अतिकरुणरसार्द्रचेतसस्ते पिहितविलोचननिश्चला मरालाः ॥३१॥
नटवदनुपमं कलाः प्रसार्य स्फुटतरनृत्यविलासमारभन्तः ।
सपदि तदपसार्यमार्यवत्ते भृशमनुतप्तधियो मयूरसङ्घाः ॥ ३२ ॥
गदितमिदमनेकधा विमृश्य प्रिय हृदि साधय यद्भवेन्मनोज्ञम् ।

---

१ साऽसो पुनरिति पुनरित्थमेवमाह बाला इत्यपि पाठान्तरम् ।

गमनमगमनमेव हेतुरन्यो न भवति तन्मृतिजीवयोः किमन्यत् ।३३।

एवमादिवचोभावैः समाधत्ते सखी यदा ।
तावदाकाशगीराविर्बभूव शृण्वतोस्तयोः ॥ ३४ ॥
किं वृथा खिद्यसे कृष्ण जप मन्त्रं नवाक्षरं ।
क्षिप्रं राधावशकरं तूर्णमायास्यति प्रिया ॥ ३५ ॥
पूर्वं स्मृत्वा कामबीजं[1] राधे कृष्णेत्यतः परम् ।
प्रिये चोक्त्वा स्वर्णरेतःप्रियामुच्चारयेत्ततः[2] ॥ ३६ ॥
नित्यानन्दो ऋषिः प्रोक्तः छन्दोऽनुष्टुप् समीरितम् ।
देवता राधिका चेति विनियोगो वशीकृतौ ॥ ३७ ॥
करन्यासं ततः कुर्यात्त्रिभिः मन्त्रपदैः पृथक् ।
सकामैस्तैः[3] पुनः कुर्याद्धृदयादिद्विरीरितैः ॥ ३८ ॥
ध्यायेद्राधां ततश्चित्ते मदनाकुलमानसाम् ।
सितांशुशतमङ्काशवदनामुल्लसद्भुवम् ॥ ३९ ॥
हीरमुक्तोल्लसद्दामविलसद्गण्डमण्डलाम् ।
कस्तूरीकुङ्कुमामोदविलसद्भालदेशिनीम् ॥ ४० ॥
बिम्बाधरपुटां रम्यां विकीर्णश्यामकुन्तलाम् ।
रत्ननूपुरसंशोभिपादाम्भोजविराजिताम् ॥ ४१ ॥
रसभावाकुलां ध्यायेद्राधां वृन्दावनेश्वरीम् ।
ततो मन्त्रं जपेत्सम्यक् यतचित्तो निराकुलः ॥ ४२ ॥
निशम्य खगिरा प्रोक्तमुपायं क्षिप्रसिद्धिदम् ।
जजाप मन्त्रं श्रीकृष्णो राधामाधाय चेतसि ॥ ४३ ॥
तन्मन्त्रशक्तिसामर्थ्याद्राधा कृष्णमयी शुभा ।
कृष्टचित्ता समायाता स्वालीगणसमावृता ॥ ४४ ॥
अथ तामागतां दृष्ट्वा भामिनी सुकुतूहला ।

---

१ क्लीमिति ककारलकारदीर्घईकारबिन्दुयोगेन । २ स्वर्णरेतःप्रिया स्वाहा इति । ३ क्लीमिति बीजसहितैस्त्रिभिर्मन्त्रपदैः। नवाक्षरो मनुरयं त्रिपदः । 'क्लीं राधे कृष्णप्रिये स्वाहा' इति मन्त्रः ।

ध्यानलीनान्तरं कृष्णं आभाष्योवाच सद्गिरम् ॥ ४५ ॥

॥ भामिन्युवाच ॥

जितं जितं त्वया कृष्ण मानमुत्सृज्य राधिका ।
स्वयमायाति निर्भिन्ना कामबाणैर्दुरासदैः ॥ ४६ ॥
प्रस्खलत्पदविन्यासा विकीर्णचिकुरानना ।
प्रभिन्नकञ्चुकीबन्धा स्वेदबिन्दुमुखच्छविः ॥४७॥
प्रत्युग्रतापसन्तप्तवक्षोजाधरपल्लवा ।
प्रस्विन्नजघनाक्रान्ता श्वसन्ती श्लथनीविका ॥ ४८ ॥
ध्यानं मुञ्च प्रपश्यैनां फलितस्ते मनोरथः ।
अनायासेन सिद्ध्यन्ति कार्याणि महतां खलु ॥ ४९ ॥
श्रुत्वैतद्भामिनीवाक्यं कृष्णो विह्वलमानसः ।
उन्मील्य नेत्रे सहसा ददर्श स्वयमागताम् ॥ ५० ॥
राधां दृष्ट्वा हरिश्चित्ते तर्कयामास चित्रधा ।
मद्भाग्यमिव चायातं देहबद्धं चिरेण हि ॥ ५१ ॥
अथवा प्राणशक्तिर्मे नष्टैव पुनरागता ।
कोटिब्रह्माण्डमङ्गानां दैवतेव किमागता ॥
निःसङ्गस्य निरीहस्य सर्वस्वमिव मे स्फुटम् ॥ ५२ ॥
मन्मोहावरणच्छेत्री कौमुद्युल्लसतीव किम् ।
मन्त्रध्यानसमाकृष्टा सिद्धिरेषा किमश्नाति ॥ ५३ ॥
शृङ्गाररससाम्राज्यलक्ष्मीवानुग्रहोन्मुखी ।
धाटीव कामदेवस्य जगच्चक्रवशङ्करी ॥ ५४ ॥
कल्पान्तहुतभुक्कल्पविरहव्यथितं हि माम् ।
लीलारसमहावृष्ट्याभिषेक्तुं मेघमण्डली ॥ ५५ ॥
किं वा मन्मानसचरी हंसीवायाति मे पुरः ।
जगज्जयोद्यतानङ्गवशीकरणमूलिका ॥ ५६ ॥
सौरभ्यगर्भाननपङ्कजाढ्या लावण्यलीलाजलपूरपूरिता ।

विलोलनेत्रस्फुरमाणनक्रा शैवालभावायितकेशपाशा ॥ ५७ ॥
धम्मिल्लपुष्पोदितफेनशोभा वक्षोजसम्पादितचक्रवाका ।
गम्भीरनाभ्युद्यतरोमराजिव्याजेन वल्लीश्रियमादधाना ॥५८॥
मृणालविद्योतितबाहुयुग्मा तरङ्गरङ्गात्रिवलीविलासा ।
परिक्वणन्नूपुरहंसरावा सुचारुकाञ्चीस्वनपक्षिनादा ॥ ५९ ॥
निदाघतप्तश्रमतापवारा भूषामणिव्यक्तसुकर्कराश्या ।
श्रमाम्बुसिक्तम्मृगनाभिपङ्का किं जङ्गमा पुष्करिणी समेति ॥६०॥
स्वानन्दमुद्गिरन्नेवं वचोभिर्भावगर्भितैः ।
कृष्णः कामकलापूर्णस्तयाक्षिविषयीकृतः ॥ ६१ ॥

इति श्रीपुराणसंहितायां राधिकाप्रसादो नाम पञ्चमोऽध्यायः ॥५॥
आदितः श्लोकानां समष्ट्यङ्काः ॥ ३६२ ॥

## अथ षष्ठोऽध्यायः ॥ ६ ॥

॥ श्रीवेदव्यास उवाच ॥

सर्वज्ञाः सर्वशास्तारः सर्वभूतहितार्थिनः ॥
प्रब्रुवन्तु महाभागा यथासीत्सङ्गमस्तयोः ॥ १ ॥
कथं तयोः स्मृतिरभूद्रस्तुतो विस्मृतात्मनोः ॥
स्मृतिलाभे पुनः किं वै चक्रतुस्तद्वदन्तु भोः ॥ २ ॥

॥ वेदा ऊचुः ॥

शृणुष्व भो महाप्राज्ञ यन्नः पृच्छसि तत्वतः ॥
नैतद्धूर्तेखलव्रात्यपतिताभक्तगोचरम् ॥ ३ ॥
दृष्ट्वा प्रियं प्रसन्नापि व्रीडयाधोमुखी स्थिता ॥
दूरीकर्त्तुं ततो लज्जां विधिं तत्रासृजद्धरिः ॥ ४ ॥

॥ श्रीकृष्ण उवाच ॥

प्रियेऽपराधिनं दासं कथं प्रेम्णा नहीक्षसे ॥
त्वदीक्षामृतसंसेकविरहान्मृतकोपमम् ॥ ५ ॥
नैवापराधलेशोऽपि विद्यते मयि भामिनि ॥

मन्यसे चेत्प्रतिविधिं कुरु तत्र यथोचितम् ॥ ६ ॥
यथापराधिनः कण्ठो बध्यते बन्धनैर्दृढैः ॥
तथा बन्धय मे कण्ठं बाहुपाशेन गाढतः ॥ ७ ॥
यथापराधिनः शस्त्रैः खण्ड्यते निशितैर्वपुः ॥
तथा खण्डय मे गात्रं तीक्ष्णैः पाणिनखाङ्कुरैः ॥ ८ ॥
यथापराधिनो देहं क्रुद्धः कश्चिल्लुनाति हि ॥
तथा लुनीहि दशनैरधरं चण्डि निर्दया ॥ ९ ॥
यथापराधिनो वक्षः पीडयते च दृढोपलैः ॥
तथा पीडय मे वक्षः कुचभाराधिरोहणैः ॥ १० ॥
एवं विधाननेकांश्च कुरु प्रतिविधीन्मयि ॥
नो चेन्मित्रवदाचारान्मयि कर्तुमिहार्हसि ॥ ११ ॥
मित्रं चिरागतं दृष्ट्वा यथातिथ्येन पूजयेत् ॥
तथा पूजय मां भद्रे तापार्त्तिशमनाय हि ॥ १२ ॥
अतिथिं कश्चिदायान्तं फलेन परितोषयेत् ॥
तथा तोषय मे चेतो दत्वा फलकुचद्वयम् ॥ १३ ॥
अतिथिं कश्चिदायान्तं मधुरैस्तोषयेज्जलैः ॥
तथाधरसुधां दत्त्वा तापशान्ति विधत्स्व मे ॥ १४ ॥
अतिथेः कश्चिदंगेषु भक्त्या चन्दनमर्पयेत् ॥
तथा लेपय मे गात्रं त्वद्वक्षोरुहचन्दनैः ॥ १५ ॥
अतिथिं मित्रमायातं यथैवालिंगते दृढम् ॥
तथोत्थायोपगूढं मे देहि प्रेम्णा[1] पुरस्कृतम् ॥ १६ ॥
यथा मित्रमुपायान्तं कश्चिद्वाचानुरंजयेत् ॥
विहारशिक्षानुनयैर्वचोभिरनुरंजय ॥ १७ ॥
न हि मित्रे समुचितो मानो मानिनि कर्हिचित् ॥
न कुर्यादनुकूले तं शठे दृष्टो यतो हि सः ॥ १८ ॥

१ प्रेमपुरस्कृतम् इत्यपि पाठः ।

दृष्टिः प्रेमभराक्रान्ता मधुरानन्दवर्षिणी ॥
कथं मय्यद्य कुटिला कलुषा रूक्षतां गता ॥ १९ ॥
दुःखस्थं वियोगार्त्तं धैर्यहीनं निरागसम् ॥
किं मां भ्रुवा भीषयसि सर्पिण्येव दुरन्तया ॥ २० ॥
निर्मूलं मानमास्थाय स्वात्मानं मां च खिद्यसे ॥
अपकृतिपरं शत्रुमिव मत्वा तमुत्सृज ॥ २१ ॥
विरजाकुंजगमनं यदि मूलं च मन्यसे ॥
तदप्यपार्थं को वेत्ति कस्यचिद्धृदयाशयम् ॥ २२ ॥
अनुभूतं[1] त्वयि रसमनूत्तममनूपमम् ॥
विमर्षितं हृदि मया रसिकेन कुतूहलात् ॥ २३ ॥
यथा राधाविहारेषु प्रादुर्भूतो रसो भवेत् ॥
तादृग्विधोऽपि कस्यांचिज्जायते वा न जायते ॥ २४ ॥
इति निश्चेतुमनघे प्राप्तोहं विरजागृहम् ॥
तदुक्तं त्वद्वयस्याभिस्त्वदग्रे विप्रियं तव ॥ २५ ॥
तदानीं तव मानस्तु मया यत्नादपाकृतः ॥
पुनः किं हृदये स्मृत्वा पुरातीतं विपद्यसे ॥ २६ ॥
हृद्यारूढं कुतस्तेऽद्य दिव्यक्रीडारसोदये ॥
येन मामपहायात्र संस्थिता नोचितं तव ॥ २७ ॥
यथा त्वयि रसोद्भूतिरनुभूतामयानिशम् ॥
न तथा विरजासंगे तथान्यासु सखीष्वपि ॥ २८ ॥
तस्मादुत्तिष्ठ कल्याणि प्रसन्नेनान्तरात्मना ॥
प्रसन्नायां त्वयि मनः प्रसीदेति ममापि हि ॥ २९ ॥
त्वय्यप्रसन्नचित्तायां ममात्मा परितप्यते ॥
नोपचारविधिस्तत्र कदाचित्कर्हिचिद्भवेत् ॥ ३० ॥
यथा लोके ज्वरार्त्तस्य शीतलाद्युपपत्तयः ॥

---

१ अनुभूय इ० पा० ।

तापायैव भवन्त्येते न पुनस्तापशान्तये ॥ ३१ ॥
तथा त्वद्विप्रयोगाग्निपरितप्तस्य सांप्रतम् ॥
संयोगसुखदाः सर्वे व्यथयन्त्युपचारकाः ॥ ३२ ॥
तत्रैता एव साक्षिण्यो न मयानृतमुच्यते ॥
त्वद्वियोगार्चितप्तस्य मम नेत्रसरोरुहात् ॥ ३३ ॥
गळदश्रुप्रवाहौघैरगाधं कुंडमुत्थितम् ॥
मन्नामांकितमेतद्धि कृष्णकुण्डं भविष्यति ॥ ३४ ॥
तवापि नेत्रसलिलैरंजनच्छुरितैर्बहु ॥
जातं कुण्डं च त्वन्नाम्ना राधाकुण्डं भविष्यति ॥ ३५ ॥
जलक्रीडाविधानानि भविष्यन्त्यावयोरिह ॥
सिद्धिरूपासि चाराध्या राधिका जीवनं मम ॥ ३६ ॥
राधिके राधिके चेति यो वदेद्वैखरीं जनः ॥
यत्र यत्र च तत्राहं गतएवेति निश्चितम् ॥ ३७ ॥
ये स्मृत्वा भावयन्ति त्वां तैरहं भावितः सदा ॥
तत्र मे वास्तवं रूपं यत्र यत्र भवद्दृ(शि)शः ॥ ३८ ॥
त्वं वपुरहमात्मा च नावयोः किंचिदन्तरम् ॥
अविनाभावसम्बन्ध औष्णस्येव विभावसोः ॥ ३९ ॥
अविचारो दुःखमूलमेवं जानीहि राधिके ॥
विचारय निजे चित्ते त्वत्तोहमपरोस्मि भोः ॥ ४० ॥
प्राणस्य मे क्रियाशक्तिर्नेत्रयोर्भास्करी प्रभा ॥
मन्मनश्चन्द्रिकासि त्वं किमतः परमुच्यते ॥ ४१ ॥
तस्मात्प्रसीद कल्याणि मा मामाकुलयाधुना ॥
अकलङ्कं त्वदासक्तं त्वत्प्राणं त्वदुपासकम् ॥ ४२ ॥
एवं गदन्तमादाय हस्ते सा भामिनी सखी ॥
दर्शयामास राधायै कृष्णं कमललोचनम् ॥ ४३ ॥

---

१ गत एव नसंशयः इ० पा० ।

॥ भामिन्युवाच ॥

राधे कुटिलतां चित्तान्मुंच पश्य निजं प्रियं ॥
नातिमानः समुचितः प्रिये हृदयगामिनि ॥ ४४ ॥
ये ये क्षणा व्यतिक्रान्तास्तव प्राणप्रियं विना ॥
धिक् तानिरर्थकान्मुग्धे मा दौर्जन्यं प्रकाशय ॥ ४५ ॥
मुक्ताहारमपि प्रायः प्रियेण सह केलिषु ॥
प्रियांगविश्लेषकरं न दधासि जहासि तम् ॥ ४६ ॥
तस्य त्वं विरहं सोढुं कथं शक्तासि बालिशे ॥
का त्वामुपादिशत्येवमप्रियोक्तिपुरःसरम् ॥ ४७ ॥
प्रसादयंतमागत्य स्वयमुत्सृज्य गौरवम् ॥
पुरो बद्धांजलिं कान्तं कथमेनं न पश्यसि ॥ ४८ ॥
नैतावता महत्त्वं ते लाघवं न प्रियस्य च ॥
परं कुटिलतां सख्यः पश्यन्ति परितस्तव ॥ ४९ ॥
अपनीतो यदि पतिरुदास्ते दीन[1]मानसः ॥
मानस्यालोचय तदा भाविनी या दशा तव ॥ ५० ॥
प्राप्त्याशा व्याकुलीभूता प्रियस्य त्वं पुरा ह्यसि ॥
प्राप्ते पुनः कथं मुग्धे मानव्यालेन दंशिता ॥ ५१ ॥
स्वात्मनो हितमिच्छन्ती त्यज मानं सुदूरतः ॥
विषादहेतुं दुर्द्धर्षं सपत्नमिव शोकदम् ॥ ५२ ॥
विलोक्य प्रियं पादप्रान्तप्रणयिनं स्थितम् ॥
सफलीकुरुष्व नयने त्यजैतां विरहव्यथाम् ॥ ५३ ॥
पिपासाकुलितं कान्तं पाययस्वाधरामृतम् ॥
वाक्सुधावृष्टिभिर्मुग्धे प्रियमासेचयाकुलम् ॥ ५४ ॥
सापराधमिवाधःस्थदृष्टिं वर्षन्तमश्रुतिः ॥
सवेपथुं त्वत्प्रसादमभिकांक्षन्तं तमग्रतः ॥ ५५ ॥

---

१ दूनमानसः इ० पा० ।

बद्धांजलिं प्रणमितं नालोकयसि चेत्प्रियम् ॥
कथं न स्फुटते वक्षः किमु पाषाणनिर्मितम् ॥ ५६ ॥
तस्माद्विलोकय पतिं त्यज मानं सुदूरतः ॥
साध्वसाध्वपि मे वाक्यं मानयस्व हि मा चिरम् ॥५७॥
शर्वरीव विना चन्द्रं ऋतुराजं विना लता ॥
यथा श्रुतं विना शान्तिर्विना श्रद्धां यथा विधिः ॥ ५८ ॥
सरसीव विना पद्मं गृहं गृहपतिं विना ॥
विना कलां कलानाथः सदः साधुजनैर्विना ॥ ५९ ॥
न शोभते तथा नारी विना प्रियतमं पतिम् ॥
इत्याकलय्य मनसा मम वाक्यस्य गौरवम् ॥
अपसार्य मनःशल्यं प्रसन्ना भव सुव्रते ॥ ६० ॥

इति श्री पुराणसंहितायां श्रीराधिकासमागमो नाम षष्ठोऽध्यायः ।६।
आदितः श्लोकानां समष्ट्यंकाः ॥ ४२१ ॥

---

## ॥ सप्तमोऽध्यायः ॥ ७ ॥

॥ वेदा ऊचुः ॥

एवं सख्योक्तमाकर्ण्य वचः पीयूषपेशलम् ॥
मानव्यालविषज्वालां जहौ राधा प्रतापिनी ॥ १ ॥
किंचिदुन्नमितापाङ्गस्मितव्रीडानना सती ॥
प्रियं सम्भावयामास क्षन्तव्यमितिवादिनी ॥ २ ॥
प्रियोऽप्यश्रूणि नेत्राभ्यां विमृज्य स्वांचलेन वै ॥
सौरभ्यगर्भं वदनं चुचुम्ब चिबुकं स्पृशन् ॥ ३ ॥
उवाच वचनं चेति प्रिये मयि निरागसि ॥
एतावद्नुचितं कर्तुं प्रेम्णः किं कारणं भवेत् ॥ ४ ॥

---

१ शान्तिम् इ० पा० । २ चादिनं इ० पा० ।

आवयोः सामरस्यं यत् तद्विद्धि प्रेमकेवलम् ॥
न तत्र भेदो न कलिर्ब्रह्माद्वैतं तदुच्यते ॥ ५ ॥
त्वमहं च पृथग्भावो व्यक्तभावे प्रवर्तते ॥
अव्याकृतं च तद्रूपं रस इत्युच्यते प्रिये ॥ ६ ॥
आविर्भवत्यसौ व्यक्ते सामरस्यं तदावयोः ॥
रस्याख्यः सरसः प्रेम कथं तस्यवक्तुमर्हसि ॥ ७ ॥
का त्वं कोहं प्रेमहानौ निजरूपं यतोऽवयोः ॥
स्वपरव्यक्तिभेदेपि तत्राद्वैतार्थदर्शकम् ॥ ८ ॥
निर्गुणं निर्मलं नित्यं निरुपाधि भयोज्झितम् ॥
परमानन्दसद्रूपं प्रेम ब्रह्मैव सुन्दरि ॥ ९ ॥
अज्ञात्वा ललितं प्रेम स्वात्मानमपि सुन्दरि ॥
मत्स्वरूपं न जानासि ह्युभयं च तदात्मकम् ॥ १० ॥
अस्ति न प्रेम कुत्रापि प्रपञ्चे वाहिरुद्गते ॥
छायां समनुजीवन्ति लोकाः सर्वेपि सेश्वराः ॥ ११ ॥
न निषेधो न विधिस्तत्र यत्र प्रेम प्रवर्तते ॥
अनुत्पन्ने तु मर्याद यत्र वेदः प्रवर्तते ॥ १२ ॥
यज्वानो योगिनश्चैव ज्ञानिनो वा तपस्विनः ॥
अलब्ध्वा प्रेम परमं विसज्जन्ते स्वकर्मसु ॥ १३ ॥
विलक्षणैव सा सृष्टिः यत्र प्रेमैव साधनम् ॥
मत्प्रेमराहिता सा तु माययैव विनिर्मिता ॥ १४ ॥
न सा स्पृशति मत्प्रेम निशा सूर्यप्रभां यथा ॥
अप्राप्य प्रेम परमं प्रकृतौ प्रविलीयते ॥ १५ ॥
ये ये च प्राकृता जीवाः प्राकृतेन्द्रियतर्पणात् ॥
विषयेष्वभिसज्जन्ते प्राकृतेष्वेव सर्वदा ॥ १६ ॥
न तेषां प्रेमसम्बन्धो भविता कर्हिचित्क्वचित् ॥

१ सत्प्रेम इ० पा ।

अनास्वाद्य रसं मूढाः पुनरायान्ति यान्ति च ॥ १७ ॥
प्रकृतेः परमव्यक्तमक्षरं ब्रह्म केवलम् ॥
तत्केचित्प्रविशन्तोपि रसानुभववर्ज्जिताः ॥ १८ ॥
यथा जलं जले क्षिप्तं तादात्म्यमुपपद्यते ॥
तदात्मकास्तथा जीवाः ज्ञात्वा चैक्यमुपागताः ॥ १९ ॥
तस्यान्तर्यामिरूपेण स्थितोहं वरवर्णिनि ॥
रसैकभोगिनस्ते वै मल्लीलाविष्टमानसाः ॥ २० ॥
ममापि वास्तवं रूपं परमानन्दसुन्दरम् ॥
अवच्छेदविहीनं च वर्तते किञ्चिदद्भुतम् ॥ २१ ॥
निःशेषसाधनागम्यं नित्यलीलारसप्लुतम् ॥
आदिमध्यान्तरहितमानन्दाकारविग्रहम् ॥ २२ ॥
अगण्यानन्दजलधिमनाधारं सदा शिवम् ॥
तस्यापि व्यक्तिरपरा स्वामिनी समधर्मिणी[1] ॥ २३ ॥
तयोः कोट्यंशभागेन व्यक्तिः स्यादावयोः प्रिये ॥
आवयोर्व्यक्तिकोट्यंशैः शिवाद्यानंदसंततिः ॥ २४ ॥
तद्व्यक्तेरपि कोट्यंशैर्ब्रह्माद्यानंदसन्ततिः ॥
कोटिकोट्यंशभागेन तदानन्दस्य राधिके ॥ २५ ॥
आनन्दिता जीवगणा ब्रह्माण्डपुटचारिणः ॥
प्रादुष्कुर्वन्ति चानन्दमशुद्धेन्द्रियवृत्तिभिः ॥ २६ ॥
प्रेमहीना दुराचरा देहमात्रैकवृत्तयः ॥
दृष्टविश्वस्तचित्तास्ते (श्च) प्रमाणपथदूरगाः ॥ २७ ॥
मायाविभ्रान्तचित्ताश्च रागद्वेषभयाकुलाः ॥
मनोरथाक्रान्तधियः कुटुम्बममताकुलाः ॥ २८ ॥
भवप्रवाहपतिताश्चिन्ताजालसमावृताः ॥
ध्यानहीनाः कथं तेषां ह्यानन्दः प्रवर्तते (प्रकाशते)॥२९॥

---

१ समधारिणी इ० पा० ।

आवयोर्वास्तवे रूपे मयि वा केपि सुन्दरि ॥
बद्धप्रमरसा-ब्धोके पश्यन्त्यानन्दवारिधिम् ॥ ३० ॥
अयं ते प्रेममहिमा मया समनुवर्णितः ॥
न विक्षोपय तत्प्रेम वास्तवं रूपमावयोः ॥ ३१ ॥
इत्येवं प्राणनाथस्य वचनामृतगौरवम् ॥
श्रुत्वा प्रसन्नहृदया विकसद्वदनेक्षणा ॥ ३२ ॥
आलिलिंग स्तनापीडं क्वणत्कङ्कणपाणिना ॥
प्रहसद्वदनाः सख्यः साधु साध्विति चाब्रुवन् ॥ ३३ ॥
ततो नानाविधाः क्रीडाः कामशास्त्रानुरोधतः ॥
रतिमुत्तमपन्न कृष्णश्चक्रे कुञ्जान्तरं[1] गतः ॥ ३४ ॥
कुञ्जरंध्रार्पितदृशः सख्यः कुञ्जबहिः स्थिताः
स्मिताननाः प्रपश्यन्ति[2] यूथीभूय रतिं तयोः ॥ ३५ ॥
स्वांकमारोप्य तां कृष्णश्चुम्बनालिङ्गनादिभिः ॥
प्रसाद्य बहुधा रेमे पुष्पतल्पे समाहितः ॥ ३६ ॥
विरराम तयोस्तापो य आसीद्विरहे महान् ॥
ततः प्रसन्नहृदयामुवाच वचनं प्रियः ॥ ३७ ॥
प्रिये त्वद्विरहे भूरि सुखसाधनमच्युत ॥
ममासीदप्रियं सर्वमिदानीं तु यथा पुरा ॥ ३८ ॥
यश्चंदनांगरागस्तु विव्यथे विस्फुलिङ्गवत् ॥
स इदानीं तव कृतः सुधेवोल्लासयेत्तनुम् ॥ ३९ ॥
मृदूनि च सुगन्धीनि माल्यानि विरहे तव ॥
सूच्यग्रव्यथकान्यासंस्तान्यद्य सुखयन्ति माम् ॥ ४० ॥
कर्णशूलानि मेभूवन्विरावाश्चित्रपक्षिणाम् ॥
त एवाद्य प्रसादाय भवन्ति तव सङ्गमे ॥ ४१ ॥
रसा नानाविधाः पेया य आसन् गरलोपमाः ॥

---

१ कुञ्जान्तरे इ० पा। २ प्रपश्यंत इ० पा०।

उल्लासयंति ते चेतः पीताः पीयूषतृप्तिये ॥ ४२ ॥
य आसंश्चंद्रकिरणाः कल्पांताग्निशिखोपमाः ॥
संत्यद्य ते वरारोहे प्रत्यङ्गामृतवर्षिणः ॥ ४३ ॥
दवाग्निज्वालया तुल्यो य आसीत्पवनः शुभे ॥
स एवाद्य शरीरे मे सुखधारां प्रवर्षति ॥ ४४ ॥
आशीविषस्य वनितेव कराळभोगा
वेणी स्मृतापि मम चित्तविघूर्णनाय ॥
यासीत्पुरा विरहभाजि मयि प्रिये सा
प्रोत्सारयत्यवधिमत्र सुखाम्बुराशेः ॥ ४५ ॥
यो भ्रूधनुः प्रणिहितोपि कटाक्षबाणो
भेत्तुं मनः प्रभुरभूत्स्मृतिमागतोपि ॥
लग्नोपि सम्प्रति हृदि प्रकटीकरोति
सौख्यं किमप्यवधिवर्जितमत्र चित्रम् ॥ ४६ ॥
यस्तेधरोप्यजलमार्ग इवाकरोन्मे तृष्णाकुलं हृदयमेव वियोगभाजः ।
सोयं स्रवत्यतनुतापनिरासदक्षपीयूषनिर्झरमनुक्षणमङ्गसङ्गे ॥ ४७ ॥
एवं सर्वे गुणाः सुभ्रु दुःखदा विरहे तव ॥
इदानीं ते प्रवर्तन्ते सर्वेपि सुखहेतवे ॥ ४८ ॥
अनुनीय प्रियामेवं केलिविस्रंसितान्यपि ॥
भूषणानि पुनः कृष्णो यथास्थानमथानयत् ॥ ४९ ॥
भाले कस्तूरिकापत्रं लिलेख ललिताकृति ॥
सकलङ्कमिवोद्भातं तेनास्यं विधुमण्डलम् ॥ ५० ॥
हारोप्यारोपितः कण्ठे स्तनयोरुपरि स्फुरन् ॥
मूर्ध्नो ह्यवतरन्तीव पर्वतस्यामरापगा ॥ ५१ ॥
पादयोर्नूपुरावाधान्मणिकाञ्चननिर्मितौ ॥
रम्भास्तम्भस्य मूले वा आलवालमि (वोल्लसत्) व स्फुटम् ॥
वेणीद्वयं वेणीमध्यादाकृष्य स्तनयोरधात् ॥

सुवर्णकुम्भरक्षार्थं भुजगीद्वयवद्बभौ ॥ ५३ ॥
कृष्णो राधानयनयोर्दधाराञ्जनमुत्तमम् ॥
कामसायकयोरेव विषालेपमिवाद्भुतम् ॥ ५४ ॥
काञ्चीगुणं कटितटे भालभूषां ललाटके ॥
नवधात्रीफलस्थूलमुक्ताभूषां तथा नासि ॥ ५५ ॥
एवं शृङ्गारमापाद्य राधामादाय पाणिना ॥
कुञ्जाद्बहिः समागत्य सखीभिः सह सङ्गतः ॥ ५६ ॥
कृष्णकुण्डे ततः स्नातुं ययौ चोत्कण्ठयाकुलः ॥
राधाश्रुपूरजनिते कुण्डे क्रीडां विधाय च ॥ ५७ ॥
कृष्णकुण्डावगाहेन स्मृतिमाप्तौ पुनश्च तौ ॥
राधारूपनिरोधानात्पुनः कृष्णत्वमागतः ॥ ५८ ॥
कृष्णरूपतिरोधानाद्राधा राधत्वमाययौ ॥
सख्यः कुतूहलाक्रान्तास्तयो रूपविपर्ययात्[1] ॥ ५९ ॥
राधाया वदनं कृष्णः कृष्णास्यं वीक्ष्य राधिका ॥
स्मिताननावभूतां तौ निमग्नावद्भुते रसे ॥ ६० ॥
ततः कृष्णः प्रियामाह शृणु राधे यथातथम् ॥
मया प्रकटिता लीला तया चाहं विमोहितः ॥ ६१ ॥
त्वद्रूपधारणमयी लीला मे प्रकटीकृता ॥
[2]मद्रूपधारणमयी त्वयापि प्रतिपादिता ॥ ६२ ॥
लीलामाहात्म्यमतुलं मया वक्तुं न शक्यते ॥
ययाविष्टः क्षणादेव स्वात्मानं मन्यतेऽन्यथा ॥ ६३ ॥
आविर्भवति नो यावदात्मरूपस्मृतिभ्रमः ॥
न तावदुच्यते राधे लीलाविर्भावलक्षणम् ॥ ६४ ॥
मनस्यावेशमात्रेण लीलायाः प्रकृतिभ्रमः ॥

१. विमार्जनात् इ० पा० ।
२. मद्रूपाविर्भावमयी त्वयापि प्रतिपादिता । इत्यपि पाठः ।

प्राणावेशे गतिस्तम्भो देहावेशेऽन्यथा तनुः ॥ ६५ ॥
देहावेशादभूत्तन्वि वपुषो नौ विपर्ययः ॥
ज्ञानस्याप्यन्यथाभावो मनस्यावेशहेतुकः ॥ ६६ ॥
मनस्यावेशमात्रेण सखीनां ज्ञानविभ्रमः ॥
न तु देहान्यथाभावो यतः सा नैव देहगा ॥ ६७ ॥
मनसोपि[१] क्षणस्थायी तासामासीत्सुलोचने ॥
न स्वरूपपरिज्ञानमभवत्तासु सुन्दरि ॥ ६८ ॥
मत्प्रेमगौरवं राधे त्वयि स्फुरति यत्खलु ॥
तत्कथं वाक्प्रयोगेण स्फुटं कर्तुं हि शक्यते ॥ ६९ ॥
त्वयापि वक्तुं स्वं प्रेम शक्यते केन सुन्दरि ॥
अन्योन्यमावयोः प्रेमानुभवो नैव जायते ॥ ७० ॥
तस्माल्लीलामिमां राधे प्रकटीकृतवानहम् ॥
त्वं च कृष्णं मन्यमाना राधामात्मानमप्यहम् ॥ ७१ ॥
अनुभूतवन्तावन्योन्यविरहे तादृशीं दशां (व्यथां) ॥
अपि विज्ञातमधुना विरहे मत्सुखं त्वया ॥ ७२ ॥
मयापि च परिज्ञातं त्वत्सङ्गसुखमुत्तमम् ॥
न त्वया रहितश्चाहं न मया रहितासि भोः ॥ ७३ ॥
अविनाभावसम्बन्धः स्थितो वामित्यवेहि हि ॥
सम्बन्धमावयोरेवं ये विन्दन्ति हि तत्त्वतः ॥ ७४ ॥
तैरेव विदितश्चाहं याथातथ्येन नेतरैः ॥
मत्स्वरूपपरिज्ञानमवधिः श्रेयसामपि ॥ ७५ ॥
एवं बहुविधा लीलाः पश्यन्तीषु सखीष्वपि ॥
प्रियामनुनयंश्चक्रे कामी कमललोचनः ॥ ७६ ॥

इति श्रीमत्पुराणसंहितायां प्रेमस्वरूपानुभावो नाम सप्तमोऽध्यायः ॥७॥
आदितः श्लोकानां समष्ट्यंकाः ॥ ४९७ ॥

---

१. मानसेऽपि इ० पा० ।

## ॥ अथाष्टमोऽध्यायः ॥ ८ ॥

॥ वेदा ऊचुः ॥

मुनीश्वर महाप्राज्ञ गोलोकेऽक्षरचेतसि ॥
सन्ति नानाविधा लीला बाल्यपौगण्डभेदतः ॥ १ ॥
तत्तल्लीलाविशिष्टं च तत्तद्रूपं हरेः स्मृतम् ॥
गोलोके क्रीडते नित्यं निलयेषु पृथग्विधम् ॥ २ ॥
बाललीलाविभेदाश्च कौमारी च पृथग्विधा ॥
पौगण्डलीला विविधाः प्रवर्तन्तेऽत्र नित्यदा ॥ ३ ॥
ब्रह्मादिभिः पुरा दृष्टा सर्वा लीला समुत्सुकैः ॥
सुमङ्गलाप्रसादेन गुरुभूतेन शम्भुना ॥ ४ ॥

॥ व्यास उवाच ॥

श्रुता मया महाप्राज्ञा महाद्भुतरसान्विता ॥
संयोगविप्रयोगात्मलीलानुभवकारिणी ॥ ५ ॥
त्वदुक्तिश्रवणादेव शुश्रूषा जायते पुनः ॥
कथं ब्रह्मादिभिर्दृष्टा बाल्यकौमारजाः सदा ॥ ६ ॥
का सा सुमङ्गलाशक्तिस्तत्प्रसादोऽभवत्कथम् ॥
गुरुत्वं च कथं शम्भोर्जातं तन्मे वदन्तु भोः ॥ ७ ॥

॥ वेदा ऊचुः ॥

रहस्यं धनमेतद्धि ह्यस्माकमपि गोपितम् ॥
तत्ते निवेदयिष्यामो याथातथ्येन तच्छृणु ॥ ८ ॥
एकदा ब्रह्मरुद्राद्या ययुर्वैकुण्ठवासिनम् ॥
द्रष्टुं प्रहर्षवेगेन स्वात्मानमकुतो भयम् ॥ ९ ॥
तत्र गत्वा जगन्नाथमनाथमभितो मुखम् ॥
तुष्टुवुः स्तुतिभिः स्तुत्यमाचिन्त्यानन्तवैभवम् ॥ १० ॥
नमः परमकल्याणनिदानैकदयानिधे ॥
नमो विश्वप्रबोधाय विश्वस्य स्थितिहेतवे ॥ ११ ॥

विश्वान्तर्यामिरूपाय विश्वजीवाय ते नमः ॥
जाग्रद्विश्वस्वरूपाय स्वप्ने तैजसरूपिणे ॥ १२ ॥
सुषुप्तौ प्राज्ञरूपाय तुरीयायां चिदात्मने ॥
अणोरणीयसे तुभ्यं महतोपि महीयसे ॥ १३ ॥
जितासना जितश्वासाः प्रत्याहृतनिजेन्द्रियाः ॥
दुर्दान्ततरलं चेतः स्थिरीकृत्य विरागिणः ॥ १४ ॥
पश्यन्ति किमपि ज्योतिस्तद्भवानसि नेतरत् ॥
अवस्तु जीवितं यस्माच्चिदाभासेन विस्फुरेत् ॥ १५ ॥
इन्द्रियाणामुपरते विलीने च मनस्यपि ॥
गुणेष्वज्ञानमात्रेषु शेषस्तत्सद्रूपवान् ॥ १६ ॥
अनाद्यज्ञानतिमिरमवस्तु वस्तु कल्पितम् ॥
त्वदाभासेन निर्जीवं जीवितं जीवतां गतम् ॥ १७ ॥
पितरः सिद्धगन्धर्वा नृदेवासुरपन्नगाः ॥
जलस्थलचराजीवा पशुपक्षिमृगादयः ॥ १८ ॥
स्थावरा जङ्गमाः कीटाः पतङ्गा अण्डजोद्भिजाः ॥
जरायुजाः स्वेदजाश्च सर्वमेतद्भवानसि ॥ १९ ॥
अयोगिनो योगिनो वा ये त्वामात्मानमव्ययम् ॥
जानन्ति तत्त्वतस्तेषामज्ञानं विनिवर्तते ॥ २० ॥
विद्याशक्त्यासि सद्रूपो जीवत्वे त्वमविद्यया ॥
निरस्ताकाश आभासि चित्रमेतत्त्वयि द्वयम् ॥ २१ ॥
क्षुत्पिपासे शोकमोहौ जरामृत्यू षडूर्मयः ॥
न त्वामभिभवन्त्येते वपुःप्राणमनःस्थिताः ॥ २२ ॥
निःप्रपञ्चमिवात्मानं प्रपञ्चयसि मायया ॥
मायातीतोऽक्षरः शुद्धो निर्विकल्पोस्यलुप्तदृक् ॥ २३ ॥
त्वं सत्त्वोपाध्युपहितो विष्णुर्विश्वैकपालकः ॥
रजस्युपहितो ब्रह्मा रुद्रस्तम उपाधिभृत् ॥ २४ ॥

गुणापाये निर्गुणस्त्वमनादिनिधनोऽक्षरः ॥
उपाधिभेदाद्बहुधा भिन्नोसि नहि तत्वतः ॥ २५ ॥
समोपि विषमश्चासि ह्येकोनेकोसि निश्चलः ॥
चञ्चलोसीश्वरोनीशो जडो मिश्रश्च चेतनः ॥ २६ ॥
न त्वां पश्यन्ति ते देवा ये त्वयैव प्रकाशिताः ॥
त्वं च पश्यस्युदासीनो निरीहो निष्क्रियस्तथा ॥ २७ ॥
अविद्योपाधयः सर्वे मनःप्राणेन्द्रियादयः ॥
न स्पृशन्ति चिदाभासं घना इव नभोन्तरम् ॥ २८ ॥
उपाधिसम्भवो दोषो गुणो वा नास्ति ते क्वचित् ॥
रवेर्ज्योतिःस्वरूपस्य यातायातैः किमम्बुदैः ॥ २९ ॥
त्वय्येवोपाधयः सर्वे प्रविशन्ति ह्यनेकधा ॥
नद्योघा इव जलधिं तमांसीवारुणद्युतिम् ॥ ३० ॥
शुक्तौ रजतवद्रज्जौ फणीव तरला(र्वो)म्भसि ॥
पुरुषे स्थाणुवद्व्योम्नि वर्णवज्जलवन्मरौ ॥ ३१ ॥
कार्यान्वयाद्व्यापकस्त्वं व्यतिरेकाच्च केवलः ॥
भेदत्रयविहीनोसि ह्यवस्थात्रयवर्जितः ॥ ३२ ॥
शुद्धसत्ववपुर्धृत्वा जगत्पालयसि ध्रुवम् ॥
उद्दिधीर्षुर्वेदमार्गान्मीनरूपं जगत्प्रभो ॥ ३३ ॥
धत्से महातमोग्रस्तान्मुहुरेव युगक्षये ॥
धत्से कौर्म्यं वपुः कृत्वा मन्दराद्रिं स्वपृष्ठतः ॥ ३४ ॥
यो वै वाराहरूपेण महीं प्रलयवारिधौ ॥
मग्नामुद्धरसे दन्तकोट्या कुटिलया विभो ॥ ३५ ॥
अत्युग्रभ्रुकुटीभङ्गविद्रावितजगत्त्रयम् ॥
रूपं नृसिंहमाधत्से हिरण्यकशिपोर्वधे ॥ ३६ ॥
अत्यद्भुतरसक्रीडापरिकल्पितविग्रहः ॥
बिभर्षि वामनं रूपं बलिछलनहेतवे ॥ ३७ ॥

दशाननविनाशाय रामो दशरथात्मजः ॥
भूत्वा लोकेषु मर्यादां त्वमङ्गीकृतवानसि ॥ ३८ ॥
उत्पथेन प्रवृत्तानां क्षत्रियाणां वधाय च ॥
धर्मं संस्थापनार्थाय जमदग्निसुतो विभुः ॥ ३९ ॥
अपाकरोषि देवेश पृथ्वीभारं यदोः कुले ॥
आविर्भूतो हलीभूत्वा नीलवासा मदोत्कटः ॥ ४० ॥
वेदवर्त्मप्रवृत्तानामसुराणां विमोहनम् ॥
रूपं धृत्वा यज्ञविद्यां हिंसाप्रायां विनिंदसि ॥ ४१ ॥
जवनं हयमारुह्य करालकरवालधृक् ॥
हत्वा म्लेच्छान्पुनर्धर्मं स्थापयिष्यसि भूतले ॥ ४२ ॥
नमः क्षेत्रज्ञरूपाय क्षेत्रज्ञातीतरूपिणे ॥
गुणानुगुणरूपाय कालरूपाय साक्षिणे ॥ ४३ ॥
गुणजीवाय जीवानामात्मने परमात्मने ॥
चिदाभासाय शुद्धाय मायापटवृतात्मने ॥ ४४ ॥
अव्यक्ताय गुणव्यक्तीकृतरूपाय सम्भवे ॥
कार्यकारणसङ्घातप्रदीपाय नमोस्तु ते ॥ ४५ ॥
भवतो दर्शनं देव श्रेयसां परमोवधिः ॥
कृतकृत्याः पूर्णकाममात्मानं तेन मन्महे ॥ ४६ ॥
इति संस्तुतमाहात्म्या गौरवाद्गुरवः सतां ॥
उपदिष्टासनेष्वेव तस्थुर्मानपुरःसरम् ॥ ४७ ॥

श्रीविष्णुरुवाच ।

धन्यः क्षणोयममरा यद्यूयं गोचरे स्थिताः ।
इदानीं मनसा ध्याता यूयं दर्शनकांक्षिणा ॥ ४८ ॥
अन्तराहितमौत्सुक्याद्ब्रह्मिस्त दृश्यते तथा ॥
कस्यापि कृतिनः पुण्यैरगण्यैः कापिचित्कथम् ॥ ४९ ॥
अयं ब्रह्मा महेशोयमित्युपाधिवशादिह ॥

भिदा पश्यंत्यभिन्नेषु घटेषु नभसो यथा ॥ ५० ॥
तस्मादुपाधिभेदेन भिन्ना न वस्तुतस्तथा ॥
अभेदेन प्रपश्यंति बुधा नानादृशः पृथक् ॥ ५१ ॥
तस्य भिन्नदृशोमृत्युं विदधे भयमुल्वणम् ।
अभिन्नदर्शिनो लोके स्वानन्दमभयं यतः ॥ ५२ ॥
मास्तु सा जननी लोके या सूते भेदवादिनम् ॥
नासौ गुरुः स्वशिष्यान्यो भेदवादे नियोजयेत् ॥ ५३ ॥
ब्रह्मादिस्तम्भपर्य्यन्तेष्वणुमात्रं न भेदयेत् ॥
एकं ब्रह्मैव नो नानाभेदस्यावसरः कुतः ॥ ५४ ॥
अविद्यया लुप्तदृशो विशन्ते तम उल्वणम् ॥
भेदबुद्धिं पुरस्कृत्य संसरन्ति कुबुद्धयः ॥ ५५ ॥
तस्मादस्मानभिन्नांश्च नामतो रूपतोपि वा ॥
भेदबुद्ध्या प्रपश्यन्ति छिन्दंत्यस्मत्तनुर्हि ते ॥ ५६ ॥
ब्रह्मणो यानि नामानि यानि वा शङ्करस्य च ॥
तानि सर्वाणि मे नूनं मदीयान्यपि वः प्रभू ॥ ५७ ॥
मद्भक्तः शङ्करं द्वेष्टि शिवभक्तस्तु मामपि ॥
तयोर्नरकजा बाधा याकल्पं न निवर्तते ॥ ५८ ॥
ममात्मानमहं दृष्ट्वा शङ्करं विधिमेव च ॥
साम्प्रतं परितुष्टोस्मि किं विज्ञाप्यं स्वसंविदाम् ॥५९॥
भवतामपनानन्दमुदितं मम चेतसि ॥
हृदिस्पृक्संविदा भूयो वर्द्धयन्तु यथारुचि ॥ ६० ॥
इति श्रीमत्पुराणसंहितायां ब्रह्मादीनां वैकुण्ठदर्शनं नामाष्टमोऽध्यायः ॥८।
॥ आदितः श्लोकानां सप्तपञ्चाशः ॥ ५५७ ॥

---

## ॥ नवमोऽध्यायः ॥

॥ वेदा ऊचुः ॥

इत्युक्त्वा विरतं विष्णुं ब्रह्मा लोकपितामहः ॥

उवाच श्ल(क्ष)क्ष्णया वाचा शृण्वतः शङ्करस्य च॥ १ ॥
भगवन्नेवमेवैतत्संसारो भेदमात्रकः ॥
श्रुतियुक्तिविदां चापि नास्माकं विनिवर्तते ॥ २ ॥
अन्ये के सन्ति दुःप्रज्ञा वराका भेदनिर्जये ॥
ज्ञात्वा ज्ञात्वापि मुह्यन्ति सूरयः सततं प्रभो ॥ ३ ॥
भिद्यस्यां किं भवेन्मूलं केन वा बलवान्कृतः ॥
कः स्रष्टा कोस्य संहर्ता यो ज्ञानमयथा नयेत् ॥ ४ ॥
सत्वाद्युपाधिषु वयं नामरूपविकल्पिताः ॥
उपाधीनां निरासे तु किमुपाधेयमुच्यते ॥ ५ ॥
यथार्के कल्पितो भेदो जलोपाधिप्रसङ्गतः ॥
प्रस्तुते कल्पितः कस्मिन्सत्वादिगुणसङ्गतः ॥ ६ ॥
एतान्मे रचितान्प्रश्नान् यूयमुद्धर्तुमीश्वराः ॥
इत्युक्त्वा तूष्णिमापन्ने विरञ्चौ विश्वधातरि ॥
विष्णुः प्रहस्य रुद्रस्य प्रेक्षन्नाननमब्रवीत् ॥ ७ ॥

॥ विष्णुरुवाच ॥

भगवन्सर्वधर्मज्ञ सर्वविद्याविशारद ॥
त्वं ज्ञानयोगयुक्तात्मा ज्ञानिनां परमो गुरुः ॥ ८ ॥
योगिवृन्दाभिवन्द्यांघ्रियोगीशो योगदर्शकः ॥
अत्मवित्तद्विदां मान्यो भगवान्सर्वशक्तिधृक् ॥ ९ ॥
सर्वज्ञः सर्वकर्त्ता च सर्वेशो निर्मलोऽव्ययः ॥
अखण्डानुभवानन्दस्वरूपो निर्गुणोऽक्षरः ॥ १० ॥
नास्ति तेऽविदितं किञ्चित्सर्वज्ञस्य दयानिधे ॥
तस्मात्त्वं ब्रूहि विश्वेश प्रश्नार्थं ब्रह्मणो यथा ॥ ११ ॥
इति श्रुत्वा हरो वाक्यं विष्णोरमिततेजसः ॥
प्रहसन्नाह विश्वेशं गोविन्दं गरुडध्वजम् ॥ १२ ॥
भक्तिगम्यगुहावास भक्तिकीर्तिविवर्द्धन ॥

किमस्ति लोके वेदे च तवाज्ञातमथोपि च ॥ १३ ॥
तथाप्येवंविधे ह्यर्थे मां प्रेरयसि केवलम् ॥
अनुग्रहोयं ते नाथ श्रवणेच्छा सतां भवेत् ॥ १४ ॥
ये चात्मकथने हृष्टाः शृण्वन्ति कथयन्ति च ॥
नास्त्येभ्यो ह्यधिकः कश्चित्साधनानां शतैरपि ॥ १५ ॥
सांख्यं योगः पाशुपतं त्रयी तीर्थव्रतादिकम् ॥ १६ ॥
ज्ञानं वैराग्यमास्तिक्यं मौनमात्मविनिग्रहः ॥
एतान्यात्मकथायाश्च कलां नार्हन्ति षोडशीम् ॥ १७ ॥

नानार्थकल्लोलशतैरलंकृतां गंभीरभावोदकपूरपूरिताम् ॥
अनेकदृष्टान्तसरोजभासुरां कुतर्कवात्यर्थविकल्पफेनिलाम् ॥१८॥
श्रद्धाभरोत्तुंगतटोपशोभितां नानाविधप्रश्नतटद्रुमाकुलाम् ॥
धर्मार्थकामस्फुटक्षुल्लकावृतां विगूहितावर्त्तसहस्रसंकुलाम् ॥१९॥
परिस्फुरत्प्रेमरसामसाधुभिः समुज्झितां काममृगतृषाकुलैः ॥
अनेकजन्मार्जितपुण्यराशिभिर्निपीतपीताममरत्वदायिनीम् ॥ २० ॥
कथानदीं तामनिशं विगाहतां न पापपंकः परितोभिवल्गति ॥
तापत्रयं शाम्यति सद्गुणाश्रयं मनो मनोजावरणं विमुञ्चति ॥२१॥
स्वरूपसाक्षात्करणैकहेतुः कथानदी श्रोत्रयुगांजलिभृता ॥
न पीयते चेद्विदुषां सभास्वयं बहिर्भवेद्भ्रष्टमतिर्यथा जने ॥ २२ ॥

आत्मवादगतानेकसंदेहतिमिरापहां ॥
सर्वार्थदर्शिनीं लोके को न सेवेत सत्कथाम् ॥ २३ ॥
कथायाः श्रवणं साक्षान्मननञ्च ततः परम् ॥
ततो निदिध्यासनमित्युपायाः स्वात्मलब्धये ॥ २४ ॥
विहाय श्रवणादींश्चेदुपायान्साधुसम्मतान् ॥
यतिष्यति न तस्यास्ति तत्त्वगन्धोपि दुर्मतेः ॥ २५ ॥
तस्मादहं कीर्तयिष्ये श्रोतुकामाय ते प्रभो ॥
श्रवणं कीर्तनं चापि फलं तुल्ये सतां भवेत् ॥ २६ ॥

भेद एव हि संसारो ह्यभेदस्तन्निवर्तकः ॥
कर्षन्ति स्वस्वविषये कामाद्या भेददर्शिनम् ॥ २७ ॥
देहात्मबुद्धिर्भेदस्य कारणत्वोपकल्पिता ॥
स्वरूपविस्मृतिस्तत्र कारणं नान्यथा भवेत् ॥ २८ ॥
अज्ञानमात्रं तत्रापि कारणं वारणं विदुः ॥
नानोपाधिगुणान्सूते भासितं ब्रह्मवर्चसा ॥ २९ ॥
एवं गुणोपाधिभूतो गुणा अज्ञानसंभवाः ॥
अज्ञानशक्तिरुद्भूता सात्मविश्वं विनिर्ममे ॥
ग्रसिष्यति यदा तां तु ज्ञानशक्तिरुदीरिता ॥ ३० ॥
नाहं तदा यूयमिमे प्रजेशा देवा न सिद्धेश्वरमर्त्यपन्नगाः ॥
भूतानि तत्वानि च नाप्यहंकृतिर्न शास्त्रसिद्धांतविचारसत्कथा ३१
विद्याविद्ये च यत्रोभे सृष्टिसंहारकारके ॥
मिथो विरुद्धशीले च नित्यं शक्तिसमाश्रिते ॥ ३२ ॥
तद्ब्रह्म परमं साक्षात्पुराणपुरुषो महान् ॥
समाधौ वर्तते नूनमविद्याजवनीवृतः ॥ ३३ ॥
तदाभासमया जीवा अविद्याकार्यगोचराः ॥
संसरन्ति विमुह्यन्ति स्वात्मबिम्बावधारणे ॥ ३४ ॥
नैतां तपोभिर्न व्रतैर्न योगैर्यज्ञैर्न तीर्थैरुपपत्तिभिर्वा ॥
न ज्ञानयोगेन विचारजेन न वा विरक्त्यातितरन्ति केचन॥३५॥
मूलप्रकृतिरव्यक्ता ब्रह्माण्डावरणे स्थिता ॥
विद्याविद्यास्वरूपेण बन्धमोक्षविधायिनी ॥ ३६ ॥
ब्रह्माण्डान्तः स्थिता जीवा अविद्याशक्तिसंवृताः ॥
न ब्रह्मांडमतिक्रान्तुमीश्वरा ईश्वरादपि ॥ ३७ ॥
तस्मिन्पुराणपुरुषे अभिन्ने भेदकल्पना ॥
स्वकर्मोपाधिवैचित्र्यादियत्तापरिवर्जिताः ॥ ३८ ॥
ज्ञानं गुणातीतमनावृतं सममनंजनं रञ्जितकार्यकारणम् ॥

आत्मानमेवात्मवतामवेत्य भो भजध्वमन्तर्हृदि भेदवर्जिताः ॥३९॥

॥ इति श्रीमत्पुराणसंहितायां सिद्धान्तसारे
नवमोऽध्यायः ॥ ९ ॥

॥ आदितः श्लोकानां समष्ट्यङ्काः ॥ ५९७ ॥

## ॥ दशमोऽध्यायः ॥ १० ॥

इत्याकर्ण्य विधिर्वाक्यं हरस्य परमात्मनः ॥
शृण्वतः प्राह देवस्य समुत्सुकमना हरेः ॥ १ ॥
धन्योसि कृतकृत्योसि देवदेव जगत्पते ॥
योगेश्वरेश्वरस्त्वं हि पञ्चकृत्यकरो भवान् ॥ २ ॥
साध्वेतद्रूपितं देव त्वया लोकहितैषिणा ॥
एतज्जिज्ञासया संतश्चरन्ति व्रतमव्रणम् ॥ ३ ॥
समाधौ वर्तते यस्तु पुराणपुरुषो महान् ॥
मायाजवनिकाविष्टो यस्त्वया समुदीरितः ॥ ४ ॥
न तं साक्षात्प्रपश्यंति योगिनो योगवित्तमाः ॥
श्रुतिस्मृतिप्रमाणाद्यैर्मंत्रोपासनकर्मभिः ॥ ५ ॥
द्रष्टुमिच्छामहे तं तु पुरुषं पुरुषर्षभ ॥
तत्रोपायविदेकस्त्वं नाहं विष्णुरपि प्रभू ॥ ६ ॥
मनोरथमहावार्धितितीर्षाकुलचेतसाम् ॥
कर्णधार इवेह त्वं दैवेनासादितो हि नः ॥ ७ ॥
नाप्नोति बिम्बं प्रतिबिम्बभावो न चात्र युक्तिः करणं न चापि ॥
सुदुर्घटं भात्यभवद्विधे जने त्वय्येव नश्चित्तमुपैति भावनाम् ॥८॥
एवंविधे मनः कामे प्रवृत्तं सद्विषीदति ॥
कामपूरयिता यस्य न त्वादृग्गोचरे स्थितः ॥ ९ ॥
तस्मात्कुरुष्व नः कामं कामपूरोसि सर्वदा ॥
मनोरथस्य मर्यादा यत्तत्पुरुषदर्शनम् ॥ १० ॥

इत्युक्तवति देवेशे हरो हरिरुभावपि ॥
स्मितपीयूषधाराभिरभूतां स्नपिताधरौ ॥ ११ ॥

॥ शिव उवाच ॥

अहो महामोहपरंपरैषा बिम्बार्कमभ्येति जलावभासः ॥
स्वप्नेक्षिताश्वेभरथादिसर्वं किं जाग्रदात्मानमुपैति मिथ्या ॥१२॥
मनोरथातीतपदे भवन्तः सर्वे रमन्तोऽघटमानकामे ॥
स्पृहोदिता चेदपरोस्ति को वा यस्तां समुन्मूलयितुं समर्थः १३
अथास्तु चाशा परमात्मसेवने क्रोधोस्तु चेत्कर्मणि वेदगर्हिते ॥
लोभस्तदुद्दामकथासुधानदीक्रीडारसानन्दभरे निरन्तरम् ॥१४॥
हिंसा यदि स्याद्भयत्र पातिनी तदा स्वकार्यं तनुतामहंकृतौ ॥
मुषाणयात्मानमशोच्यमीश्वरं हठादहो तत्पदगा प्रतीयते ॥१५॥
मदो यदि स्यात्कुरुतां स्ववीर्यं दुर्दान्तसर्वेन्द्रियदर्पमर्दने ॥
श्रुतिस्मृतिप्रोक्तसहस्रनिर्णये निबोधमानान्यपि यानि नो विदुः १६
मोहो बलीयान्प्रकरोतु मोहं तथा यथाद्वैतमिदं समस्तम् ॥
विभाति चाद्वैतमभिन्नमात्मनः सदेकचित्पूर्णसुखानुसंततम् ॥ १७॥
अपि देवर्षिदेवानां सत्यसंकल्पनाजुषां ॥
सुदुर्लभेऽर्थेपि मतिर्जाता चेद्भविता विधिः ॥ १८ ॥
अथैकाग्रमना भूत्वा तत्रोपायमविंदत ॥
प्रत्याह तान्महादेवः शृणुतोपायमञ्जसा ॥ १९ ॥
न चक्षुरादिज्ञानेन क्रियया च करादयः ॥
प्राप्नुवन्ति न ते सर्वे पुरुषं सर्वसाक्षिणम् ॥ २० ॥
स आत्मा चक्षुषश्चक्षुः श्रोत्रं श्रोत्रस्य वै तथा ॥
मनसोपि मनो यस्माज्जडं चेतयिता यतः ॥ २१ ॥
तस्मात्तं ध्यानयोगेन गत्वा पश्यामहे वयम् ॥
सहायभूता तत्रापि संराध्या शक्तिरीश्वरी ॥ २२ ॥
सुमङ्गलानाम सुमङ्गलोदया भवामयत्रासहरा स्वजानताम् ॥

*ब्रह्माधिगन्तुं स्पृहयालुभिर्जनैः सदा हृदिस्थापितपादपल्लवा ॥२३॥
यन्नामसंकीर्तनमात्रकर्मणा विभिन्नमोहावरणाः क्षणाज्जनाः ॥
प्रयान्ति ब्रह्मात्मगतिं सुदुर्लभामशेषसंसारपरिश्रमापहाम् ॥ २४ ॥
भजन्तु नो वापि भजन्तु पूरुषं सुमङ्गलायाः पदपङ्कजार्चकाः ॥
सुखेन संयान्ति परां गतिं यतो लीलामहांभोनिधिखेलदर्शिनी २५
अघटितघटनाविधौ न चान्यत्परमिह शक्तिमृतेधिगम्यमस्ति ॥
इति हृदि विनिधाय सिद्धमंत्रं भवभयभेदकरीं भजध्वमन्तः ॥२६॥

॥ ब्रह्मोवाच ॥

केन वा विधिना देव भजनीया सुमङ्गला ॥
यथा प्रसीदति तथा विधानं वक्तुमर्हसि ॥ २७ ॥

॥ शिव उवाच ॥

सुमङ्गलोपासनाया विधिं वक्ष्यामि संशृणु ॥
मंत्रध्यानार्चनन्याससहितं सर्वसिद्धिदम् ॥ २८ ॥
प[1]ञ्चमस्वरसंभिन्नः स्वर्गो विन्दुयुतः पुमान् ॥
केवलं गगनं रुद्रस्वरभिन्ना वसुंन्धरा ॥ २९ ॥
भूय ए[2]तत्पदं प्रोच्य चिदानंदपदं वदेत् ॥
रूपे स्फुरयु[3]गं चोक्त्वा वीतिहो[4]त्रप्रिया ततः ॥ ३० ॥
विंश[5]त्यर्णो मनुः प्रोक्तः सिद्धः सौमङ्गलो महान् ॥
चतुर्भिश्च[6] चतुर्भिश्च षड्भिर्द्वाभ्यां पुनस्तथा ॥ ३१ ॥

---

* ब्रह्मानुगन्तुम् इत्यपि पाठः ।

१ पञ्चमस्वर उकारः । तेनयुक्तः स्वर्गः दन्त्यसकारः । तथा 'सु' इति जातं । पुमान् मकारः स तुविन्दुयुतः 'मं' इति जातः । केवलं गगनं गकारः । रुद्रस्वरः एकारः । तेन युक्ता वसुन्धरा लकारः । तथा 'ले' भवति । ततश्च 'सुमङ्गले' इति समुदायः ।

२ 'सुमङ्गले' इति पदम् । ३ स्फुर स्फुर इत्यर्थः । ४ वीतिहोत्रप्रिया स्वाहा । ५ विंशत्यक्षरोऽयं सौमंगलो मंत्रः षट्पदः । ६ सुमङ्गले इत्येतैरक्षरैः । ७ चिदानंदरूपे इत्येतैर्वर्णैः । ८ स्फुर इत्येताभ्यां ।

पुनर्द्वाभ्यां[1] भवेदङ्गक्रिया[2] मनुवरस्य च ॥
कुर्यात्करन्यासमपि विधिनानेन च क्रमात् ॥ ३२ ॥
ध्यायेत्सुमङ्गलां देवीं कृतन्यासो जितेन्द्रियः ॥
चित्सुधाब्धौ मणिद्वीपे कल्पवृक्षवनोज्वले ॥ ३३ ॥
नवरत्नप्रभापूर्णां चिन्तयेत्तत्र भूमिकां ॥
तन्मध्ये मन्दिरं ध्यायेत्कोटिबालार्कभासुरम् ॥ ३४ ॥
स्वर्णभक्तिपरिभ्राजन्मणिस्तंभशतोज्वलम् ॥
घंटानिनादबहुलं कोटिचन्द्रांशुनिर्मलम् ॥ ३५ ॥
दिव्यगन्धलतोद्यानमन्दमारुतसेवितम् ॥
विलसत्तोरणद्वारचतुष्टयपरिस्कृतम् ॥ ३६ ॥
अनेकयोजनायामप्राङ्गणं सुमनोहरम् ॥
तन्मध्ये वेदिकां ध्यायेद्रत्नराशिविचित्रिताम् ॥ ३७ ॥
पञ्चब्रह्मात्मके[3] मञ्चे शयानं पुरुषं स्मरेत् ॥
तदीयहृदयांभोजनिविष्टां भ्रमरीमिव ॥ ३८ ॥
चिदानन्दमहांभोधिलहरीं ललिताकृतिम् ॥
स्फुरन्माणिक्यखचितमुकुटाटोपमण्डिताम् ॥ ३९ ॥
रत्नकुण्डलविद्योतत्प्रभापूरं वितन्वतीम् ॥
मुक्तादामलसद्भालमाणिक्यतिलकोज्वलाम् ॥ ४० ॥
सान्ध्यमेघघनच्छायं वसानां दिव्यमंशुकम् ॥
मणिहारभराक्रान्तपीनोन्नतघनस्तनीम् ॥ ४१ ॥
पाशांकुशोद्दामदण्डाम्बुजशोभिचतुष्कराम् ॥

---

१ स्वाहा इत्येताभ्याम् । २ अङ्गन्यासः ।

३ पंचब्रह्माणीत्थं–ब्रह्मा विष्णुश्च रुद्रश्च ईश्वरश्च सदाशिवः । एते पंच महाप्रेताः भूताधिपतयो मताः ॥ १ ॥ चत्वारो मंचचरणाः पंचमः प्रच्छदः पटः । संवित्प्रकाशरूपेण शिवेनाभिन्नविग्रहाः ॥ २ ॥ तत्रासने समासीना निर्भरानन्दरूपिणी ॥ यामले ॥ तंत्रे एतेषां प्रेतत्वमुक्तं वस्तु तस्तु परमशिवः ब्रह्मशिवः सदाशिवः नादशिवः शिवश्चैत एव पञ्चब्रह्माणि

व्युप्तमाणिक्यमुक्तालिविस्फूर्ज्जत्कञ्चुकीप्रभाम् ॥ ४२ ॥
हीरालिदशनज्योत्स्नापूरपूरितसुस्मिताम् ॥
रम्भास्तम्भसुवृत्तोरुमण्डलद्वयशोभिताम् ॥ ४३ ॥
परात्महृदयांभोजकर्णिकामध्यवर्त्तिनीम् ॥
कराम्भोजलसद्रत्नकङ्कणालंकृतां पराम् ॥ ४४ ॥
उन्मिषन्मणिमुक्तालिस्वर्णनूपुरनादिताम् ॥
रक्ताङ्गरागसुभगां कोटिचन्द्रार्कभासुराम् ॥ ४५ ॥
ध्यायेदनन्यमनसा हृदयाब्जे सुपङ्कजाम् ॥
कृत्वान्तर्यजनं सम्यग्बहिर्यजनमारभेत् ॥ ४६ ॥
त्रिकोणं बिन्दुगर्भं च वेष्टयेद्वृत्तरेखया ॥
लिखेदष्टदलं पद्मं ततः षोडशपत्रकम् ॥ ४७ ॥
द्वात्रिंशत्पत्रकं पश्चाद्वृत्तत्रितयवेष्टितम् ॥
त्रिरेखं भूपुरं चारु चतुर्द्वारं सुशोभितम् ॥ ४८ ॥
सौवर्णे राजते ताम्रे विलिखेद्यन्त्रमुत्तमम् ॥
गल्लकीभवपाषाणे स्थूलमुक्ताफलेष्वपि ॥ ४९ ॥
मणौ वा सलिले वापि भावयित्वा प्रपूजयेत् ॥
बिन्दुमध्ये समावाह्य पूजयेत्परमेश्वरीम् ॥ ५० ॥
पाद्यार्घ्याचमनीयाद्यैरुपचारैर्मनोहरैः ॥
जाग्रत्स्वप्नसुषुप्त्याख्यास्त्रिषु कोणेषु वै यजेत् ॥ ५१ ॥
प्रादक्षिण्येन चाग्रादि बिन्द्वग्रे च तुरीयकाम् ॥
त्रिकोणे चैवमभ्यर्च्य ततश्चाष्टदले यजेत् ॥ ५२ ॥
मनोबुद्धिरहंकारः पञ्चभूतानि च क्रमात् ॥
त्वक्चक्षूरसनघ्राणश्रोत्रवाक्पाणिपादकम् ॥ ५३ ॥
पायूपस्थं गुणान् नादं बिन्दुंपुरुषमेव च ॥
षोडशारे समभ्यर्च्य द्वात्रिंशद्दलके यजेत् ॥ ५४ ॥
महत्तत्वं महाविष्णुं ब्रह्माणं रुद्रमच्युतम् ॥

ईशं सदाशिवं चैव शब्दादीन्विषयानपि ।। ५५ ।।
मायाविद्ये तथाविद्यां कलां कालं तथैव च ।
रागं च नियतिं चैव चित्तमव्यक्तमेव च ।। ५६ ।।
इच्छां ज्ञानं क्रियां चैव स्थितिं सृष्टिं च संहृतिम् ।।
पुराणानि च तंत्राणि निगमांस्त्रीन्यथाक्रमम् ।। ५७ ।।
ततः सम्पूजयेत्सम्यक् द्वारदेवोऽणिमादयः ।।
एवमभ्यर्च्य देवेशीं जपं कुर्यादनन्यधीः ।। ५८ ।।
तस्याः प्रसादमात्रेण सर्वान्कामानवाप्स्यथ ।।
इत्युक्त्वा देवदेवेशः शङ्करो लोकशङ्करः ।। ५९ ।।
ततोऽसौ दीक्षयामास दीक्षया वेधसंज्ञया ।।

---

१ गुरवः शिष्ये शक्तिसंचारार्थं दीक्षाप्रयोगं कुर्वन्ति । क्रियादीक्षा, वर्णदीक्षा, कलादीक्षा, शांभवीदीक्षा, स्पर्शदीक्षा, वाग्दीक्षा, दृग्दीक्षा वेधदीक्षेत्यादिविविधा सा दीक्षा । शिष्यदेहस्थानां षडध्वनां शोधनं कृत्वा दीक्षा दीयते सा प्रभूतद्रव्यसाध्या क्रियाविशेषबहुला क्रियामयी दीक्षा कथ्यते । सा यथा—ह्रस्तनविधिं संपाद्याचार्यः शिष्यदेहं शोधयति । तच्छोधनं षडध्वनामेव । कलातत्त्वभुवनार्णपदमंत्रा इति षडध्वानः । निवृत्तिः प्रतिष्ठा विद्या शांतिः शांत्यतीता एताः पंच भूकला इति कलाध्वा स च शिष्यस्य पादे चिंत्यः शोध्यश्च । तत्त्वाध्वनि षट्त्रिंशत् ३६ तत्त्वानि शाक्तशैववैष्णवसौरभेदेन प्रसिद्धानि । शैवानि तु—शिवः शक्तिः सदाशिवः महेश्वरः ( ईश्वरः ) विद्या ( इति पंच शुद्धतत्त्वानि ) । माया विद्या कला रागः कालो नियतिः पुरुषः ( इमानि सप्त शुद्धाशुद्धानि ) । प्रकृतिः बुद्धिः अहंकारः मनः । दशेन्द्रियाणि । पंचतन्मात्राः । पंचभूतानि ( एतानि २४ अशुद्धानि । ) अमूनि षट्त्रिंशत्तत्त्वानि शिष्यस्य लिंगे चिंत्यानि । द्वात्रिंशत्तत्त्वानि ३२ वैष्णवानि, तानि—जीवः प्राणो मनो बुद्धिः । पंचतन्मात्राः । पंच भूतानि । दशेन्द्रियाणि । हृत्पद्मं । सूर्यः सोमः अग्निः । वासुदेवः संकर्षणः प्रद्युम्नः अनिरुद्धश्चेति द्वात्रिंशत् ३२ । सौराणि चतुर्विंशत् २४ । तानि पंच भूतानि । । पंच तन्मात्राः । मनः । ज्ञानं । दशेन्द्रियाणि । प्रकृतिः बुद्धिश्चेति । शाक्तानि दश, तानि—आत्मा विद्या शिवा । शिवा विद्या आत्मा । आत्मा विद्या शिवा । सर्वतत्त्वञ्चेति १० । इमानि स्वस्वसंप्रदायानुसारेण लिंगे चिंत्यानि शोध्यानि चेति । भुवनाध्वा पातालादिसत्यलोकान्तश्चतुर्दशभुवनात्मकः । स च नाभौ चिंत्यः शोध्यः ।

अथादिदेश विद्यां तामविद्यापटभेदिनीम् ॥ ६० ॥

अकारादिक्षकारान्ता वर्णा वर्णाध्वा, स च हृदि चिंत्यः शोध्यः। वर्णसमूहः सुप्तिङंतरूपो वा पदाध्वा, स ललाटे चिंत्यः शोध्यो होमादिना। संपूर्णमंत्रो मंत्राध्वा, स मूर्ध्नि चिंत्यः शोध्यः। एवं षडध्वनः संचिंत्य विधिना पूर्वपूर्वाध्वानमुत्तरोत्तराध्वनि प्रविलाप्य ( लीनं कृत्वा ) होमं कृत्वा सर्वं ब्रह्मरंध्रे शिवे संयोज्य ध्यायेत् एतदेवाध्वशोधनं शिष्यदेहशोधनं च। तदनंतरं शिवे विलीनांस्तानध्वनस्तस्माच्छिवात्सृष्टिक्रमेणोत्पाद्य दिव्यदृष्टया तं शिष्यं विलोक्य तत्प्रदीपकलिकाकृत्यात्मचैतन्यं स्वात्मस्थं दृष्टिद्वारा ब्रह्मरंध्रपथावतार्य तस्य हृदयदेशे संस्थाप्य शोधितं षडध्वानं तत्तत्स्थाने संस्थाप्य मंत्रं समादिशति इतीयं क्रियामयी दीक्षा सर्वसिद्धिदेति निर्देशस्त्वस्या माहेश्वरतंत्रे २८ मे पटले कृतः। १। ( २ ) शिशोस्तनौ वर्णान्विन्यस्य वैपरीत्येन तान्संहृत्य पुनः स्वस्थानसंस्थितान्कृत्वा स्वसामर्थ्याद्देवतात्मतां दत्त्वा शिष्यशक्तिं जागृतां कुर्यात्तदासौ वर्णदीक्षा। (३) पंचकलाष्टत्रिंशत्कलाभेदेन कलादीक्षा द्विधा। निवृत्तिः प्रतिष्ठा विद्या शांति शान्त्यतीता एताः पंच पंचभूतानां कलाः शिष्यकाये भूतमये तिष्ठंति ताः संहृतिक्रमेण वेधयित्वा गुरुणा शक्तिपातः क्रियते तदा पंचकलादीक्षा नाम। (४) यदा क्रमेण कादिकेषु द्वादशवर्णेषु सूर्यस्य 'तपिनी तापिनी धूम्रा मरीचिः ज्वालिनी रुचिः सुषुम्णा भोगदा विश्वा बोधिनी धारिणी क्षमा' एता द्वादश कला भावयित्वा, विलोमेन भादिकेषु षोडशवर्णेषु 'अमृता मानदा पूषा पुष्टिः तुष्टिः रतिः धृतिः शशिनी चंद्रिका कांतिः ज्योत्स्ना श्रीः प्रीतिः अंगदा पूर्णा पूर्णामृता' एताः षोडश चंद्रस्य कलाः संभाव्य, यकारादिदशवर्णेषु च वह्नेः 'धूम्रार्चिः उष्मा ज्वलिनी ज्वालिनी विस्फुलिंगिनी सुश्रीः सुरूपा कपिला हव्यवहा कव्यवहा' एता दश कला भावयित्वा तत्तद्वर्णतः संहृत्य स्वस्मिन्संयोज्य शिष्ये जनयित्वा शिष्यशक्तिप्रबोधाय शक्तिसंचारः क्रियेत तदासौ अष्टत्रिंशत्कलादीक्षोपदेश उच्यते। (५) मूलविद्यां षडंगं मातृकादिमनुं जपन् गुरुः शिष्यस्य मस्तके दक्षिणं करं धृत्वा कृपयोपदिशेत्तदासौ स्पर्शदीक्षा। (६) गुरुः यदा सकलमंत्रजनके चिद्रूपे शिवे चित्तं निधाय 'गुरोः कृपयाहमपि केवलः सदाशिवो जात' इति ध्यायन्नुपदिशेत्तदा इयं वाग्दीक्षोच्यते। (७) यदा स्वनयने निमील्य परमात्मानं ध्यात्वा तद्दर्शनानन्दपूर्णनेत्राभ्यां प्रसन्नचित्तो गुरुः शिष्यं विलोक्योपदिशेत्तदेयं दृग्दीक्षा कथ्यते। (८) गुरोः निरीक्षणस्पर्शभाषणमात्रेणैव शिष्ये सहसा यदैक्यं ज्ञानं भवति तच्छांभवीदीक्षेत्युच्यते, यथोक्तं वाय-

चिदानन्दचमत्कारलहरीं मङ्कलायनाम् ॥
विद्याप्रभावेण महाद्भुतेन प्रवृद्धधृत्युद्यमपौरुषावुभौ ॥ ६१ ॥

---

वीयसंहितायाम् 'गुरोरालोकमात्रेण स्पर्शात्संभाषणादपि । सद्यः संज्ञा भवेज्जन्तोर्दीक्षा सा शांभवी मता' ॥१॥ कुलार्णवतंत्रेपि-'गुरोरालोकमात्रेण भाषणात्स्पर्शनादपि । सद्यः संजायते ज्ञानं सा दीक्षा शांभवी मता'॥ इमामेव केचिन्मानसदीक्षां स्पर्शदीक्षां दृग्दीक्षां वेधदीक्षां वा कथयन्ति । (६) अथैतासामुदाहरणानि-'यथा पक्षी स्वपक्षाभ्यां शिशून्संवर्द्धयेच्छनैः । स्पर्शदीक्षोपदेशश्च तादृशः कथितः प्रिये ॥१॥ स्वापत्यानि यथा मत्स्यो वीक्षणेनैव पोषयेत् । दृग्भ्यां दीक्षोपदेशश्च तादृशः कथितः प्रिये ॥२॥ यथा कूर्मः स्वतनयान् ध्यानमात्रेण पोषयेत् । वेधदीक्षोपदेशश्च मानसः स्यात्तथाविधः ॥३॥ वस्तुतस्तु षट्चक्रवेधं कृत्वा ध्यानमात्रेणैव गुरुः शिष्यशक्तिं प्रबोधयेदियमेव वेधदीक्षोच्यते । वेधदीक्षया सम्पन्ने शिष्ये सद्यः क्रमेण षडवस्थाः प्रादुर्भवन्ति, यथोक्तम्-"आनन्दश्चैव कंपश्चोद्भावो घूर्णा कुलेश्वरि । निद्रा मूर्च्छा च वेधस्य षडवस्थाः प्रकीर्तिताः ॥" उद्भावः आसनादुत्थान । घूर्णा ( चक्रं-भ्रमिः ) । योग्यशिष्ये शक्तिसंचारेण मत्रे चेतने इतराण्यपि चिह्नानि दृश्यमानानि भवति तानि यथा-"आनन्दाश्रूणि पुलको देहावेशः सुरेश्वरि । इत्येतत्कथितं देवि मंत्रचैतन्य लक्षणम् ॥" इति शाक्तानंदतरंगिण्याम् । वेधदीक्षामहिमा मेरुतंत्रेऽप्युक्तो यथा-"दीक्षां वेधमयीं वक्ष्ये यां लब्ध्वा सुखदां जनः । तत्काल एव संसारे जीवन्मुक्तोभिजायते" ॥ वेधदीक्षाप्रकारश्चेत्थम्—आचार्यः शिष्यस्य मूलाधारे चतुर्दलपद्मं ध्यायेत्तन्मध्ये त्रिकोणं तस्य च मध्ये कुंडलीं त्रिरावर्णमयीं विसतन्तुनिभां विद्युत्पुंजस्वरूपिणीं दिव्यां ज्ञानरूपिणीमणोरणीयसीं देवीं षट्चक्रप्रभेदिनीं सुषुम्णावर्त्मना शिवगृहं यांतीं चिंतयेत् । तदनु गणपत्यधिष्ठित व श ष स वर्णैर्युतं चतुर्दलपद्मं आधारचक्रं ध्यात्वा तांश्च वर्णान्ब्रह्मणि आनयेत्त च ब्रह्माणं लिंगदेशे षड्दले ब भ म य र लैः युते स्वाधिष्ठानचक्रे वेधयेत् । ततः तान् षड् वर्णान् विष्णौ योजयित्वा तं च नाभिपद्मे 'ड ढ ण त थ द ध न प फ' युतदशदले मणिपूरकचक्रे वेधयेत् । पुनस्तान्दशार्णान् रुद्रे न्यस्य रुद्रं च हृदयकमले 'क ख ग घ ङ च छ ज झ ञ ट ठ' तिवर्णयुतद्वादशदले कमले अनाहतचक्रे वेधयेत् । इत्थं तानर्णानीश्वरे आहरेदश्वरं च 'अ आ इ ई उ ऊ ऋ ॠ ऌ ॡ ए ऐ ओ औ अं अः' इति षोडशस्वरयुतदले विशुद्धचक्रे संयोज्य तांश्च स्वरान् सदाशिवे संयोज्य तमपि भ्रूम-

ववन्दतुं मौलिभिरस्य पादयोर्जगन्निवासस्य जगद्गुरोर्गुरू ॥६२॥

॥ ब्रह्मोवाच ॥

विद्याविधे त्वयि समुद्गहतां जनानां
भावः भवोऽप्यभव एव भवत्यवश्यम् ॥
शिक्षात्मकीं समुपासनया चिरं चे-
त्वत्पादपद्ममकरन्दरसानभिज्ञाः ॥ ६३ ॥

वैराग्यबोधघनमस्तसमस्ततर्कैरातर्कितं त्वहृदि रागकषायहीनम् ॥
सर्वेश सर्वशरणागत जीवरक्षादीक्षाजुषं स्मरारिपुं भगवन्नतास्त्वाम् ॥
ये त्वामनन्यमनसो मनसोऽपि दूरं ध्यायन्ति चेतसि निरुद्धसमस्तवृत्ति ॥
तेषां त्वमात्मसुखरूपतया विभासि मूढस्य भस्मगरसर्पजटाग्निवेषः ॥
आनन्दसुन्दरमनंगमदं धुनानं ध्यानायनं स्मितसरोजमुखं प्रसन्नम् ॥
उद्यज्जटाविपिनचारिसरित्तरंगैराधूतकंठगरतापभरं महेशम् ॥

विद्याकपाः कुजनपुर्षनजाभिमत्या
भ्रान्ताः स्वभावकुटिलाः पशवो वराकाः ॥
त्वां नाद्रियन्त इह नास्ति कदापि तेषां
सिद्धिः स्वधर्मचरणेन समार्जितापि ॥ ६७ ॥

---

पत्रे हक्षवर्णयुक्तद्विदले आज्ञाचक्रे वेधयेत् । हंक्षं चात्मनि संयोज्यात्मानमपि ब्रह्मरंध्रे सहस्रारे शून्यचक्रे अकाराद्यर्णयुतदले वेधयेत् । पुनस्तामपि वर्णाकृतौ संयोज्य तामपि (विंशतिसहस्रदले पद्मे अथवा) परमशिवे वेधयेत् । एवं शिष्यदेहस्थषट्चक्राणि वेधयित्वा तं शिवरूपं कृत्वोपविशेदयं वेधदीक्षा सिध्यति । इत्थं दीक्षाविधिमाश्रित्य शिष्ये गुरुः शक्तिपातं करोति । दीक्षाकाले गुरुः ज्योतिर्मयीमविद्यापक्ष्मभेदिनीं विद्यां स्वस्माच्छिष्यं गच्छन्तीं भावयेत्, शिष्योऽपि गुरोरागतां मंगलायनां चिदानंदचमत्कारलहरीं विद्यां स्वस्मिन्नागतां भावयेत् । दीक्षाभेदाः इत्येवं बहवः ।

१ ववन्दतुरिति—दीक्षाविधेरनंतरं गुरुवंदनं विहितं तद्विविधं साष्टांगं पंचांगं च, यथा—हस्ताभ्यां चैव जानुभ्यां प्रणामे वक्षसा तथा । मूर्ध्ना दृशा तथा चैव क्रियतेऽष्टांग ईरितः । हस्तजानुशिरोवाक्यदृष्ट्या पंचांग ईरितः ॥ मेरुतंत्रे ।

त्वामाहुरेव कवयः स्वसुखाभिरामं
प्रेमप्रसन्नमनसं परमार्थतत्त्वे ॥
तत्त्वोपदेशविधुताखिलपापजालं
कालाख्यशक्तिपरिबुद्धगुणत्रयेशम् ॥ ६८ ॥
त्वत्पादपद्ममकरन्दरसं निषेव्य
वीतस्पृहाः स्वजनदारसुतेषु धीराः ॥
स्वच्छन्दमेव विचरन्ति जगत्स्व
आत्मन्यध्यस्तमित्यवसिताः स्रजि सर्पवद्ये ॥ ६९ ॥
सर्वात्मनः समदृशश्च गुरोर्गुरूणां
ते पादपंकजयुगं न भजन्त्यभव्याः ॥
किन्तु द्विषंत्यविषमं विषमस्वभावा
भस्मादिवेषमवमत्य पतंत्यधोऽधः ॥ ७० ॥
स्वानन्दतुन्दिलमसद्विषयेष्वसक्त-
मात्मानमस्य जगतः परमेश्वरं त्वाम् ॥
प्रेम्णा भजन्ति भजनीयपदारविन्दं
तेभ्यो नमः सततमस्तु महेश शंभो ॥ ७१ ॥

॥ विष्णुरुवाच ॥

जय शङ्कर शर्मद प्रभो जय विश्वेश विशेषदर्शन ॥
जय राम भवाटवीज्वलज्ज्वलनाकार विकारवर्जित ॥ ७२ ॥
गरलाग्निपरिज्वलज्जगत्कृतसंरक्षण नीलकण्ठ भो ॥
कलिकल्मषमोषकीर्तनस्फुरदर्केन्दुकृशानुलोचन ॥ ७३ ॥
स्वललाटविलोचनानलज्वलितानङ्गपतङ्ग सुन्दर ॥
त्रिपुरान्धकमर्दनाखिलत्रिजगज्जीवनिकाम कोमल ॥ ७४ ॥
अवधारितकालयोगिहृत्कमलानन्दसुधानिधे शिव ॥
अहिभूषण दूषणोज्झित मकरप्रेमनिभे किमीहि नम् ॥ ७५ ॥
परमार्थविचारसद्गुरो जगदाधार चिदाकृते विभो ॥
तव नास्ति कदाप्यविद्ययावरणं ज्ञानघनस्य जीववत् ॥७६॥

नय पारमपारवर्त्मनस्त्वमसीशानविशारदो गुरुः ॥
मनसो वचसोऽप्यगोचरे कृतसन्दर्शनकालमात्मनोः ॥७७॥
सर्वविश्वेश्वरः शम्भुर्हरिणा विधिनापि च ॥
स्तुतः सम्प्रार्थितः प्राह वचनं हृदयङ्गमम् ॥ ७८ ॥
॥ इति श्रीमत्पुराणसंहितायां सिद्धान्तसारे
दशमोऽध्यायः ॥ १० ॥
॥ आदितः श्लोकानां समष्ट्यङ्काः ॥ ६७४ ॥

---

## ॥ एकादशोऽध्यायः ॥ ११ ॥

॥ शिव उवाच ॥

शृणु ब्रह्मन् विधे विष्णो दुर्घटेऽर्थे मनोरथः ॥
कृतो भवद्भिस्तत्राहं न स्वतन्त्रः कदाचन ॥ १ ॥
तथाप्याराधिता शक्तिः कार्यसिद्धिं करिष्यति ॥
चिदानन्दमयी सा हि सर्वकारणकारणम् ॥ २ ॥
सा नित्यरूपा परमा नित्यसिद्धा निरामया ॥
अक्षरान्तर्हृदाकाशरङ्गे ब्रह्माण्डनाटकम् ॥ ३ ॥
रमयन्ती सूत्रधारमात्मानं स्वं प्रकुर्वती ॥
अक्षराक्षरपरयोर्लीलादर्शनदर्पणा ॥ ४ ॥
चिद्भागेऽक्षरलीलाया दर्शनं संभविष्यति ॥
आनन्दांशे शुद्धलीलादर्शनं चेति मे मतिः ॥ ५ ॥
तस्माद्ध्यानपथा तस्यामावेश्य विशदं मनः ॥
उभयोरंशयोर्लीलाद्वयमाशु निरीक्ष्यताम् ॥ ६ ॥
तस्मादन्यत्र यास्यामो विजनस्थलमुत्तमम् ॥
न यत्र चित्तविक्षेपः समाधिस्तत्र सिध्यति ॥ ७ ॥
इत्युक्त्वा ते ययुर्मेरोर्गुहां काञ्चनमालिनीम् ॥
गम्भीरां दुर्गमां दीर्घां सर्वसत्त्वविवर्जिताम् ॥ ८ ॥

यत्र प्रवेशमात्रेण षडूर्मिविजयो भवेत् ॥
न यत्र चित्तविक्षेपः समाधेः प्रतिरोधकृत् ॥ ९ ॥
विषयैश्चित्तविक्षेपाद्ध्यानं नैव प्रसिध्यति ॥
तां प्रविश्य गुहां रम्यां शतयोजनविस्तराम् ॥ १० ॥
तन्मध्येऽस्ति महानेको न्यग्रोधो योजनायतः ॥
विस्फुरत्पत्रनिचयो दीर्घशाखः सुशीतलः ॥ ११ ॥
सुन्दरः शीतलच्छायः पक्षिनीडविवर्जितः ॥
योजनत्रयमानेन परिणाहोऽस्य सर्वतः ॥ १२ ॥
न पतन्ति न रोहन्ति यस्य पत्रफलान्यपि ॥
तस्याधः संस्थितं कुण्डममृतोदं च नामतः ॥ १३ ॥
मणिकाञ्चनसंनद्धतटोद्देशं सुशोभनम् ॥
स्वच्छामृतजलापूर्णं स्वर्णपङ्कजराजितम् ॥ १४ ॥
तस्मिन्सर्वे कृतस्नानाः पयसाचम्य वाग्यताः ॥
न्यग्रोधच्छायामासाद्य तस्थुर्ध्यानविशारदाः ॥ १५ ॥
कुशबृष्यां समासीना बद्धपद्मासनाः स्थिताः ॥
आसनं तु जयेद्योगी शरीरस्थैर्यहेतवे ॥ १६ ॥
वपुःस्थैर्ये प्राणवायोरायामः साध्यते सुखम् ॥
प्राणो देहगतो वायुरायामस्तन्निरोधनम् ॥ १७ ॥
प्राणायामः स विज्ञेयो मनोवेगविभङ्गकृत् ॥
प्राणायामेन मनसि स्थैर्यमाप्ते ततश्च ते ॥ १८ ॥
प्रत्याजह्रुश्चेन्द्रियाणां वृत्तीर्विषयधाविनीः ॥
ततो वै धारयामासुर्वैराजीं धारणां शुभाम् ॥ १९ ॥
महाभूतमयं रूपं स्थूलं भगवतो हि यत् ॥
अष्टावरण[1]संवीतं तत्र चित्तं समादधुः ॥ २० ॥

---

१ पञ्चाशत्कोटियोजनपरिमितस्य ब्रह्माण्डस्य ( विराजः ) विश्वतो दशोत्तराधिकान्यष्टावरणानि पृथिव्यप्तेजोवाय्वाकाशमनोबुद्ध्यहङ्कारा-त्मकानि विराजमानानि भवन्ति तेषां पृथ्व्याद्याकाशपर्यन्तानामिमे अधि-

विरञ्चिर्ध्यानयोगेन भूतत्वमपहाय च ॥
जलतत्त्वं गतस्तद्वद्विष्णुस्तेज उपाविशत् ॥ २१ ॥
रुद्रस्तेजोविनिष्क्रान्तो वायुतत्वमथाविशत् ।
एवं क्रमेण ते सर्वे वायुतत्त्वं समाश्रिताः ॥ २२ ॥
तत्रेश्वरं कोटिदिवाकरद्युतिं शशाङ्ककोटिप्रतिमावदातम् ॥
स्फुरत्प्रचण्डाष्टभुजं त्रिनेत्रं सहस्रपत्राम्बुजमध्यसंस्थम् ॥ २३ ॥
कर्पूरकुन्देन्दुतुषारगौरमानन्दसंदोहनिमग्नचित्तम् ॥
स्फुरज्जटाजूटमनोज्ञवेषमनन्तमत्यद्भुतचिद्विकासम् ॥ २४ ॥
महाम्बुतेजस्त्रितयादतीतं वायुं त्वधिष्ठाय च सूक्ष्मरूपम् ॥
अतो महायोगरतास्तमेनं ज्ञानेन पश्यन्ति परेण चक्षुषा ॥२५॥
नानाविधाभिः शक्तीभिः सेव्यमानं समन्ततः ॥
तिरोधानकरं देवमग्राह्यं चक्षुरादिभिः ॥ २६ ॥
अपश्यन्ध्यानयमनास्तत्तदर्शावलं (बनाः) विना ॥
चेतसा चित्रमत्कारपरमानन्दनिर्वृताः ॥ २७ ॥
अथ ते च नमश्चक्रुः पुरुषाय महात्मने ॥
योगाधीशाय योगेशच्छन्दमार्गैकवर्त्मने ॥
प्रबद्धाञ्जलयः सर्वे स्तुत्यमीशं प्रतुष्टुवुः ॥ २८ ॥
नमः शिवाय शान्ताय निर्गुणाय गुणात्मने ॥
योगेश्वराय विद्यानां पतये परमात्मने ॥ २९ ॥
अतिसूक्ष्माय सूक्ष्माणां सर्वभूतात्मने नमः ॥
सर्वरूपतिरस्कारकारिणे परमाणवे ॥ ३० ॥
वाङ्मनोविषयातीतस्वरूपायाक्षरात्मने ॥
निर्विकाराय नित्याय नित्यशुद्धाय योगिने ॥ ३१ ॥

---

ध्यातारो ब्रह्मविष्णुरुद्रेश्वरसदाशिवाः देवाः। ब्रह्माण्डोर्ध्वभागं गच्छतां पृथ्व्याद्यावरणत्रयदेवतानां ब्रह्मादीनां वाय्वाकाशावरणदेवताभ्यामीश्वरसदाशिवाभ्यां सह समागमो भवित। पुनस्ते संभूय ऊर्ध्वं गमिष्यन्ति ।

अविद्यान्धतमस्तोमविपाटनपटीयसे ।
जगत्प्राणात्मने तुभ्यं नमः सर्वेश्वराय च ॥ ३२ ॥
सर्वान्तर्यामिणे सर्वसाक्षिणे विश्वरूपिणे ।
अद्वैतानन्दपूर्णाय कालचक्रप्रवर्तिने ॥ ३३ ॥
कालशक्तिस्वरूपाय [1]कालाकलितरूपिणे ।
वेदवेदां(ग)तगीताय नमस्तुभ्यं दयानिधे ॥ ३४ ॥
शाध्यस्मान्किङ्करान्देव शरण्य शरणागतान् ।
त्वत्पादपोतमास्थाय मनोरथमहाम्बुधिम् ॥ ३५ ॥
तर्तुमिच्छामहे नाथ साहाय्यं तत्र नः कुरु ।
श्रूयते ब्रह्म परमं परात्मा पुरुषोऽक्षरः ॥ ३६ ॥
आब्रह्मकीटजीवानामात्मा व्यापी निरञ्जनः ।
समाधौ वर्तते सोऽयं तद्दिदृक्षितचेतसः ॥ ३७ ॥
तत्र गन्तुं प्रवृत्तान्नो विद्धि ब्रह्मा[2]त्मशङ्करान् ।
यथा नो दर्शनं भूयात्तथा कर्तुं त्वमर्हसि ॥ ३८ ॥
[3]मनोरथेनाविषयीकृतं किं वर्तते प्रभो ।
इति तेषां वचः श्रुत्वा सस्मितं प्राह चेश्वरः ॥ ३९ ॥

॥ ईश्वर उवाच ॥

भो ब्रह्मन् शङ्कर हरे दुर्घटोऽयं मनोरथः ।
कथं सेत्स्यति का शक्तिर्भवतां तस्य दर्शने ॥ ४० ॥
प[4]ञ्चब्रह्ममये मञ्चे शयानः पुरुषो महान् ।
महाविष्णुस्वरूपेण स्वप्ने ब्रह्माण्डमीक्षते ॥ ४१ ॥
अहं यूयं शिवश्चापि स्वाप्निका एव केवलम् ।
तत्र गन्तुं कथं शक्ता द्रष्टुं साक्षिणमित्यहो ॥ ४२ ॥

---

१ कालाकालस्वरूपिणे इत्यपि पाठः । २ आत्मा विष्णुः ।
३ प्रभोः—समर्थस्य मनोरथे अविषयीकृतं किमपि न वर्तते । सर्वं लभत इति यावत् । अत्र प्रभोः इत्यपि मूलपाठः ।
४ अक्षरस्य मञ्चभूतानि पञ्चब्रह्माणि माहेश्वरतन्त्रे प्रतिपादितानि ।

प्रतिबिम्बो यथा सूर्यं साक्षिणं नैति कर्हिचित् ।
साक्षिणं पुरुषं तद्वत् यूयं गन्तुमर्हथ ॥ ४३ ॥
जले साक्षिप्रकाशस्य स्फुरणं न च वास्तवम् ।
अज्ञानकार्येषु तथा चिदाभासः प्रसर्पति ॥ ४४ ॥
प्रकाशाध्यस्तसलिलं तदभावे[1] न किञ्चन ।
अज्ञानाध्यस्तचैतन्यं तदभावे वयं च के ॥ ४५ ॥
आत्मरूपमविज्ञाय कथं यास्यथ तत्र वै ।
प्रतिबिम्बो यथा बिम्बं स्वाप्निकः स्वप्नदर्शनम्[2] ॥ ४६ ॥
नैवाप्नोति तथा यूयं साक्षिणं पुरुषं बुधाः ।
नोचितो वोभिलाषोयमाकाशकुसुमग्रहे ॥ ४७ ॥
विकृतः प्रकृतिं याति सर्वथेति विनिश्चयः ।
घटो मृदमिवाकाशो महाकाशमिवामराः ॥ ४८ ॥
चिदाभासस्तु चैतन्यं सर्वोपाधिविवर्जितः ।
चिदाभासमया यूयममनस्का निरीन्द्रियाः ॥ ४९ ॥
तन्मात्रभूतास्तद्रूपं[3] कथं प्रेक्षितुमर्हथ ।
असाध्येर्थे प्रवर्तेत बुद्धिमान्न कदाचन ॥ ५० ॥
असाध्ये साधनायासं ये कुर्वन्ति विमोहिताः ।
निष्पीड्य सिकतापुञ्जमिच्छन्ति स्नेहसंग्रहम् ॥ ५१ ॥
स्वसामर्थ्यानुसारेण कार्ये लोकः प्रवर्तते ।
किं सामर्थ्यं पुरोधाय यूयं तत्र प्रयास्यथ ॥ ५२ ॥
तद् ब्रुवन्तु महाभागाः श्रोतुमिच्छाम्यहं यथा ।
निशम्य तद्वचः श्लक्ष्णं प्राह रुद्रो महामतिः ॥ ५३ ॥

इति श्रीमत्पुराणसंहितायां सिद्धान्तसारे ईश्वरसमागमो नाम एकादशोऽध्यायः ॥ ११ ॥

आदितः श्लोकानां समष्ट्यङ्काः ॥ ७२७ ॥

---

१ अज्ञानाभावे । २ स्वप्नद्रष्टारमित्यर्थः । ३ चिदाभासमात्रभूताः ।

## ॥ द्वादशोऽध्यायः ॥ १२ ॥

॥ वेदा ऊचुः ॥

मुनीश्वर वचः श्रुत्वा विधिविष्णू जगत्पती ।
न किञ्चनोचतुस्तत्र प्रेक्षयामासतुर्हरम् ॥ १ ॥
नमस्कृत्य ततः शम्भुः प्रोवाच तमपीश्वरम् ।
निःशंको निर्भयो धीरो निःकुतूहल एव हि ॥ २ ॥

॥ शिव उवाच ॥

शृणु देव प्रवक्ष्यामि याथातथ्येन नो बलम् ।
यदुक्तं भवता नाथ निरर्थं गमनं च वः ॥ ३ ॥
तत्तथैव न संदेहः स्वप्रभूतमिदं जगत् ।
स्वप्रेक्षितारं नो याति सांख्ययोगक्रियादिभिः ॥ ४ ॥
तथाप्याराधिता शक्तिरस्माभिस्तु सुमङ्गला ।
चिदानन्दमयी देवी लीलाद्वयनिदर्शना ॥ ५ ॥
तस्यां चेतः समाधाय चिदंशेऽक्षरदर्शनम् ।
आनन्दांशे शुद्धलीलादर्शनं नो भविष्यति ॥ ६ ॥
न तस्यां चित्तविलयो भविष्यति कदाचन ।
सृष्टिबीजं यतः सा हि मायाशक्तिर्दुरत्यया ॥ ७ ॥
इच्छेति गीयते लोके वेदे च बहुधा प्रभो ।
दुष्करे दुर्गमे कार्ये प्रमाणस्यान्यथाकृतौ ॥ ८ ॥
विधेरघटितस्यापि घटनायां तथा प्रभो ।
तत्सामर्थ्यप्रतिहतिर्न कदापीति मे मतिः ॥ ९ ॥
उपाधयो विलीयन्ते ब्रह्मज्योतिःप्रभावतः ।
सुमङ्गलायां निहितं न लयं यास्यति प्रभो ॥ १० ॥
विलये कारणस्यापि कार्यं नश्यति यद्यपि ।
महाकारणसत्तायां न तथेति विनिश्चयः ॥ ११ ॥
तस्माद्वयं प्रयास्यामो नत्वा त्वच्चरणाम्बुजम् ।
भवत्प्रसादतश्च हि कार्यसिद्धिर्हि नस्तथा ॥ १२ ॥

इत्युक्तवति देवेशे महादेवेऽखिलात्मनि ।
पुनः प्रोवाच वचनं पुरुषः स महेश्वरः ॥ १३ ॥

॥ ईश्वर उवाच ॥

साधु साधु महादेव भवता यद्विमार्षितम् ।
असाध्यसाधिनी देवी शक्तिरेका न चापरा ॥ १४ ॥
कारणानां च सर्वेषां कारणं चरमं हि सा ।
मूलप्रकृतिरेवेयमिच्छारूपत्वमागता ॥ १५ ॥
अनभिव्यञ्जिता लोके नानाशक्त्येकसंश्रया ।
ब्रह्मणो निर्विकारस्य निर्विशेषस्य साम्प्रतम् ॥ १६ ॥
सर्वज्ञस्यात्मतन्त्रस्य पूर्णस्याखण्डसंविदः ।
विकारं च विशेषं च किञ्चिज्ज्ञत्वं तथापि च ॥ १७ ॥
पराधीनपरिच्छेदाऽपूर्णबोधत्वमप्युत ।
सम्पादयति या काले क्रान्त्या स्फटिकपुष्पवत् ॥ १८ ॥
समाधिमिव कुर्वाणो लीलानिमग्नमानसः ।
शक्त्या सृष्टाज्ञानतन्त्रः संस्कारवशतः प्रभुः ॥ १९ ॥
यथापूर्वं पश्यमानः शेते मञ्चासने विभुः ।
द्रष्टुस्तस्य परेशस्य दृश्या एव वयं विभो ॥ २० ॥
तन्मात्ररूपा न ततः पृथक्भूतास्तथापि च ।
न साक्षाद्दर्शने योग्याः शक्त्या संवृतचेतसः ॥ २१ ॥
तन्मात्रोपाधिमाश्रित्य दर्शनं सोपपत्तिकम् ।
अन्यथोपायसाहस्रैः कार्यसिद्धिर्न कर्हिचित् ॥ २२ ॥
एवं विधे दुरालोके दुर्गमे दुष्करेपि च ।
कर्तव्ये च भवानेक एवोपायविदुत्तमः ॥ २३ ॥
विघ्नेश्वरो भवान्साक्षाल्लीलास्फुरितमानसः ।
वैराग्यसारो ज्ञानशक्तिरसदासक्तिवर्जितः ॥ २४ ॥
त्वत्साहाय्येन सर्वेषां दर्शनं च भविष्यति ।
अहमप्यागमिष्यामि स्वात्मदर्शनहेतवे ॥ २५ ॥

आत्मतत्त्वप्रकाशाय यतन्ते योगिपुंगवाः ।
चिदाभासमयं ज्योतिर्दृष्ट्वा साम्यन्ति केवलम् ॥ २६ ॥
मूलरूपं तु नः केपि कथं पश्यन्ति मोहिताः ।
ब्रह्मावृत्त्या तदाभासमात्रेणाविद्यया कृताः ॥ २७ ॥
इति श्रुत्वा वचस्ते तु ध्यानमार्गेण केवलम् ।
वायुतत्त्वमतिक्रम्य नत्वा तत्पादपङ्कजम् ॥ २८ ॥
आकाशतत्त्वमगमन्विधिविष्णुहरास्तदा ।
ईश्वरोऽप्यनिलं भित्त्वा ध्यानयोगेन संस्थितः[1] ॥ २९ ॥
आकाशतत्त्वमगमद्यत्र देवः सदाशिवः ।
आकाशे ध्वनिरूपस्तु नादः सूक्ष्मतमस्तु यः ॥ ३० ॥
तत्र ते ददृशुः सर्वे सदापूर्वं शिवं बुधाः ।
प्रतिवक्त्रं त्रिनयनं पञ्चवक्त्रं जटाधरम् ॥ ३१ ॥
अनेकसूर्यसंकाशं प्रसन्नवदनेक्षणम् ।
शक्तिवृन्दोपसंवीतं दशबाहुं सितप्रभम् ॥ ३२ ॥
ध्यानमुद्रासमासीनं दृष्ट्वा नत्वातिभक्तितः ।
प्रबद्धाञ्जलयः सर्वे चत्वारस्त्रिदशेश्वराः ॥ ३३ ॥
तुष्टुवुर्ध्यानियोगेन प्रतिलभ्य जगत्पतिम् ।

॥ देवा ऊचुः ॥

चिदानन्दमानन्दरूपं प्रसन्नं महायोगिभिर्ध्यानमार्गेण गम्यम् ।
दुरालोकमाकाशतत्त्वेश्वरं त्वां नमामः सदानुग्रहीतारमीशम् ॥ ३४ ॥
चिदाकारमाकारहीनं वरेण्यं शरण्यं विभुं व्यापकं निर्विकारम् ।
उपेतं सदा शान्त्यतीतात्मशक्त्या निराबाधविज्ञानमीशं नताः स्म ३५
उदञ्चत्प्रभापुञ्जमध्ये स्फुरन्तं निराबाधमाकाशतत्संगहीनम्[2] ।
विकारैर्विमुक्तं निरीहं निरीशं प्रपञ्चात्परं त्वां सदा भावयामः ॥ ३६ ॥
मनोवागतीतं गुणात्मानमेकं निरस्ताखिलोपाधिबिन्दुस्वरूपम् ।
अणोरप्यणीयांसमन्तः प्रसन्नमखण्डात्मकं त्वां सदा भावयामः ॥ ३७ ॥

१ सस्थितम् इति अपि पाठः । २ निराधारं इत्यपि पाठः ।

इत्थमाराधितः स्तुत्या प्रोवाच वचनं सुरान् ॥ ३८ ॥

॥ सदाशिव उवाच ॥

मनोवाग्विषयातीतपदप्रेक्षणलालसाः ।
गन्तुं कृतधियो यूयं प्रवृत्ता विदितं च मे ॥ ३९ ॥
दुर्घटे दुर्लभे वोऽद्य जातोयं च मनोरथः ।
तथापि रुद्रोपादिष्टादुपायाच्छक्तिसेवनात् ॥ ४० ॥
भविष्यति भवत्कार्यसिद्धिः प्रत्यूहवर्जिता ॥ ४१ ॥
अहमप्यागमिष्यामि भवद्भिः सह सुव्रताः ।
एवमुक्त्वा ततः सर्वे भित्त्वा तद्बिन्दुमण्डलम् ॥ ४२ ॥
प्रयाता रोधिनीं शक्तिं ददृशुः सर्वमोहिनीम् ।
दिव्यवस्त्रपरीधानां दिव्यालङ्कारभूषिताम् ॥ ४३ ॥
अतिदिव्याङ्गरागादिदिव्यपुष्पसमाकुलाम् ।
दिव्यमाणिक्यमुकुटां दिव्यकुण्डलमण्डितां[१] ॥ ४४ ॥
दिव्यरत्नोल्लसद्धारां दिव्यकाञ्चीगुणप्रभाम् ॥
दिव्यमञ्जीरसुभगपादाम्भोजविराजिताम् ॥ ४५ ॥
रुन्धती रोधिनी रोधा ज्ञानरोधा तमोपहा ।
निरोधिका कला[२] पञ्च परिवार्या व्यवस्थिताः ॥ ४६ ॥
ब्रह्मादि[३]पञ्चदेवानां पदप्राप्तिनिरोधनात् ।
निरोधिकेति सा प्रोक्ता शक्तिः कापि बलीयसी ॥४७॥
तां दृष्ट्वा च ततः सर्वे प्रबद्धकरसम्पुटाः ।
तुष्टुवुर्भक्तिनम्राश्च प्रणमन्तः पुनः पुनः ॥ ४८ ॥

॥ देवा ऊचुः ॥

नमो देवि जगद्धात्रि जगन्मातर्जगन्मये ।
त्राह्यस्मान् शरणापन्नान् त्वत्पादार्पितमानसान् ॥४९॥
त्वत्पाशयमितं विश्वमसक्तं ज्ञाननिश्चये ।

---

१ भूषिताम् इति पाठः । २ रोधिका पालिका पञ्च परिवार्य व्यवस्थिताः इत्यपि पाठान्तरम् । ३ ब्रह्मादिपरमेशानां इत्यपि पाठः ।

स्वत्प्रसादं त्वया देवि वस्तुज्ञानं न जायते ॥ ५० ॥
प्रभवो न महेशाद्यास्त्वामन्वेतुं महेश्वरि ।
किं पुनर्ज्ञानिनः सिद्धा योगिनो जीवसंस्तुताः ॥ ५१ ॥
ब्रह्मानन्दमुखद्वारं त्वं निरुध्य व्यवस्थिता ।
तथापि भक्तिनम्रेषु दयामाविष्कुरु द्रुतम् ॥ ५२ ॥
अनुगृह्णाति भवती यदि तत्पददर्शनम् ।
नानुगृह्णाति चेद्देवि तदा नो हि वृथा श्रमः ॥ ५३ ॥
कृपापीयूषवर्षिण्या दृशालोकय तावकान् ।
प्रकाशय जडीभूतान्ब्रह्मवर्त्म दुरासदम् ॥ ५४ ॥
इत्थमाराधिता शक्तिः प्रसन्ना त्रिदशेश्वरान् ।
प्रणतान् कृपयोवाच ध्यानयोगोपसङ्गतान् ॥ ५५ ॥

॥ रोधिन्युवाच ॥

अहो देवेश्वराः कोयमपूर्वो वो मनोरथः ।
अद्यप्रभृति कस्यापि न जातो नो जनिष्यति ॥ ५६ ॥
एकमेव परं ब्रह्म सर्वकारणकारणम् ।
न यस्मादपरं किञ्चित्स्वयमेवाखिलं जगत् ॥ ५७ ॥
यस्मिन्नुज्झाति सकलं स्थूलसूक्ष्ममयं च यत् ।
यस्मिन्नेव लयं याति निर्विकारतया स्थितम् ॥ ५८ ॥
शश्वत्पूर्णं ज्ञानघनमखण्डितमनावृतम् ।
पुरुषं परमात्मानं शयानं मोहनिद्रया ॥ ५९ ॥
भवन्तस्तं कथं द्रष्टुं यूयं यद्यपि चेश्वराः ।
निद्रासंवलितस्तस्याभास एव हि केवलम् ॥ ६० ॥
वर्तते तारतम्येन यथा जीवेश्वरादिकं ।
तस्मिन्समुत्थिते देवा यूयं तन्मात्ररूपिणः ॥ ६१ ॥
भविष्यथ न सन्देहस्तरङ्गा इव वारिधौ ।
तत्कथं द्रक्ष्यथानन्तमखण्डं पदमीश्वराः ॥ ६२ ॥
अतो निवारितुमहं स्थिता जीवेश्वरादिकं ।

मर्यादेयं च महती न मामत्येति कश्चन ॥ ६३ ॥
तथाप्याराधिता शक्तिर्भवद्भिः सा सुमङ्गला।
तस्याः कोटयंशभागेन वित्त मामत्र संस्थितां ॥ ६४ ॥
तद्भक्ता माननीया मे नावरोधितुमुत्सहे।
अतः परं नादतत्त्वं भवन्तोऽनुभविष्यथ ॥ ६५ ॥
नादान्तश्च ततो भावी शक्तितत्त्वं ततः परं।
शमना च ततः शक्तिस्ततः स्यादुन्मनीति च ॥ ६६ ॥
ततः शून्यं महाघोरमतिगाढं सुदुस्तरम्।
वाङ्मनोरूपकालाद्यैरनाकलितमीश्वराः ॥ ६७ ॥
तद्गत्वा सा परा शक्तिः स्मर्तव्या च सुमङ्गला।
तत्प्रसादेन तिमिरं महाशून्यं तरिष्यथ ॥ ६८ ॥
विश्वोत्तीर्णं पदं[1] तस्माच्छक्तिमाविश्य[2] केवलम्।
प्रेक्षयिष्यथ सानन्दमन्यत्किञ्चिदपीह तत्॥ ६९ ॥
तद्व्रजन्तु भवन्तो हि मदनुग्रहभाविताः।
शिवः पन्थास्तु सततं फलितोऽस्तु मनोरथः ॥ ७० ॥
इति श्रीमत्पुराणसंहितायां रोधिनीशक्तिपञ्चदेवतासमागमो नाम द्वादशोऽध्यायः ॥ १२ ॥
आदितः श्लोकानां समष्टयङ्काः ॥ ७९७ ॥

## त्रयोदशोऽध्यायः ॥ १३ ॥

### ॥ व्यास उवाच ॥

धन्योऽस्म्यनुगृहीतोऽस्मि भवद्भिः करुणापरैः।
भवन्तो हृदयं तस्य ब्रह्मणः परमात्मनः ॥ १ ॥
भवद्धृदयमप्येतद्भवद्भिः सर्वदर्शनैः।
कृपया परया पूर्णैर्मत्पुरः प्रकटीकृतम् ॥ २ ॥
जिज्ञासायामिहार्थस्य स्वल्पमात्रस्य दर्शिताः।

१ विश्वोत्तीर्णपदम् इति पाठः। २ आवेश्य इति पाठः।

अर्था बहुविधा गूढा युष्माभिः गुरुभिः सताम् ॥ ३ ॥
एतच्छ्रवणमात्रेण कृतकृत्यो भवेन्नरः ॥
श्रवणं श्रवणार्हाणां भवेच्छ्रवणगोचरम् ॥ ४ ॥
नानाजन्मान्तराभ्यस्तपापपङ्कजरवेष्टितैः ।
न प्राप्य श्रवणं साधु कदाचिदपि मानवैः ॥ ५ ॥
असत्कथां हि शृण्वन्ति कामिनो न कथामिमाम् ।
यथा स्यात्पाङ्किलं वारि भेकतृप्त्यै न चापरम् ॥ ६ ॥
कामवार्तार्थविज्ञाने चक्षुष्मन्तः खला जनाः ।
उलूकास्तिमिरे घोरे पश्यन्ति न तथा दिवा ॥ ७ ॥
सतामेव हि चेतांसि हृष्यन्ति ज्ञानवार्तया ।
चन्द्रांशुस्पर्शमात्रेण चन्द्रकान्तः स्रवेज्जलम् ॥ ८ ॥
साधुचित्तगता सम्यक् शोभते ज्ञानसत्कथा ।
स्वात्यम्भः शुक्तिमासाद्य शुद्धं मुक्ताफलं भवेत् ॥ ९ ॥
विशिष्टवक्त्रवक्त्राब्जनिःसृतैव कथा कथा ।
गोस्तनाद्गलितं दुग्धमङ्गेभ्यो रुधिरं स्मृतम् ॥ १० ॥
कथाः शृण्वन्ति बहवः साधवो रसविसमाः ।
रसालाः पुष्पिता यद्वत्पिकशब्देन नेतरे ॥ ११ ॥
भवाब्धौ च निरालम्बे पततां मज्जतां नृणाम् ।
ज्ञानवार्ताप्लवो दृष्टः सुदृढः पारदर्शनः ॥ १२
भग्नभाण्डार्पिताम्भोवच्छिलायामुप्तबीजवत् ।
भस्मन्येव हुतं तद्वत्कथा व्यर्था खलेऽर्पिता ॥ १३ ॥
तस्माद्गोप्यतरा नूनं या भवद्भिः प्रकाशिता ।
परानुग्रह एवैकः स्वभावो महतां स्थितः ॥ १४ ॥
पृष्टानपेक्षं वदतां भवतां शीलमुत्तमम् ।
केनोपमेयं करुणस्वभावानामहो महत् ॥ १५ ॥
अतः पृच्छामहे नाथा विबुधास्ते यथा ययुः ।

ध्यानारूढेन मनसा नादादिक्रमतो बृहत् ॥ १६ ॥
तद्वदन्तु महाभागाः परा(प)रविचारकाः ।
भवद्वचःसुधापानैस्तृप्तिर्नो जायते हृदि ॥ १७ ॥

॥ सूत उवाच ॥

एवमुक्त्वा स्थिते व्यासे प्रबद्धकरसंपुटे ।
प्रोचुस्ते परया प्रीत्या शब्दब्रह्मवपुर्धराः ॥ १८ ॥

॥ वेदा ऊचुः ॥

शृणु व्यास प्रवक्ष्यामो यन्नस्त्वं परिपृच्छसि ।
यस्य श्रवणमात्रेण ब्रह्मज्ञानं प्रजायते ॥ १९ ॥
ते नमस्कृत्य जीवानामर्गलाभूतदेवताम् ।
प्रयाताः परमोदारं नादमण्डलमाययुः ॥ २० ॥
पद्मकिञ्जल्कवर्णाभः कोटिसूर्यसमप्रभः ।
सुरैः परिवृतोऽसंख्यैर्मध्ये पञ्चकलावृतः ॥ २१ ॥
इन्धिका दीपिका चैव रे(रो)चिका मोचिका तथा ।
ऊर्ध्वगा मध्यगा तासां पञ्चमी परमा कला ॥ २२ ॥
चन्द्रकोटिसमप्रख्यं तन्मध्येऽर्बुदयोजने ।
पद्ममध्ये समासीनं ज्योतिर्लिङ्गं महाद्भुतम् ॥ २३ ॥
ध्यानारूढेन मनसा प्रविष्टा नादमण्डलम् ।
अत्यद्भुतमहज्ज्वालाकूटमालक्ष्य विस्मिताः ॥ २४ ॥
किमेतज्ज्योतिरमलमखण्डं चोर्ध्वगं महत्[1] ।
इति बुध्या विमम्रुशुस्तावत्त्तेजसोन्तरात्[2] ॥ २५ ॥
सर्वतो व्यापकं लिङ्गमूर्ध्वगं समदृश्यत ।
ज्योतिर्ज्वालामयं दिव्यमनन्तं द्रष्टुमक्षमम् ॥ २६ ॥
यावत्स्तोतुं समारब्ध(ब्धा)स्तावत्तल्लिङ्गमध्यतः ।
प्रादुरासीत्परः शंभुः पञ्चवक्त्रस्त्रिलोचनः ॥ २७ ॥
कोटिचन्द्रप्रभागौरः शूलपाणिर्जटाधरः ।

---

१ अक्षरं ब्रह्म । २ ततस्ते ज्योतिषोन्तरात् इत्यपि पाठः ।

परमानन्दबोधाब्धिः कोटिकाममनोहरः ॥ २८ ॥
तस्योत्सङ्गे च खेलन्ती चोर्ध्वगा परमेश्वरी ।
दिव्यरत्नकिरीटेन कुण्डलाभ्यां विराजिता ॥ २९ ॥
दिव्यगन्धानुलिप्ताङ्गा रणत्किंकिणिमेखला ।
माणिक्यहारशुभगा नानाभरणभासुरा[1] ॥ ३० ॥
केयूरकङ्कणलसत्पाणिपङ्कजशोभिता ।
संवीतरक्तवसना दिव्यपुष्पस्रगाकुला ॥ ३१ ॥
दृष्ट्वा युगं तच्छिवयोर्महेश्वराः प्रणेमुरानन्दजलाप्लुतेक्षणाः ।
धन्या वयं चेति वचो ब्रुवाणा यतो भवानक्षिपथं गतोऽद्य ॥३२॥
त्वां द्रष्टुमन्तर्हृदि योगभाविता जितासनाः प्राणगतिं निरुध्य च ॥
नादात्मनि त्वय्युपधाय धारणां प्रविश्य नोत्थानमुशन्ति योगिनः॥३३॥
वियोगिनो योगपथानुवर्त्तिनो निशम्य सूक्ष्मावयवोपलक्षितम् ।
अनाहतं नादमखण्डमूर्ध्वगं तदन्तरा त्वां कलयन्ति चिन्मयम् ॥३४॥
भूतानि यानि स्थिरजङ्गमानि त्वय्येव सूत्रे मणयो यथा तथा ।
प्रोतानि तेष्वाहित एव वर्तसे प्राणात्मना त्वां कलयन्ति योगिनः॥३५॥
यदक्षरं वेदविदो वदन्ति न यत्र मायागुणकालवृत्तयः ।
यस्यैव भासा निखिलं विभाति तत्ते पदं प्राहुरखण्डमार्याः ॥३६॥
प्रसीद देवेश्वर दिव्यमूर्त्ते जगन्निदानाखिलभूतसाक्षिन् ।
स्वयं प्रकाशं च कथं नु विद्महे भवन्तमन्तःकरणेन साक्षिणम् ॥३७॥
वयं प्रवृत्ताः परमं पदं च यद्गन्तुं मनोवागपदं निरामयम् ।
तदत्र साहाय्यमुपेत्य नो भवान्नयस्व पारं दुरवाप्यवर्त्मनः ॥ ३८ ॥
इत्येवं प्रार्थितो देवैर्नादात्मा परमेश्वरः ।
प्रोवाच त्रिदशाधीशान् प्रेम्णा प्रणतवत्सलः ॥ ३९ ॥

॥ नादशिव उवाच ॥

अहो महाश्चर्यमिदं कथं वो मतिरीदृशी ।
यत्पदं नेन्द्रियैर्ग्राह्यं देवताधिष्ठितैरपि ॥ ४० ॥

---

१ नासाभरण इत्यपि पाठः ।

वाङ्मनपश्चैरवाच्यं यन्मनः सङ्कल्पदूरगम् ।
बुद्ध्याप्यवेद्यं यज्ज्योतिर्मायाकार्यजडात्मकम् ॥ ४१ ॥
असज्जडं च दुःखं च मायारूपं त्रिधा स्मृतम् ।
अतस्तद्विपरीतं हि सच्चिदानन्दलक्षणम् ॥ ४२ ॥
त्रिविधायाश्च मायायाः कार्यं चापि तथाविधम् ।
तादृशस्य कथं देवाः प्रकाशं तद्भविष्यति ॥ ४३ ॥
कथं प्रकाशो(श्यो) भवति भानुमानितरैर्जडैः ।
प्रकाशको यथा दीपो गृहगैश्च घटादिभिः ॥ ४४ ॥
एवंविधाघटितकार्यविधौ प्रवृत्ताः
सीदन्ति यद्यपि तथापि भवद्भिरेभिः ।
आराधिता परमशक्तिरुदारतत्वा
पारंनयिष्यति मनोरथवारिराशेः ॥ ४५ ॥
तथाप्येकमुपायं वः प्रवक्ष्यामि महेश्वराः ।
तेन मार्गेण गच्छन्तः कार्यसिद्धिमवाप्स्यथ ॥ ४६ ॥
मदीयं धाम परमं नादाख्यं सूक्ष्ममव्रणम् ।
तं प्रविश्य कियद्दूरं गत्वा नादान्तमाप्स्यथ ॥ ४७ ॥
तदन्ते संस्थितो ब्रह्माशिवः परमकारणम् ।
दशबाहुस्त्रिनयनः पञ्चवक्त्रेन्दुशेखरः ॥ ४८ ॥
रुद्रकोट्यर्बुदैर्विष्णुकूसेवितः शक्तिभिर्युतः ।
अङ्कोपविष्टब्रह्माणीशक्तिलालनलालसः ॥ ४९ ॥
कोटिमन्मथलावण्यः कोटिचन्द्रांशुनिर्मलः ।
तस्यासनाधः परमं देवा ब्रह्मबिलं महत् ॥ ५० ॥
तत्तु नादलयस्थानं योगिनामपि दुर्गमम् ।
ब्रह्माणीब्रह्मशिवयोः प्रसादमुपलभ्य च ॥ ५१ ॥
तद्दर्शितब्रह्मबिलं प्रविश्य समनां ततः ।
तत्प्रसादेन परमामुन्मनीं शक्तिमाप्स्यथ ॥ ५२ ॥
मासः परतरः कश्चित्प्रपञ्चो(ञ्चे) वर्तते सुराः ।

पृथ्वीतत्वं समारभ्य यावदुक्तोन्मनी हि सा ॥ ५३ ॥
स्वाप्निकं सर्वमेतद्धि अज्ञानेन विकल्पितम् ।
अज्ञानरूपा सा निद्रा पुरुषस्य परात्मनः ॥ ५४ ॥
महाशून्यमयी चाग्रे भविष्यति यदामराः ।
दुस्तरा च निरालोका तदा देवी सुमङ्गला ॥ ५५ ॥
चिदानन्दात्मिका शुद्धा स्मर्तव्या सा प्रयत्नतः ।
पूर्वमाराधिता सा च प्रसन्ना भक्तवत्सला ॥ ५६ ॥
स्वधामस्फूर्तियोगेन शून्ये मार्गं करिष्यति ।
प्रयातास्तेन मार्गेण सूक्ष्मरूपेण मध्यतः ॥ ५७ ॥
सुमङ्गलायां नि(र्ली) लीय ब्रह्मान्तर्हृदि वर्तिनीम् ।
लीलां गोलोकसंज्ञां च साक्षादिव समीक्षथ ॥ ५८ ॥
इत्युक्तास्ते ततस्तेन नत्वा तत्पादपङ्कजम् ।
प्रयाताः प्रापुरमरा अव्यक्तध्वानिलक्षणम् ॥ ५९ ॥
नादान्तं तत्र ददृशुः पञ्चवक्त्रं त्रिलोचनम् ।
कोटिकोटीन्दुसुभगं दशहस्तेन्दुशेखरम् ॥ ६० ॥
अनन्तकोटिरुद्रौघैः समन्तात्परिसेवितम् ।
नाम्ना ब्रह्मशिवं स्वाङ्के कृत[1]ब्रह्माणिशक्तिकं ॥ ६१ ॥
स्तुत्या प्रसादयामासुस्तं देवाः शक्तिसंयुतम् ।
तेभ्यो ब्रह्मबिलं तुष्टो दर्शयामास वै शिवः ॥ ६२ ॥
प्रविष्टास्तेन मार्गेण सपनां शक्तिमाययुः ।
तत्प्रसादं परिगृह्य चोन्मनीमगमन्सुराः ॥ ६३ ॥
निराकारा निरुच्चारा शब्दातीता निरञ्जनाः ।
नात्रकाल[2]कलाभानं न तत्वं न च देवता ॥ ६४ ॥
तद्धाम परमं प्राप्ता ब्रह्माद्यास्ते दिवौकसः ।
महाशून्यं तमो घोरं दृष्ट्वा शून्या इवाभवन् ॥ ६५ ॥

---

१ स्वाङ्कब्रह्माणीकृतशक्तिकम्, इतिपाठ भे० ।
२ नात्रकालः कलाभानम्, इ० पा० ।

निर्व्यापारा निरुद्योगाः कुण्ठितध्यानशक्तयः ।
प्रकाशरहिते घोरे तिमिरे नष्टबुद्धयः ॥ ६६ ॥
स्मेरुः सुमङ्गलां देवीं कोटिसूर्यप्रभामयीम् ।
ज्ञानरूपे नमस्तुभ्यमज्ञानध्वान्तदीपिके ॥ ६७ ॥
निर्व्याजकरुणामूर्त्ते नमस्तुभ्यं कृपावति ।
इच्छाज्ञानक्रियारूपे चिदानन्दात्मिके नमः ॥ ६८ ॥
निःप्रपञ्चे प्रपञ्चाधिष्ठात्रि त्रिगुणदेवते ।
गुणातीते ज्ञानघने परानन्दात्मिके नमः ॥ ६९ ॥
चिदानन्दमहाम्भोधिविस्फूर्ज्जद्रत्नरूपिणि ।
विश्वनाटकनिर्माणसूत्रधारस्वरूपिणि ॥ ७० ॥
महाकारणसद्रूपे प्रपञ्चस्याखिलस्य च ।
कालशक्तिधरे नित्ये कालत्रितयरूपिणि ॥ ७१ ॥
रसलीलानाट्यरङ्गयोगमायाप्रवर्त्तिनि ।
कालाविष्कृत[1]सद्रूपे लीलानाटकदीपिके ॥ ७२ ॥
आह्लादितब्रह्मचित्ते रसलीलानिदर्शनैः ।
हेलाकल्पितजीवेशजडवर्गे परात्परे ॥ ७३ ॥
उपरार्पितसत्कल्पे कल्पवाट्युप्तकण्टके ।
प्रणमामो वयं मातस्त्वल्लीलाम्भोधिबुद्बुदाः ॥ ७४ ॥
त्वत्स्वरूपं कथं मातर्जानीमो वयमञ्जसा ।
अर्वाचीनाः पुराभूतं सर्वकारणकारणम् ॥ ७५ ॥
चतुर्विधाया[2] वाचस्त्वां कारणं परमं विदुः ।
सा कथं स्तूयसेऽस्माभिर्वैखरीवर्णगुम्फनैः ॥ ७६ ॥
त्वत्सृष्टमोहजलधौ विनिमग्नचेताः
शेते परः पुरुष एष जगन्त्यमूनि ।
पश्यन्निव प्रकटवन्न तथासि मात-
र्लीलां दधासि हृदि तस्य रहस्यभूताम् ॥ ७७ ॥

---

1 कालाविष्युत, इतिपा० । 2 परापश्यन्तीमध्यमावैखरीरूपायाः ।

ज्ञानात्मनि स्फुरदमन्दरहस्यलीला
नो गोचरा भवति निश्चितमेतदम्ब ।
योगेन केनचिदहो हि तथापि साक्षा-
त्कर्तुं त्वमेव निपुणासि तदीयचित्ते ॥ ७८ ॥
त्वमेका सर्वशक्तीनामादिभूता सनातनी ।
आश्वस्मान् शून्यसंविघ्नान्कर्तव्ये मूढचेतसः ॥ ७९ ॥
पुरैव त्वां समाश्रित्य प्रवृत्ताः स्मो वयं यतः ।
पालनीयास्तमोवार्द्धिप्रतारणतरी भव ॥ ८० ॥
एवं स्तुवत्सु देवेषु प्रसादपरमा हि सा ।
चिद्वृत्तिं वर्तयामास निद्रायां परमात्मनः ॥ ८१ ॥
तिमिरं पाटयन्ती[2] सा मध्ये मार्गमिवाकरोत् ।
तमिस्रायां यथा दीपच्छटा सेतुरिवाम्बुधौ ॥ ८२ ॥
मध्ये प्रकाशमालक्ष्य ततस्ते त्रिदशेश्वराः ।
प्रत्याप्तचक्षुषो जग्मुस्तेन मार्गेण मध्यतः ॥ ८३ ॥
स्थानं स्थानमतिक्रम्य शून्यान्तममरेश्वराः ।
ध्यानयोगेन मनसा सौमङ्गल्यं पदं ययुः ॥ ८४ ॥

इति श्रीमत्पुराणसंहितायां सिद्धान्तसारे देवानां सुमङ्गला-
पदप्राप्तिर्नाम त्रयोदशोऽध्यायः ॥ १३ ॥
आदितः श्लोकानां समष्ट्यङ्काः ॥ ८८२ ॥

---

## चतुर्दशोऽध्यायः ॥ १४ ॥

॥ वेदा ऊचुः ॥

अतः परं शृणु मुने सावधानेन चेतसा ।
यथा गोलोकलीलायास्तेषामनुभवोऽभवत् ॥ १ ॥
सवासनानि चेतांसि देवतानामहो मुने ।

---

१ सर्वभूतानां इ० पाठः । २ चिद्वृत्तिः ।

ध्येयशक्तिं प्राविविशुः परात्महृदयस्थिताम् ॥ २ ॥
शक्तेरंशद्वयं चास्ति चिदानन्दाविती रितम् ।
तयैवानुगृहीतानां चेतांसि चिदमाविशन् ॥ ३ ॥
चैतन्यस्यापरिच्छेदादक्षरान्तः समाविशन् ।
यत्र त्रैकालिकी लीला गोलोकस्थेति विश्रुता ॥ ४ ॥
ततस्तेषामीश्वराणां लीला दृग्गोचराभवत् ।
कियद्दूरं गते तत्र विरजानाम या नदी ॥ ५ ॥
अतिगम्भीरनिनदा गम्भीरावर्तभीषणा ।
फेनिलोत्तुङ्गकल्लोलैर्वीचालैरुपशोभिता ॥ ६ ॥
स्वर्णमाणिक्यसिकतापुञ्जपूरितसैकता ।
पीयूषस्पर्धिसलिला रत्नसोपानभास्वरा ॥ ७ ॥
गारुडैरिन्द्रनीलैश्च वैदूर्यैर्विद्रुमैस्तथा ।
मुक्तामाणिक्यरुचकपुष्परागांजनैस्तथा ॥ ८ ॥
निबद्धतटविस्फूर्जद्रत्नमण्डपमण्डिता ।
हंसकारण्डवकुलकोलाहलमनोहरा ॥ ९ ॥
अनेकोद्यानमालाभिस्तटगाभिरलंकृता ।
मणिमण्डपसंस्थानां किन्नराणां प्रगायताम् ॥ १० ॥
मनोविमोहनकरैः सङ्गीतपरमामृतैः ।
नृत्यन्तीनां किन्नरीणां रणत्कञ्चननूपुरैः ॥ ११ ॥
कङ्कणानां क्वणत्कारैर्वीणामुरजमिश्रितैः ।
मनःश्रुतिचमत्कारकैरानन्दवर्षिणी ॥ १२ ॥
रत्नस्तम्भसहस्रैश्च तीरगैः सुमनोहरैः ।
स्वमूर्धवेदिसञ्चारिपक्षिरावसमाकुलैः ॥ १३ ॥
स्वर्णदण्डप्रविन्यस्तपताकाभिर्महाध्वजैः ।
वायुनोदीर्यमाणाभिर्विचित्राभिर्विराजिता ॥ १४ ॥

---

१ सुमङ्गलायां चिच्छक्तिरानन्दशक्तिरिति द्वावंशौ स्तः । तत्र ध्येयशक्तिपदेन चिच्छक्तिर्ज्ञेया । तत्र गोलोकलीलानिदर्शनं भवति ।

स्वशीकरस्तेयकरैरुद्यानान्दोलनोद्धतैः ।
स्वर्णपङ्कजकिञ्जल्कहारिभिस्त्रिविधानिलैः ॥ १५ ॥
तोषयन्ती मनः स्वानां तेषां दृग्गोचराभवत् ।
दृष्ट्वा तां विबुधाः सर्वे परमं विस्मयं ययुः ॥ १६ ॥
अहो महाश्चर्यकरी दृष्टेयं विरजा नदी ।
यज्जलं स्पृशतां देहा भवन्ति जलवज्जले ॥ १७ ॥
नवरत्नविचित्रेण सेतुनानेन केवलम् ।
गमिष्यामः परं तीरं न स्पृष्टव्या कदाचन ॥ १८ ॥
इत्युक्त्वान्योन्यममराः सेतुमार्गेण भूयसा ।
विरजापारमगमन् शतयोजनतः परम् ॥ १९ ॥
तटस्थरत्नसिकताचाकचक्येन दिङ्मुखम् ।
प्रकाशयदिवात्यन्तं पुलिनं वीक्ष्य विस्मिताः ॥ २० ॥
तटसीम्नि समुद्भासिरत्नराजिविचित्रितैः ।
स्वर्णस्तंभशतैर्युक्तं सुवर्णकलशोज्ज्वलम् ॥ २१ ॥
चतुर्द्वारं महोद्यानमध्यगं रत्नमण्डपम् ।
विरजावायुसुखदं कोटिचन्द्रार्कभास्वरम् ॥ २२ ॥
वीक्ष्य विश्राममनसः प्रविष्टास्ते तदन्तरम् ।
वर्णयन्तो महाशोभां चित्तचमत्कृतिकारिणीम् ॥ २३ ॥
प्रशंसत्सु च सर्वेषु ब्रह्मादिषु यथातथम् ।
विरजाप्रभावमालक्ष्य विष्णुराह सदाशिवम् ॥ २४ ॥

॥ विष्णुरुवाच ॥

भगवञ्जगदाधार जगत्प्राण दयानिधे ।
विरजाप्रभावमाश्रुत्य विस्मिताः स्मो वयं विभो ॥ २५ ॥
स्पृशतां सलिलं यस्या देहो जलमयो भवेत् ।
कस्मादयं प्रभावोऽस्याः किंरूपेयं महानदी ॥ २६ ॥

१ विरजायाः परस्मिंस्तटे रत्नमण्डपोऽस्ति तत्र विश्रम्य सोपानमार्गेण शतशृङ्गं गमिष्यन्ति पञ्च देवाः ।

एतद्वर्णय नश्चित्रं शृण्वतां संशयापनुत् ।
को वा कथयितुं शक्तस्त्वामृते परमेश्वर ॥ २७ ॥

॥ सदाशिव उवाच ॥

शृणुध्वं त्रिदशा यूयं श्रुतपूर्वं मया हि यत् ।
विरजायाः समुत्पत्तिं प्रभावं च वदामि वः ॥ २८ ॥
गोलोकवासी श्रीकृष्णो राधाया मणिमन्दिरे ।
केलिसाधनसम्पन्ने दिव्यागरुसुधूपिते ॥ २९ ॥
अनेकपुष्पप्रकरोद्गारमोहितषट्पदे ।
मुक्तावितानविगलज्ज्योत्स्नाजालविचित्रिते ॥ ३० ॥
पद्मरागस्थलीरम्ये रत्नस्तम्भमनोहरे ।
चक्रे क्रीडां बहुविधां विलासी रतिलम्पटः ॥ ३१ ॥
नानाबन्धविशेषैश्च अष्टधालिङ्गनैरपि ।
अधरामृतपानैश्च ससीत्कारार्धवीक्षितैः ॥ ३२ ॥
एवं रतिविशेषेण रममाणे प्रिये प्रिया ।
प्रत्युद्बुद्धरसावेशाद् विवशा साभवत्तदा ॥ ३३ ॥
नात्मानं बुबुधे राधा प्रियं चापि पुरः स्थितम् ।
न सखीनां गणमपि रसानन्दाब्धिमज्जिता ॥ ३४ ॥
तथाविधां च तां वीक्ष्य विरजासक्तमानसः ।
तमेवावसरं लब्ध्वा ततश्चान्तर्हितोऽभवत् ॥ ३५ ॥
सम्प्राप्तस्तत्क्षणेनैव विरजाभवनं महत् ।
स्फाटिकस्तम्भसाहस्रं पद्मरागकपाटयुक् ॥ ३६ ॥
वैदूर्यदेहलीरम्यं रत्नसोपानमण्डितम् ।
दिव्यमुक्तामणिद्योतत्तोरणद्योतिताङ्गणम्[1] ॥ ३७ ॥
दैर्घ्येण च परिणाहे लक्षयोजनसम्मितम् ।
उन्मदत्पक्षिनिनदैर्झङ्कारमुखरालिभिः ॥ ३८ ॥
सेव्यमानं महोद्यानैः पारतो वीतमायतैः ।

१ तोरणोद्योतितं इ० पा० ।

गोपीनां तत्सखीनां च कोटिभिस्तिसृभिर्युतम् ॥ ३९ ॥
दिव्यानन्दसुखस्पर्शं विरजामन्दिरं गतः ।
तमागतं परिज्ञाय प्रहर्षोत्कलिताशयाः ॥ ४० ॥
धावन्त्योऽतिवेगेन प्रफुल्लवदनेक्षणाः ।
सख्यो निवेदयामासुर्विरजायै प्रियं मुदा ॥ ४१ ॥
अहो सखि समायाति प्रियस्ते भवनं तव
बहिरागत्य विरजे सत्कर्तव्यः प्रियोऽधुना ॥ ४२ ॥
सखीवाक्यं समाकर्ण्य विरजा हर्षसंयुता ।
शय्यां त्यक्त्वोत्थिता तूर्णं विह्वलीकृतमानसा ॥ ४३ ॥
क्वास्ति क्वास्ति प्रियः कृष्णः सत्यं वानृतमुच्यते ।
एवं लपन्ती विरजा ददर्श प्रियमन्तिके ॥ ४४ ॥
अन्योन्यदर्शनाह्लादचमत्कृतिमुपागतौ ।
चेरतुः पुष्पितोद्यानं क्रीडालालसमानसौ ॥ ४५ ॥
अनेकविधसङ्केतस्थलेषु प्रेयसीप्रियौ ।
रममाणौ चिरं प्रेमरसावेशविघूर्णितौ ॥ ४६ ॥
ततोऽन्तः पुरमागत्य पुष्पैः कोमलपल्लवैः ॥
गन्धद्रव्यैर्महोदारैर्निर्मितं तल्पमुत्तमम् ॥ ४७ ॥
आसेदतुः सखीवृन्दसहितौ रसलम्पटौ ।
तत्रोपविश्य विरजां प्रियां गोपीमुवाच ह ॥ ४८ ॥
अयि प्रियेऽहं ते प्रेम्णा पाशेनेव विकर्षितः ।
राधां त्यक्त्वा समायातस्त्वदीयरतिलालसः ॥ ४९ ॥
किं वदिष्यति नो जाने राधा वा किं करिष्यति ।
क्रीडारसचमत्कारविवशा विहृतान्तरे ॥ ५० ॥
उद्रिक्तप्रेमवशतस्तद्वीर्नं गणिता मया ।
रसमध्ये परित्यामात्प्रायः कुप्यन्ति योषितः ॥ ५१ ॥
एतस्मिन्नन्तरे राधा तत्रोद्बुद्धा प्रपश्यति ।
न ददर्श प्रियं कान्तं सखीवृन्दं पप्रच्छ सा ॥ ५२ ॥

क्व गतो मे प्रियः सख्यस्त्यक्त्वा मां विरहातुरां।
विदितं भवतीनां चेत्प्रब्रुवन्तु यथातथम् ॥ ५३ ॥

॥ सख्य ऊचुः ॥

भद्रे न विद्मस्ते कान्तः क्व गतस्त्वां विहाय च।
इतो विनिर्गतः क्वापि दृष्ट्वा त्वां विवशां भृशम् ॥ ५४ ॥
इति श्रुत्वा सखीवाक्यं राधा भृशममर्षिता।
परिचारिका बहुविधा आहूयोवाच ताः प्रति ॥ ५५ ॥
अहो शृणुत भो सख्यो यूयं मे प्राणतोधिकाः।
गवेषयन्तु तं धूर्त्तमतृप्तं रतिरागिणम् ॥ ५६ ॥
नानाविधेषु सङ्केतेषूद्यानेष्वाश्रमेषु च।
गोपीनां च गृहेष्वेव कुञ्जेषु च विमृग्यताम् ॥ ५७ ॥
यत्र कुत्रापि वा धूर्त्तं निर्लज्जं रतिलम्पटम्।
निश्चित्याभ्येत्य मां तूर्णं सूचयन्तु सखीगणाः ॥ ५८ ॥
अहं तत्रागमिष्यामि तयोः शिक्षां विधित्सती।
तस्माद्यूयं व्रजन्त्वाशु मृगयन्तु तयोः स्थितिम् ॥ ५९ ॥
इत्युक्तास्ततः सख्यो राधायाः कमलेक्षणाः।
अन्वेषयन्त्यः सततं विचेरुस्तत्र तत्र ह ॥ ६० ॥
कुञ्जानालोकयन्ति स्म काञ्चनोद्यानभूमिकाः।
आश्रमानपरा जग्मुः सङ्केतांश्च तथेतराः ॥ ६१ ॥
सखीनां मन्दिरेष्वन्याः प्रियस्थितिविलोकने।
उद्योगपरमाः सर्वाः प्रचरन्ति समुत्सुकाः ॥ ६२ ॥
अन्वेषितोपि बहुधा यत्नेनापि गरीयसा।
न ताभिर्ददृशे क्वापि योगेशैरिव युक्तिभिः ॥ ६३ ॥
ता निराशा निववृतुरलब्ध्वा भगवद्गतिम्।
अपक्वयोगिनश्चित्तवृत्तयो वै यथा मनः ॥ ६४ ॥
आगत्य राधिकां प्रोचुर्धूर्त्तः सर्वत्र लोकितः।
गहनेष्वपि कुञ्जेषु नदीगिरिगुहास्वपि ॥ ६५ ॥

सङ्केतेष्वपि सर्वेषु गोपिकानां गृहेष्वपि ।
न जानीमो वयं क्वासौ कया वा रमते प्रियः ॥ ६६ ॥
एवं तासु गदन्तीषु राधानिकटसंस्थिता ।
उत्तस्थौ चतुरा नाम्नी सखी काचन विश्रुता ॥ ६७ ॥

॥ चतुरोवाच ॥

किमर्थं खिद्यसे राधे त्यज चिन्तामिमां मुधा ।
अन्वेष्यावेदयिष्यामि कान्तमन्यासु सङ्गतम् ॥ ६८ ॥
चातुर्यं पश्य मे राधे चतुरायाश्चिरं भृतम् ।
तथा करिष्ये मन्नाम यथार्थं स्याद्यथा तथा ॥ ६९ ॥
कलकण्ठी भृङ्गनादा सारिकेति सखीत्रयम् ।
सह नीत्वा ययौ राधाकार्यसाधनतत्परा ॥ ७० ॥
स्वयं चैव शुकी भू(त्वा)ता कलकण्ठी पिकाङ्गना ।
भृङ्गनादाभवद् भृङ्गी सारिका सारिकाभवत् ॥ ७१ ॥
एताश्चतस्रस्ताः सख्यो राधाकार्यार्थतत्पराः ।
प्रवेशानर्हनिलयेष्वपि चेरुर्यथेच्छया ॥ ७२ ॥
इतस्ततस्ताः पक्षिण्यो विचरन्ति यथासुखम् ।
नानाविहारसङ्केतकुञ्जमन्दिरभूमिषु ॥ ७३ ॥
गोपानां गोपभार्याणां निलयेषु पृथक् पृथक् ।
सत्कथां प्रवदन्तीनां शृण्वन्ति स्म प्रियाश्रयाम् ॥ ७४ ॥
अदृष्टाश्रुतसङ्केताः भ्रमन्त्योपि शकुन्तिकाः ।
विरजामन्दिरे द्वाःस्थं श्रीदामानमवस्थितम् ॥ ७५ ॥
दृष्ट्वा संशयमापन्नाः कृष्णभृत्यस्य दर्शनात् ।
विचारयन्ति चान्योन्यं श्रीदामा कृष्णकिङ्करः ॥ ७६ ॥
न तिष्ठति विना कृष्णं कदाचिदपि कुत्रचित् ।
नानेन च विना कृष्णः प्रियेण सुहृदात्मना ॥ ७७ ॥

---

१ चतुरेति चिरं भृतम् । तथा करिष्ये यन्नाम यथार्थं स्याद्यथाचिरात् ॥ इत्यपि पाठभेदः । २ सुहृदापि वा । इत्यपि पाठभेदः ।

अनयोः साहचर्य्यस्य व्यभिचारो न हि क्वचित् ।
तस्मादत्रैव राधेशो भविष्यति न संशयः ॥ ७८ ॥
अनुमानेन विषयीकृतायमिव तार्किकैः ॥
वयं प्रत्यक्ष(प्रकृत्य)विरहाग्न प्रसन्ना हि रागिवत् ॥७९॥
कथं प्रत्यक्ष(प्रकृत्य)विषयी स्यादिति कृत्यकोविदाः ।
उद्यानमवतेरुस्ताः परितः केलिमन्दिरम् ॥ ८० ॥
तत्तज्जातिरुतैर्हृद्यैरुद्यानविटपिस्थिताः ।
राधाकृष्णयशः प्रीता जगुः क्रीडारसांकितम् ॥ ८१ ॥
कलकण्ठी जगौ राधां प्रधान्येन हरेरपि ।
अधरीकृत्य तत्त्वान्याः कृष्णं प्राधान्यतो जगुः ॥ ८२ ॥
उभयोः पक्षपातिभ्यो अन्योन्यविजिगीषया ।
यद्गीतवन्तस्तच्छ्रुत्वा तरवो वीरुधो लताः ॥ ८३ ॥
खगा मृगा वनस्थाश्च विरजायाः सखीगणाः ।
गीतामृतानन्दभुजश्चित्रन्यस्ता इवाभवन् ॥ ८४ ॥
गतिस्तम्भो गतिमतां वाक्स्तम्भो वदतामपि ।
पश्यतां निर्निमेषा दृक् शृण्वन्तो बधिरा इव ॥ ८५ ॥
तद्गीतामृतमाधुर्यनिमग्नकरणाशयाः ।
विरजा तत्प्रियश्चापि पीत्वा गीतामृतं शुभम् ॥ ८६ ॥
कौतुकाविष्टमनसौ विहारसदनाद्बहिः ।
गृहीतहस्तावन्योन्यं निष्क्रम्योद्यानमीयतुः ॥ ८७ ॥
द्वे द्वे शकुन्तिके वृक्षशाखामारुह्य संस्थिते ।
विवदंत्यो गीतरसैर्मनःश्रुतिहरैर्मुहुः ॥ ८८ ॥
दृष्ट्वा तौ विरजाकृष्णौ सह स्त्रीभिः सहस्रशः ।
मनश्चमत्कृतिजुषावभूतां मुनिसत्तम ॥ ८९ ॥
गृहीतुमिच्छतीं साक्षाद्विरजामभिवीक्ष्य ताः ।
कल्पशाखां परित्यज्य भुवि चेरुर्गतीक्षणैः ॥ ९० ॥

१ अनेन इत्यपि पाठः ।

उत्पत्य जगृहे साक्षाद्विरजा सहसा तु ताः ।
जहास तत्सखीवर्गः सम्यक्कृतमिति ब्रुवन् ॥ ९१ ॥
हस्ततालीं ददवती सखीवर्गेण कौतुकात् ।
कटाक्षेणेक्षितवती कृष्णाननसरोरुहम् ॥ ९२ ॥
शकुन्तिकाः करे धृत्वा लालयन्ती शुचिस्मिता ।
स्वकेलिगृहमानिन्ये पाठयंती पुनः पुनः ॥ ९३ ॥
आपादयन्त्यो विश्वासं विरजाप्रेमलालिताः ।
केलिगृहान्तरे चेरू रतिमुत्पादयन्ति च ॥ ९४ ॥
लब्धान्तरा शुकीवेषा चतुरानाम सा सखी ।
रत्यन्तरायरूपत्वान्मुक्ताहारमपाकृतम् ॥ ९५ ॥
वज्राभित्युप्तशङ्कुस्थं चञ्च्वादाय समाहरत् ।
सखीभिस्तिसृभिः सार्धं राधान्तिकमुपागमत्[1] ॥
राधायै दर्शयामास मुक्ताहारं प्रियस्य सा ॥ ९६ ॥
॥ चतुरोवाच ॥
राधे प्रियतमस्तेऽद्य क्रीडते विरजागृहे ।
दुःप्रवेशे स्वर्णशालपरिखोपवनावृते ॥ ९७ ॥
विलोकितोपि बहुधा कुञ्जे कुञ्जे गृहे गृहे ।
संकेतेष्वपि सर्वेषु लब्धोस्माभिर्न कुत्रचित् ॥ ९८ ॥
गवेषयन्तीभिरस्माभिर्वयस्याभिस्तवेश्वरि ।
विरजाया गृहद्वारि श्रीदामानमत्रस्थितम् ॥ ९९ ॥
विलोक्यैवानुमानेन अत्रास्त इति निश्चितः ।
गृहोपवनमाविश्य[2] पञ्चमग्राममोहितौ ॥ १०० ॥
विरजात्वत्प्रियौ कृत्वा प्रविष्टास्तद्गृहान्तरम् ।
चिरं विश्वसितौ कृत्वा स्वच्छन्दानन्दकेलिभिः ॥ १०१ ॥
तत्रापि निश्चयार्थं हि हारं हृत्वा समागता ।
अतः परं च ते कार्यं यत्कर्तव्यं तदाचर ॥ १०२ ॥

इति श्रीमत्पुराणसंहितायां सिद्धान्तसारे विरजागृहे श्रीकृष्णागमराधासखीदर्शनो नाम चतुर्दशोऽध्यायः ॥ १४ ॥
आदितः श्लोकानां समष्ट्यङ्काः ॥ ९८२ ॥

---

१ उपागता इ० पा०　　　२ आश्रित्य इ० पा० ।

# पञ्चदशाध्यायः ॥ १५ ॥

॥ व्यास उवाच ॥

अहो महाश्चर्यमिदं कथितं वः कृपालुभिः ॥
कथानकं श्रुतं सद्यो मनःश्रुतिसुखावहम् ॥ १ ॥
प्रियस्य हारमालक्ष्य विरजाकेलिसूचकम् ।
ततः किमाचरद्राधा रोषावेशविघूर्णिता ॥ २ ॥

॥ वेदा ऊचुः ॥

चतुरानीतमालक्ष्य हारं कृष्णस्य राधिका ॥
भुजगीभीषणे धत्त भ्रुवौ नेत्रारुणच्छवी ॥ ३ ॥
भर्त्सयन्तीव वाग्जालैर्निर्दहन्तीव चक्षुषा ।
शोषयन्तीव निश्वासमारुतेन जवीयसा ॥ ४ ॥
कोटीन्द्वर्कमहस्तोमप्रकाशितदिगन्तरम् ।
कल्पान्तजलधेर्नादमनुकुर्वन्तमद्भुतम् ॥ ५ ॥
दिव्यरत्नस्फुरच्चक्रद्युतिरञ्जितभूमिकम् ।
वैदूर्यविलसद्धीशं प्रवालमणिकूवरम् ॥ ६ ॥
मुक्ताविचित्रवालोत्थयुगबद्धतुरंगमम् ।
घण्टानिनादबहुलं सुवर्णकलशोज्वलम् ॥ ७ ॥
नवरत्नपरिस्फूर्जद्वितानेन विभूषितम् ।
उद्भासितं पताकाभिरसंख्याभिः समन्ततः ॥ ८ ॥
नीलनीडं रथं दिव्यं सखीलक्षसमावृता ।
आरुह्य त्वरिता कोपादाजगाम तमाश्रमम् ॥ ९ ॥
अवरुह्य रथाद्राधा मणिवेत्रधरा करे ॥
प्रविवेश महाद्वारं तावद्दौवारिकेण सा ॥ १० ॥
निरुद्धा वेत्रमाधाय मध्ये कोपारुणेक्षणा ।
निर्भर्त्सयन्ती तं प्राह श्रीदामन् दुष्ट दुर्मते ॥ ११ ॥
जाने त्वां धृष्टसचिवं मध्यस्थं रतिकर्मणि ॥
नीचकर्मरतं नित्यं शश्वद्द्वारैकरक्षकम् ॥ १२ ॥

मद्भयाल्लीय रहसि लंपटः क्रीडते शठः ।
त्वं द्वाररक्षकस्तस्य भूत्वा नो लज्जसे खल ॥ १३ ॥
कर्मणा ज्ञायते लोकः साधुवेशधरोऽपि सन् ।
ज्ञातोसि त्वं मया नूनं नटवत्पाण्डितायसे ॥ १४ ॥
निर्लज्जस्य च धृष्टस्य स्त्रैणस्याविजितात्मनः ।
गुणाः सौन्दर्यसहिता न च भूषणतां गताः ॥ १५ ॥
गौरवं ज्ञातमेतस्य त्वं यस्य दयितः सुहृत् ।
स्वस्वभावानुसारेण संगभाजो भवन्ति हि ॥ १६ ॥
अथवा तेन मे किं स्याद्यादृशस्तादृशो भव ।
गच्छ दूरं मुञ्च मार्गं नो चेत्पश्याशु मे कृतिम् ॥ १७ ॥
श्रीदामा वचनं श्रुत्वा राधिकायाः सुदुःसहम् ।
अत्यक्तगाम्भीर्यगुणः शिक्षयन्निव चाब्रवीत् ॥ १८ ॥

॥ श्रीदामोवाच ॥

अयि कल्याणि किमिदं कटुवाक्यं प्रभाषसे ।
न हि कल्पलता सूते फलं वैचेन्द्रवारणम् ॥ १९ ॥
कथमर्कफलं सूते निन्द्यं रम्भा यशस्विनी ।
मृद्वीकामृदुमाधुर्यगर्वसर्वस्वहारि यत् ।
वाक्यं त्वदीयमधुना कथं हालाहलोपमम् ॥ २० ॥
न क्रोधवशगाः साध्वि साधवः क्वापि विश्रुताः ।
यदाविष्टा जना लोके विपरीतार्थदर्शिनः ॥ २१ ॥
विद्याविवेकविनयधीर्ह्रीः सत्यंक्षमादया ।
अन्येपि हर्षधैर्याद्या नश्यन्त्यग्नौ तृणादिवत् ॥ २२ ॥
न गच्छेत्तद्वशं विद्वान्सारासारविचारभृत् ।
आत्मनः श्रेय अन्विच्छन् प्रमादात्स्खलितो मृतः ॥२३॥
तस्मात्संस्तभ्य चात्मानं शृणु मे वचनं सति ।
मय्यपराधं मा धत्स्व स्वामितन्त्रा हि सेवकाः ॥ २४ ॥
विनाशयन्ति ते पापाः स्वामिनोर्थं नियोजिताः ।

न क्वापि निष्कृतिस्तेषां भर्तुराज्ञां विलुम्पताम् ॥ २५ ॥
प्रभुणा यत्समादिष्टं शुभं वा यदि वाशुभम् ।
अविचारितमेवैतत्कर्तव्यं भक्तितत्परैः ॥ २६ ॥
तस्मान्निरागसि मयि न कोपं कर्तुमर्हसि ।
तथा कृष्णे प्रियतमे प्राणादप्यधिके सति ॥ २७ ॥
यं च नोपनिषद्वाचोप्यधिगच्छन्ति तत्वतः ।
यस्य रूपं न पश्यन्ति योगनैपुण्यशालिनः ॥ २८ ॥
यस्य भासा सर्वमिदं काशते स्थिरचञ्चलम् ।
अनेककोटिब्रह्माण्डाधीशध्येयपदाम्बुजम् ॥ २९ ॥
ब्रह्मविष्णुमहेशाद्या अपि जीवाः स्थिरावधि ।
यदानन्दस्य कलयाविद्धानन्दपरिप्लुताः ॥ ३० ॥
यत्प्रसादेन भवती कोटिब्रह्माण्डदेवता ।
ब्रह्माण्डेषु ज्वलत्यग्निर्वाति वायुर्यदाज्ञया ॥ ३१ ॥
तपत्यर्को धरां धत्ते शेषनागोऽपि यद्भयात् ।
कालः कलयते विश्वं आकाशमवकाशदम् ॥ ३२ ॥
फलंत्योषधयः काले नोत्सर्पत्युदधिर्यतः ।
यदाज्ञावशमापन्ना ब्रह्माद्या अपि देवताः ॥
वर्तन्ते तेऽधिकारेषु स्वेषु स्वेषु यथाक्रमम् ॥ ३३ ॥
तमेव कृष्णमात्मानं महान्तं महतामपि ।
अनिन्द्यं निन्दसे वाचा किमन्यात्पमतः परम् ॥ ३४ ॥
कृष्णनामोच्चारमात्रात्पातकानि महान्त्यपि ।
यथा ज्वलन्ति तन्निन्दाः पुनराजीवयन्ति च ॥ ३५ ॥
तस्मान्नाहं कृष्णनिन्दापरं श्रोतुं वचः क्षमः ।
मा ब्रूह्यघं पुनर्भद्रे स्वगृहं गच्छ माचिरम् ॥ ३६ ॥
श्रीदामावचनं श्रुत्वा राधिका तु यथाविधम् ।
चुकोपाघूर्णनयना संदष्टदशनच्छदा ॥ ३७ ॥
अहो मूढ किमित्येवं भाषसे कृष्णगौरवम् ।

मामवज्ञाय दुर्बुद्धे कृष्णपक्षैकसंश्रयः ॥ ३८ ॥
तत्प्रसादेन मां ब्रूषे ब्रह्माण्डस्याधिदेवताम् ।
दुःखितोसि च तान्निन्दावचनश्रवणेन च ॥ ३९ ॥
रुध्वा द्वारं वेत्रपाणिः स्थितोसि यदि दुर्मते ।
विश त्वं मर्त्यलोके हि दण्ड्योसि ह्यपराधकृत् ॥ ४० ॥
वज्रनिर्घातवचनं श्रुत्वा हालाहलोपमम् ।
मूर्च्छन्निव पपातोर्व्यां हाहाकारो महानभूत् ॥ ४१ ॥
तत्र कोलाहलं श्रुत्वा कृष्णः कमललोचनः ।
राधिकागमनत्रस्तो विहाय विरजां प्रियाम् ॥ ४२ ॥
अन्तर्हितस्तदा तस्थौ स्वापराधं विचारयन् ।
राधिकामागतां ज्ञात्वा मानिनींताममर्षिताम् ॥ ४३ ॥
कृष्णं चान्तर्हितं दृष्ट्वा विरजा भयविह्वला ।
निम्नगारूपमास्थाय गोलोकं पर्यवेष्टयत् ॥ ४४ ॥
अत्रान्तरे समायाता राधामर्षपरिप्लुता ।
न ददर्श हरिं तत्र स्वभीत्यन्तर्हितं स्थितम् ॥ ४५ ॥
विरजां च नदीभूतां प्राह देवी मनस्विनी ।
अहो पश्यत वै सख्यं धूर्तस्याकरुणस्य च ॥ ४६ ॥
कृतकार्यो गतः क्वापि प्रियागतिमुपेक्ष्य च ।
बहुस्त्रीरसिकं धूर्तं निर्लज्जं लम्पटं शठम् ॥ ४७ ॥
मानिनं पंडितंमन्यं श्रिताः सीदन्ति योषितः ।
तस्मिन् गते चाकरुणे विरजा भयाकुला ॥ ४८ ॥
साक्षात्स्थातुमशक्ता च नदीरूपा ततोऽभवत् ।
तस्याः को वापराधोऽस्ति स्थितायाः स्वनिकेतने ॥४९॥
अपराधोऽस्ति धूर्त्तस्य परसद्मसमीयुषः ।
स्वयमागत्य याचन्तं कान्तं का नाभिमन्यते ॥ ५० ॥
न शापयोग्या विरजा वरयोग्यास्ति सांप्रतम् ।
यज्जलस्पर्शमात्रेण ये केऽपि जडचेतनाः ॥ ५१ ॥

सद्यः सायुज्यमायान्तु यद्रूपे कृष्णकाम्पिते ।
शृण्वन्तीषु सखीष्वेवं विरजायै वरोत्तमम् ॥ ५२ ॥
उक्ता स्वयं प्रत्यगमद्देवी वृन्दावनेश्वरी ।
कृष्णस्तु विरहाक्रान्तस्तस्थौ तद्विरजातटे ॥ ५३ ॥
विललाप भृशं तप्तः शोकमोहविमूर्च्छितः ।
अयि प्रियेऽद्य ते रूपं सुवर्णकतिकोज्ज्वलम् ॥ ५४ ॥
अनङ्गरङ्गभरितं चन्द्रबिंबनिभाननम् ।
सुचारुकबरीभारमुक्तारत्नविभूषितम् ॥ ५५ ॥
वक्षोजाद्रिपतन्मुक्तामालागङ्गाप्रवाहयुक् ।
कर्णस्थेन्दीवरद्युत्या सकलं काननेन्दुभृत् ॥ ५६ ॥
लावण्यसागरतरत्कण्ठकम्बुविराजितम् ।
नाभीसरस्तीरसीम्नि कुचचक्रयुगाङ्कितम् ॥ ५७ ॥
कर्णकूपोपाविचरन्नेत्रखञ्जननर्तनम् ।
मच्छोकतिमिरशोषस्मितदीधितिशोभितम् ॥ ५८ ॥
महानन्दमहांभोधिसमुद्वेलेन्दुमण्डलम् ।
पदाब्जनूपुरझणत्कारोन्निद्रीकृतस्मरम् ॥ ५९ ॥
एवं विधं प्रिये रूपमदृष्टाहंकुतः सुखी ।
कथं जीवामि जीवामि यदिवा तेन किं भवेत् ॥ ६० ॥
सापराधमिति ज्ञात्वा किमु मां त्वमुपेक्षसे ।
पलायितोस्म्यहं भद्रे पुर एव प्रियाभयात् ॥ ६१ ॥
हा मया नाशिता सत्यं रसरीतिः पुरातनी ।
जीवितं मरणं वापि युगपत्सुहृदां शुभम् ॥ ६२ ॥
रसोऽद्य विरसो जातः क्रीडा व्रीडाकरी मम ।
हिमतं मृतं सुखं दुःखं त्वद्वियोगेन मे प्रिये ॥ ६३ ॥
अनादृत्यापराधं मे स्वप्रेमैव पुरस्कुरु ।
दर्शयास्यसुधाकुम्भं शोकान्धतिमिरापहम् ॥ ६४ ॥
अहं रसस्त्वदाधारो निराधारतया कथम् ।

स्थातुमर्हः स्वरूपाद्धि प्रच्युतः स्यां त्वया विना ॥६५॥
गुणाधारं च यद्द्रव्यं तस्यैवापगमे सति ।
गुणः पृथङ्न वर्तेत तेनैव सह नश्यति ॥ ६६ ॥
विमृश्य मत्स्वरूपस्य भवित्रीं भवती स्थितिम् ।
प्रकाशय निजं रूपं येन स्वास्थ्यं भवेन्मम ॥ ६७ ॥
मत्प्रहर्षमहाम्भोधेः कौमुदीकलितं मुखम्
चकोराविव मन्नेत्रे निपीयाह्लादितौ कदा ॥ ६८ ॥
त्वन्नेत्राम्भोदपटलीकटाक्षामृतवर्षणैः ।
भावबीजं मनःक्षेत्रमभिषिञ्चतु नीरसम् ॥ ६९ ॥
श्रुतियुग्मसरो मह्यमिदानीं शुष्कतां गतम् ।
स्ववाक्सुधाप्रवाहेण पुनः पूरय सुन्दरि ॥ ७० ॥
न भविष्यन्नवा भावि लोकेस्मिन्मे त्वमङ्गलम् ।
आपगान्तर्हिता भीरु वससीति च मे मतिः ॥ ७१ ॥
अतः स्वंरूपमास्थाय नदीमध्याद्बहिर्भव ।
प्रियमाश्वासय निजं त्यज भीतिं हृदि धृताम् ॥ ७२ ॥
इत्येवं प्राणनाथस्य वचनालापमातुरम् ।
असहन्ती समुत्तस्थौ विरजा जलमध्यतः ॥ ७३ ॥
शोकान्धतिमिरव्याप्तहृद्दरीगाढनिद्रितम् ।
बोधयन्त्यागमत्पत्युरानन्दं[1] नूपुरस्वनैः ॥ ७४ ॥
प्रियोत्सङ्गतया रेजे तया वह्निरिवार्चिषा ।
कौमुद्येव यथा चन्द्रो लहरीभिरिवार्णवः ॥ ७५ ॥
विचित्ररत्नकुसुमैर्यथा कल्पमहीरुहः ।
क्रिययेव हि सद्धर्मः तपः शान्त्येव केवलम् ॥ ७६ ॥
सुवर्णाभरणद्युत्या महामारकतो यथा ।
एवं कृष्णोत्सङ्गतया तयात्यन्तमशोभत ॥ ७७ ॥
अनुभूय रसं तत्र परस्परमतन्द्रितौ ।

---

१ बोधयन्त्यागमत्पुरा ह्यानन्दं इ. पा. ।

चुम्बनालिङ्गनाद्यैश्च भावपूरितमानसौ ॥ ७८ ॥
विरजां प्रेरयामास स्वगृहं प्रति सादरम् ।
स्वयं चाप्यगमद्राधाभवनं मणिनिर्मितम् ॥ ७९ ॥
तस्या अनुनयं चक्रे प्रणामाञ्जलिबन्धनैः ।
रोषापनयनं कृत्वा विजहार तया सह ॥ ८० ॥
श्रीदामा राधिकाशापाच्छङ्खचूडो बभूव ह ।
एवं पृष्टं त्वया विष्णो मया ख्यातं यथार्थतः ॥ ८१ ॥
विरजायाः समुत्पत्तिप्रभावादिकमादितः ।
विरजायाः समुत्पत्तिं प्रभावमप्यलौकिकम् ॥ ८२ ॥
ये शृण्वन्ति जनास्तेषां पापपङ्कोऽनुशुष्यति ।
सर्वयज्ञफलं तस्य सर्वतीर्थफलं तथा ॥ ८३ ॥
विरजोत्पत्तिश्रवणाद्भवत्येव न संशयः ।
त एव विरजासीम्नि तटमण्डपसंस्थिताः ॥
मनआह्लादजननीं कथां चक्रुः महर्षिताः ॥ ८४ ॥

॥ ब्रह्मोवाच ॥

अहो वयं धन्यतरा स्म जाता गुणत्रयोपाधिभृतोऽपि नित्यम् ।
सुदुस्तरापारमिमं प्रपञ्चमहार्णवं तीर्य परं प्रयाताः ॥ ८५ ॥

॥ विष्णुरुवाच ॥

न योगमार्गैर्न च सत्क्रियाभिर्न वेदसिद्धान्तविचारबोधैः ।
न पुण्यतीर्थाभिगमैरुपायैस्त्यागेन वैराग्ययुतेन चापि ॥ ८६ ॥
तपोभिरुग्रैरपि शान्तियुक्तैरवाप्यते यन्न कदापि कैश्चित् ।
तदेव साक्षात्पदमद्य लब्धा वयं विपाकः सुकृतस्य कस्य ॥८७॥

॥ रुद्र उवाच ॥

न साधनैः क्वापि निरामयं शिवं साक्षाच्चिदानन्दमवाप्यते पदम् ।
सुमङ्गलानुग्रहमेकमेव परं प्रधानं किल तत्र मन्ये ॥ ८८ ॥
सुदुर्घटस्यापि विधेर्विधात्री सा शक्तिरात्मावरणस्य कर्त्री ।
अविद्यया सैव भवेच्च विद्यामयी तदैवावरणं छिनत्ति ॥ ८९ ॥

तस्याः प्रसादं प्रतिपद्य सर्वे वयं प्रयाताः पदवीं परस्य ।
निरीक्षितुं तत्र सुखेन तीर्णाः मार्गार्गलीभूतनिरोधिकाद्यान् ॥९०॥
यन्निद्रयोत्पादितमोहमग्नः परोपि नात्मानमवैति साक्षात् ।
अतो न किञ्चित्परमस्ति दैवमात्मान्धकारार्कसहस्रकल्पम् ॥ ९१ ॥
मनोरथो वः परमात्मदर्शनावधिः पुरा सोपि सुदुर्घटः स्थितः ।
परार्थदीपप्रभया तया तु लीलामयं धाम निदर्शयिष्यते ॥ ९२ ॥
अतो महद्भिः प्रभुभिर्भवद्भिर्जितं जितं दिव्यपदं प्रपन्नैः ।
प्रमाणपन्थानमतीत्य यस्माल्लीलाम्बुधिं साध्ववगाहयिष्यथ[1] ॥९३॥

॥ ईश्वर उवाच ॥

न यत्र देवाश्च न चेन्द्रियाणि न भूततन्मात्रगुणा न सृष्टिः ।
अस्मत्प्रभुर्यत्र न काल आत्मा महान् विकारोपि न यत्र सन्ति ॥९४॥
यदेव गत्वा न निवर्तते पुनर्मनोवचोवृत्तिभिरीयते न यत् ।
न योगिभिर्योगपथाभिगम्यते निवेद्यते यन्निगमैर्निषेधतः ॥ ९५ ॥
बहिर्मुखैर्वेदपथादवच्युतैर्नैरात्म्यवादैकरतैश्च पामरैः ।
यच्छून्यमित्येव विकल्पितं मुहुः स्वकल्पितानेकविमर्षमोहितैः ॥९६॥
ब्रह्माण्डकोट्युद्भवनाशयोरपि न नश्यते तैः सह जायते न यत् ।
विज्ञायमाना इव सूर्यरश्मयो न चाम्भसा रज्जुरिवाहिकल्पिता॥९७॥
अनेजदेजन्मनसो जवीयो देवा यदापुर्न कदाचिदेव ।
प्रमाणदृष्टांतसुयुक्तिवादैरस्पृष्टमज्ञानविजृम्भमाणैः ॥ ९८ ॥
यैर्ज्ञातमज्ञातमनेकतर्कैः श्रुतं तथाप्यश्रुतमेव यच्च ।
कुतर्कपाखण्डवितण्डजल्पानुमानगन्धाद्यनुवेशशून्यम् ॥ ९९ ॥
न कश्चिदाप्नोति परं पदं तत्पूर्णं चिदाकारमखण्डमाद्यम् ।
तदेव नो दृष्टिपथं प्रयास्यत्यतः परं किं रमणीयमस्ति ॥ १०० ॥
ब्रह्माण्डभाण्डोदरमध्यसंस्था वयं कथं तत्पदवीमुपेतुम् ।
शक्तास्तथापि प्रतिपन्नकल्पा दृष्टः प्रभावोऽयमचिन्त्यशक्तेः ॥१०१॥

---

१ प्रमाणपन्थानमतीत्य लीलया यस्मिन् हि लीलाब्धिमहो विगाहथ ॥ इत्यपि पाठः ।

॥ सदाशिव उवाच ॥

अहो किमेतत्कथयाक्षरस्याप्यात्मस्वरूपेण निविष्टमन्तः ।
अनेकलीलारसभावपूर्णमानन्दसन्दोहमयं यदास्ते ॥ १०२ ॥
यशोदया लालितमङ्कदेशे नन्देन वा क्वचिदेव गोपैः ।
क्रोडीकृतं गोपवधूभिरुच्चैः प्रमोदभावाकुलिताभिरन्तः ॥ १०३ ॥
गवां निरोधे कृतहुंकृतिः क्वचिद्गृहीतयष्टिप्रविकीर्णदृष्टिः ।
उद्बाहुदण्डं कटिकच्छबन्धविन्यस्तवेणुं प्रतिधावमानम् ॥ १०४ ॥
यशोदया क्वापि वने स्वगोपबालान्वितं वत्सकरक्षणे यत् ।
स्नेहादुपागम्य विनीतमग्रे संभोजितं स्वादु विचित्रभोगैः ॥१०५॥
वृन्दावने क्वापि च गोपबालान् गृहीतुकामं प्रतिधावमानान् ।
जवोच्छलत्कुण्डलकुन्तलं यन्निबद्धकच्छं कृततीव्रवेगम् ॥ १०६ ॥
क्वचित्कदाचिद्विपिने च कल्पद्रुमस्य शाखामवलम्ब्य नम्राम् ।
धुन्वन् सरोजं स्मितचारुगोपीजनस्य वार्तामनुसंदधानम् ॥१०७॥
क्वचिद्वने चारयितुं गते गा वियोगखिन्ने निहितं मृगाक्ष्या ।
चित्रार्पितं वक्षसि चोपगूढाधरामृतास्वादनमाशु धत्ते ॥ १०८ ॥
तमालनीले विपिनेऽतिनृत्यन्मयूरवृन्दैः परितो विचित्रे ।
इतस्ततो नीलमहः प्रधावदस्मदृशां रञ्जनमञ्जनं तत् ॥ १०९ ॥
अहो भविष्यत्यचिरेण यच्चदुद्यानमाला मनसो मुदे नः ।
यदुत्थितो वायुरभिप्रसर्पन्नस्मत्तनुं कण्टकिनीं करिष्यति ॥ ११० ॥
वेणुस्वनः संप्रति कर्णयुग्मसंतापसंतानमपाकरिष्यति ।
कृष्णाधरापूरितरन्ध्रमार्गविनिर्गतस्तत्सुधयानुभावितः ॥ १११ ॥
अतीत्य कोट्यण्डजविष्णुरुद्रेश्वरेष्वहो धन्यतमा वयं हि ।
यतोऽक्षरान्तः स्फुरितामनन्तलीलासुधां पीय पवित्रचित्ताः ॥११२॥
काशी प्रकाशीकृतमुक्तिरत्रा माया मृतानां च छिनत्ति मायाम् ।
द्वारावती द्वारमहो विमुक्तेस्तथापि नैतत्फलदानदक्षाः ॥ ११३ ॥
कृपानिधिः क्वापि पदाब्जयुग्मे निधीयमानेषु शिरःसु नोऽद्य ।
विलोचनाम्भोदगलद्दयासुधामयीं करिष्यत्यचिरेण वृष्टिम् ॥ ११४ ॥

विचित्ररत्नाभरणांशुदीप्ते तरङ्गमालासितदीप्तिचित्रे ।
यद्यामुनीयेऽभिनिविष्टगोपीसङ्गीतमानन्दमुदञ्चयिष्यति ॥ ११५ ॥
खगा मृगाः सन्ततदत्तकर्णा विनिश्चलाङ्गा धृतमौनदीक्षाः ।
विचित्ररूपाः कृतकौतुकान्विताः किं नाभिपश्यन्ति मुखानि नोक्षिभिः॥
इति समुदितचित्रभावपूर्णामलमनसस्त्रिदशा मिथो वचोभिः ।
स्वसुखमभिनयंत एव सद्यः पुलकविचित्रितदेहयष्टयोऽभिजग्मुः ११७

हर्षाद्याः पुलकाद्याश्च ये ये भावाः समुद्ययुः ।
ते ते विप्र दरीस्थानस्थितानामेव देहगाः ॥ ११८ ॥
यद्यत्स्थानमतीत्यैव परंपरमुपाश्रिताः ।
ध्यानारूढस्य मनसोनुभवोऽयं तथाविधः ॥ ११९ ॥

इति श्रीमत्पुराणसंहितायां सिद्धान्तसारे देवानां गोलोक-
दर्शनाभिलाषो नाम पञ्चदशोऽध्यायः ॥ १५ ॥
आदितः श्लोकानां समष्ट्यंकाः ॥ ११०१ ॥

## षोडशोऽध्यायः ॥ १६ ॥

॥ वेदा ऊचुः ॥

अथ ते त्रिदशाः सर्वे प्रस्थिता विरजातटात् ।
अगमन्पर्वतश्रेष्ठं शतशृङ्गं मनोहरम् ॥ १ ॥
कोटियोजनमानस्य गोलोकस्यातिविस्तृतम् ।
प्राकारमिव भास्वन्तं मणिकाञ्चनसानुभिः ॥ २ ॥
दिव्योद्यानसहस्राणां सहस्रैः परिशोभितम् ।
गोपुच्छैर्हरिणैः कृष्णैर्मयूरैर्हंसकोकिलैः ॥ ३ ॥
कण्ठीरवैर्गजैः शुभ्रैश्चमरीभिरलङ्कृतम् ।
पारावतैः शुकैर्युक्तं हारिलैर्मृगजातिभिः ॥ ४ ॥
आम्रजम्बूदुम्बरैश्च कल्पवृक्षैश्च शोभनैः ।
बकुलैः पारिजातैश्च तमालतरुचन्दनैः ॥ ५ ॥

चम्पकैः पिचुमंदैश्च वटाश्वत्थकदंबकैः।
किंशुकैर्हयमारैश्च हिंतालसरलैरपि ॥ ६ ॥
बदरीकोविदारैश्च दाडिमीमधुकैरपि।
एलालवंगजातीभिर्मालतीकुंदकेशरैः ॥ ७ ॥
अरिष्टाशोकरंभाभिस्तथाकुरबकैरपि।
श्रीपर्णीश्रीफलैः पूगैस्तांबूलीलतिकाशतैः ॥ ८ ॥
अनेकदिव्यौषधिभिर्गायद्भिर्मधुरं कलम्।
भृङ्गराजैः पुष्पगंधास्वादमत्तैर्विराजितम् ॥ ९ ॥
बहुभिः शोभनैः कुञ्जैर्मध्यमण्डपमण्डितैः।
राजितं नित्यसिद्धाभिर्गोपिकाभिरधिष्ठितैः ॥ १० ॥
रासक्रीडारसास्वादमदमत्ताभिरन्वहम्।
गोलोकपरितः क्लृप्तं शशिनं परिधिर्यथा ॥ ११ ॥
तेषां चेतांसि मुमुहुर्दृष्ट्वा तं पर्वतोत्तमम्।
आरोहयामासुरथो तत्सोपानोरुवर्त्मना ॥ १२ ॥
अनेकोद्यानसंशोभानिरीक्षणमहोत्सवाः।
बभ्रमुस्त्रिदशाः सर्वे परितः पर्वतोत्तमम् ॥ १३ ॥
तदद्रिशोभयाकृष्टचक्षुषस्तद्गतान्तराः।
न विदुः पादविन्यासस्थलानामुच्चनीचताम् ॥ १४ ॥
गायन्ति क्वचिदेव भृंगनिवहाः कृष्णस्य कीर्तिं मुदा
यत्कूजन्ति पिका निकाममधुरा वाचः शुकानां च याः।
ये नृत्यन्ति कलापभारमुदितं विस्तार्य यत्केकिन-
स्तद्दृष्ट्वा कमपि प्रमोदमुदगुर्देवाधिदेवा अपि ॥ १५ ॥
शतशृङ्गश्रियं वीक्ष्य चमत्कारकरीं दशाम्।
रत्नसोपानमार्गेण गोलोकं प्रत्यवातरन् ॥ १६ ॥
कालिंद्याः पश्चिमे कूले मध्वाख्यं वनमुत्तमम्।
ददृशुस्ते सुरश्रेष्ठा ध्यानारूढेन चेतसा ॥ १७ ॥
चाणूरमुष्टिकौ तत्र बलांतौ बलकेशवौ।

हत्वा च तत उत्पत्य पादमेकं महीतले ॥ १८ ॥
अपरं च ततो मंचे कृत्वा कंसं कचस्थले।
गृहीत्वा पातयन्तं च दृष्ट्वा कृष्णं विसिस्मिरे ॥ १९ ॥
अहो किमाश्चर्यमिदं कंसो भूलोकसंस्थितः।
परानन्दपदे कोऽयमपरो वा स एव हि ॥ २० ॥
स एव चेत्कथं चात्र दृश्यते परमार्थतः।
कोऽयं कृष्णो विहन्त्येनं किशोराकृतिसुन्दरः ॥ २१ ॥
विचार्यमाणेष्वमरेषु तेषु कुतूहलाक्रांतमनस्सु तूर्णम्।
परात्मना चित्तगृहीतलीला तिरोदधे दृष्टिपथङ्गतापि ॥ २२ ॥
ततस्तालवनं प्राप्ता ददृशुः कुतुकं परम्।
बलं तालान्कंपयन्तं पातयन्तं फलानि च ॥ २३ ॥
दृष्ट्वा च धेनुकः क्रोष्टा हन्तुमभ्यद्रवद्रुषा।
परावृत्याहनत्पद्भ्यां सुदृढं बलवक्षसि ॥ २४ ॥
तावदेव बलः पश्चाच्चरणौ धेनुकस्य च।
गृहीत्वा तृणराजाग्रे भ्रामयन् गतजीवितम् ॥ २५ ॥
चिक्षेप न्यपतत्तालः कम्पमानो बृहच्छिराः।
सोऽपरं पातयामास सोपरानपरं च सः ॥ २६ ॥
साधु साध्विति वै गोपाः कृष्णस्यापि प्रशंसिरे।
फलानां पततां शब्दैर्गोपानां वदतामपि ॥ २७ ॥
प्रतिध्वनितमेवेदं वनं तालाभिधं महत्।
बद्धकच्छास्ततः सर्वे गोपालाः सबलाच्युताः ॥ २८ ॥
अन्योन्यं मल्लयुद्धेन युयुधुर्बलशालिनः।
अन्योन्यं हासयन्तश्च हसंतश्च मदोत्कटाः ॥ २९ ॥
लीलामेवंविधां दृष्ट्वा प्रणामं कर्तुमुद्यताः।
तावद्विद्युल्लतेवासौ(सा)सहसांतर्दधे हि सा ॥ ३० ॥
लीलामंतर्हितां दृष्ट्वा संशयं पूर्ववत्सुराः।
चक्रिरे किमिदं चित्रमतुलं समदर्शिनः ॥ ३१ ॥

निःप्रपञ्चपदे कोयं प्रपञ्चः प्रतिभाति नः ।
खररूपधरः कोऽसौ बलेन निहतो बलात् ॥ ३२ ॥
इत्येवं सन्दिहानास्ते तस्यै कृत्वा दिशे नमः ।
महावनं गोकुलाख्यं ययुः प्रमुदिताशयाः ॥ ३३ ॥
यशोदाशयने सुप्तं बालकृष्णं जगत्पतिम् ।
गरलिप्तं स्तनं तस्मै पाययन्तीं च पूतनाम् ॥ ३४ ॥
सहप्राणैः शोषयन्तं मृतायाः विकृताकृतेः ।
हृदि खेलन्तमभयं कोटिकन्दर्पसुन्दरम् ॥ ३५ ॥
नीलाम्भोजघनच्छायमिन्दुबिंबहसन्मुखम् ।
प्रवातपद्मनयनमिन्दिरानन्दमन्दिरम् ॥ ३६ ॥
उत्तुंगरक्तसुस्निग्धनखचन्द्रपदाम्बुजम् ।
श्यामकुञ्चितसुस्निग्धचिकुरावृतमस्तकम् ॥ ३७ ॥
गम्भीरनाभिकुहरमनुमेयकटिस्थलम् ।
त्रिगूढं गूढहृदयं दृष्ट्वा तत्र सुविस्मिताः ॥ ३८ ॥
यावत्तन्निकटं गत्वा पादस्पर्शकृताशयाः ।
तावत्तिरोदधे लीला यथा स्वप्नविजृम्भितम् ॥ ३९ ॥
साश्चर्यवदनाम्भोजास्तस्यै कृत्वा दिशे नमः ।
गमनाय पुनश्चित्तं यावच्चक्रुर्महेश्वराः ॥ ४० ॥
तावदेव तृणावर्तं हरन्तं कृष्णमन्तिकात् ।
भारपीडितया मात्रा विसृष्टमवनीतले ॥ ४१ ॥
रजोन्धकारगहने स्वपरज्ञानवर्जिते ।
यशोदाद्यास्तदा गोपीः क्रन्दन्तीः करुणस्वनम् ॥ ४२ ॥
वीक्ष्यासन् विह्वलात्मानः समदुःखा इवेश्वराः ।
मुहूर्तमात्रेऽतिक्रान्ते तृणावर्तगलग्रहम् ॥ ४३ ॥
पतन्तं दूरमाकाशाच्छिलायां ददृशुः सुराः ।
अधः स्थितस्तृणावर्तश्चूर्णीकृतकलेवरः ॥ ४४ ॥
तस्योरसि क्रीडमानं दृष्ट्वा गोप्योऽतिविस्मिताः ।

गृहीत्वा हृदयापीडं यशोदायै न्यवेदयन् ॥ ४५ ॥
गोप्य ऊचुरहो देवि बालकस्तव कोमलः ।
विष्णुना दीननाथेन रक्षितोऽद्य न संशयः ॥ ४६ ॥
त्वत्पुण्यसम्पदा नद्या मृत्युहस्तगतः शिशुः ।
मृत्युर्नष्टः[1] सुतः प्राप्तो निरुपद्रव एव हि ॥ ४७ ॥
कथमेतद्व्रजाधीशपत्नि पुण्यैर्विना भवेत् ।
गोपीष्वेवं वदन्तीषु नन्दाद्या गोपनायकाः ॥ ४८ ॥
भयोद्विग्नाः समाजग्मुः किं जातमिति वादिनः ।
सर्ववृत्तान्तमाचख्युस्तेभ्यस्ता व्रजयोषितः ॥ ४९ ॥
पुनर्जातमिति ज्ञात्वा नन्दोऽपि सुमहामनाः ।
ब्राह्मणेभ्यो ददौ प्रीतः स्रग्वासोधेनुकाञ्चनम् ॥ ५० ॥
स्वस्ति स्तादिति ते प्रोचुराशिषस्ताद्विलोक्य च ।
यावदेवाभिधावन्ति प्रणामस्तवनार्थिनः ॥ ५१ ॥
तावल्लीला तिरोधत्त देवास्तु विस्मयं ययुः ।
सच्चिदानन्दरूपेऽस्मिन्नक्षरे परमात्मनि ॥ ५२ ॥
निःसङ्गे निर्मले धाम्नि केवले गुणवर्जिते ।
कुतः प्रविष्टा नन्दाद्या गोपा गोप्यश्च सोऽसुरः ॥ ५३ ॥
असम्भाव्यमिदं भाति कुत एतत्कुतूहलम् ।
सदाशिवेशरुद्रैश्च समाधीतौ विधिर्हरिः ॥ ५४ ॥
तस्यै दिशे नमस्कृत्वा प्रयाणाभिमुखाः सुराः ।
उत्सवं ददृशुर्नन्दमन्दिरे जनसङ्कुलम् ॥ ५५ ॥
स्नापयन्ती नन्दपत्नी बालकृष्णं मुदान्विता ।
गायन्ती[2] लालयन्ती सा भूषयन्ती विभूषणैः ॥ ५६ ॥
पाययन्ती स्तनं प्रीत्या दोलायां तमशीशयत् ।
ज्ञातिबन्धुसुहृद्भ्यश्च मानदानपरायणा ॥ ५७ ॥
स्तन्यकामं रुदन्तं तं नाशृणोत्कार्यमोहिता ।

---

१ नष्टाः स्म इति वादिनः इ. पा । २ पायन्ती इ. पा. ।

उपरिस्थमनः कृष्णस्तदा पद्भ्यामपातयत् ॥ ५८ ॥
विशीर्णसर्वावयवं पतितं दूरतः क्षितौ ।
तत्पातस्वनमाकर्ण्य गोपा गोप्यो भयाकुलाः ॥ ५९ ॥
आगत्य ददृशुश्चित्रं सस्मिताननमात्मजम् ।
निर्भयं दूरपतितं शकटं चेति विस्मिताः ॥ ६० ॥
मिलन्तस्ते जनाः प्रोचुरद्यायं दैवरक्षितः ।
केचिदूचुर्हि नन्दस्य पुण्यपारो न विद्यते ॥ ६१ ॥
यशोदायाः कथं शोको घटते काश्चनोचिरे ।
नन्दस्तु विप्रानाहूय विप्रशान्तिमकारयत् ॥ ६२ ॥
पठन्विप्राननुमुखं विष्ण्वाद्यनुगतो ययौ ।
तावत्तत्रैव सा लीला सहसांतर्हिताभवत् ॥ ६३ ॥
महाश्चर्यरसाम्भोधिनिमग्नमनसः सुराः ।
आनन्दरससम्पूर्णं ययुर्नन्दीश्वरं वनम् ॥ ६४ ॥
तत्र नानाविधा लीलाः पश्यन्तश्चेरुरुत्सुकाः ॥ ६५ ॥

इति श्रीमत्पुराणसंहितायां सिद्धान्तसारे देवानां गोलोक-
लीलादर्शनं नाम षोडशोऽध्यायः ॥ १६ ॥

आदितः श्लोकानां समष्ट्यंकाः ॥ ११६५ ॥

## सप्तदशोऽध्यायः ॥ १७ ॥

॥ वेदा ऊचुः ॥

गोचारणविधानाय कृष्णः स्वपितरं मुदा ।
प्रार्थयामास तां लीलां ददृशुस्ते दिवौकसः ॥ १ ॥

श्रीकृष्ण उवाच ॥

धन्यास्ते शिशवो लोके पितुराज्ञाकराश्च ये ।
वसनाशनभूषाभिः पित्रा चैवोपलालिताः ॥ २ ॥
लालने पञ्चवर्षाणि व्यतीतानि मम प्रभो ।

कुलकर्माण्यतः साधो शिक्षितव्यानि मेऽधुना ॥ ३ ॥
कुलाचारः शिक्षितव्यः पुत्रेण पितुरन्तिकात् ।
अनुशासितव्यः पित्रापि पुत्रो यत्नेन भूयसा ॥ ४ ॥
नानुशास्ति पिता पुत्रं बाल्ये स्वाचारपद्धतिम् ।
पुत्रो यदि न गृह्णाति पितुराचारसत्क्रियाम् ॥ ५ ॥
नासौ पिता च पुत्रोऽसौ कुलधर्मविदूषकौ ।
तस्मादावां शिक्षितव्यौ कुलाचारक्रियां त्वया ॥ ६ ॥
वयं हि गोधनास्तात गिरिकाननवासिनः ।
तस्माद्गोधनरक्षार्थमावामाज्ञापयाधुना ॥ ७ ॥
इति पुत्रवचः श्लक्ष्णं श्रुत्वा नन्दो महामनाः ।
समक्षं च यशोदायाः हर्षगद्गदमब्रवीत् ॥ ८ ॥

॥ नन्द उवाच ॥

सत्पुत्रेण त्वया पुत्र धन्यो जातोऽस्मि साम्प्रतम् ।
त्वमेव गोकुलस्यास्य शृङ्गारमणिभूषणम् ॥ ९ ॥
तव मातुर्यशोदाया मम चापि जनुःफलम् ।
मद्वंशकुमुदानन्दप्रबोधायेन्दुरुल्लसत् ॥ १० ॥
मन्मनःसरसीहंसो मूर्तं भाग्यमिवावयोः ।
मच्चित्तकेकिजलदो मम भाग्यलताफलम् ॥ ११ ॥
महाभाग्यमहातूलराशेः कल्पान्तिकोऽनलः ।
पितृमातृलसच्छुक्तिसम्पुटोद्भुतमौक्तिकम् ॥ १२ ॥
मद्दुःखसागराशोषवडवाग्निरिव ज्वलन् ।
मत्पूर्वान्धतमःस्तोमविपाटतुहिनद्युतिः ॥ १३ ॥
मदीयहृदयाम्भोजसमुज्जृम्भणगोपतिः ।
अकिञ्चनस्य मे दिव्यं चिन्तारत्नमुपागतम् ॥ १४ ॥
पितृमातृसुहृद्बन्धुगोपगोप्येकजीवनम् ।
सर्वसौभाग्यसद्बीजमक्षिमांद्यहराञ्जनम् ॥ १५ ॥

---

१ कुलरक्षार्थं इ. पा. ।

बहुजन्मसदभ्यस्ततपोयोगफलोदयः।
त्वमेव पुत्र मे नास्ति त्वत्तोऽन्यदैवतं महत् ॥ १६ ॥
प्रीणासि हृदयं मेऽद्य वचनेन मधुच्युता।
कुलाचारकृते पुत्र शिक्षां प्रार्थयसे च यत् ॥ १७ ॥
तथापि पुत्र बालोऽसि वनभूमिर्दवीयसी।
दुर्गमा दुःखदा तात न प्रेषयितुमुत्सहे ॥ १८ ॥
बहवः सन्ति मे गेहे सेवकाः कार्यकारिणः।
त्वं रमस्व निजे गेहे पित्रोर्नः प्रीतिमावह ॥ १९ ॥
त्वयि पुत्र वनं याते शून्यं सद्म न रोचते।
क्षणोऽपि दिवसो भूयाद्दिवसः कल्पवन्महान् ॥ २० ॥
त्वद्वेणुनादाः सततं यावच्छ्रुतिपथच्युताः।
बाधिर्यं तावदेवेह मम पुत्र न संशयः ॥ २१ ॥
सरोजपत्रनयनं स्निग्धवक्रालकावृतम्।
उल्लसद्भ्रूकुटीभावं विद्रुमाधरसुस्मितम् ॥ २२ ॥
प्रचलत्कुण्डलयुगं मयूरमुकुटोल्लसत्।
अपश्यतो मुखाम्भोजमांध्यमेव सदा मम ॥ २३ ॥
तस्मान्मनोरथेनालं पुत्रारण्यगतिं प्रति।
इति नन्दवचः कृष्णो निशम्य पुनरब्रवीत् ॥ २४ ॥

श्रीकृष्ण उवाच ॥

न गमिष्ये वने दूरं तात कस्माद्बिभेषि भोः।
बालकाः सन्ति मे सार्था बलवानग्रजोऽप्ययम् ॥ २५ ॥
यद्यप्यनुचराः सन्ति बहवो गृहवर्तिनः।
तथापि गोपजातीयकार्ये परिचयो भवेत् ॥ २६ ॥
व्यापारविद्याशिल्पेषु बाल्यात्परिचयः शुभः।
यस्मिन्कर्मणि धीर्बाल्येऽधिष्ठिताधिष्ठितैव सा ॥ २७ ॥
भूयोऽवस्थान्तरे जाते रोचते न कदाचन।

१ सुन्दरम् इ. पा.।

तस्माद्वनं गमिष्यामो बालकैरग्रजेन च ॥ २८ ॥
वत्सानेव वयं सर्वे पालयिष्याम आश्रये ।
पश्चादधिकसामर्थ्ये धेनूश्च वृषभानपि ॥ २९ ॥
अत्राज्ञापय भो तात निःसंदिग्धेन चेतसा ।
गोपालानपि पुत्राणां प्रेषणार्थं निबोधय ॥ ३० ॥
इति पुत्रवचः श्रुत्वा नंदश्चैव यशोमती ।
अभूतां परमाह्लादनिमग्नमनसावुभौ ॥ ३१ ॥
नेत्रयोरुद्गलद्धर्षाश्रूणि संमृज्य वाससा ।
आलिङ्गयामासतुरलं पुत्रमंके निधाय च ॥ ३२ ॥
॥ नन्द उवाच ॥
पुत्रेदृशी यदीच्छा ते करिष्यामि तथाधुना ।
न त्वन्मनोरथः पुत्र मत्तो व्याघातमर्हति ॥ ३३ ॥
श्रावयित्वा वचः सत्यं कृष्णाय सुमहात्मने ।
आहूय सर्वगोपालान्समाजमकरोत्तदा ॥ ३४ ॥
सर्वेषां शृण्वतां प्राह नन्दो वाक्यविचारवित् ।
अहो गोपा मम वचः शृणुध्वं यूयमादरात् ॥ ३५ ॥
वने वत्सान्पालयितुं कृष्णो गन्तुमभीप्सति ।
नातिदूरे व्रजभुवो गमिष्यति निकेतनात् ॥ ३६ ॥
सखायः संति कृष्णस्य भवतां तनयाः किल ।
समानवयसः सर्वे एकारामाशनासनाः ॥ ३७ ॥
एकीभूय गमिष्यन्ति चारयिष्यन्ति ते सह ।
भवदीयसुतानां च वर्ततेयं मनोरथः ॥ ३८ ॥
स्वयं वक्तुमनीशत्वाद्भवदग्रे भवत्सुताः ।
प्रार्थयन्ते कृष्णमुखाः कृष्णेनावेदितं च मे ॥ ३९ ॥
मयापि भवतामग्रे कथितं यदि रोचते ।
तदलङ्कृत्य वत्सांश्च रसनाघण्टिकादिभिः ॥ ४० ॥
शुभाच्छादनवस्त्रैश्च प्रेषयन्तु वनान्तरे ।

सुमुहूर्ते सुलग्ने च शोभने दिवसेऽपि च ॥ ४१ ॥
इति नन्दवचः श्रुत्वा गोपालाः सर्व एव ते ।
स्वकुलानुगुणं पुत्राशयं ज्ञात्वा मुदं ययुः ॥ ४२ ॥
तत्रैवाहूय विप्राग्र्यान् विनिश्चित्य शुभं दिनम् ।
स्वं स्वं धिष्ण्यं समाजग्मुश्चक्रुस्तत्रोचितं विधिम् ॥ ४३ ॥
नन्दोपि भूषयामास वत्सान्नानाविधान्पृथक् ।
कांश्चित्सिन्दूररागेण गैरिकेण तथापरान् ॥ ४४ ॥
मनःशिलाभिरपरान् लाक्षारागेण चेतरान् ।
कांश्चित्तु कुङ्कुमेनैव तालेनैव तु कांश्चन ॥ ४५ ॥
क्षुद्रघण्टास्रजा कण्ठे चरणेषु च नूपुरैः ।
पृष्ठदेशेषु बहुभिराच्छादनपटैः शुभैः ॥ ४६ ॥
वत्स(स्वच्छ)वर्णक्रमेणैव वस्र (रत्न) नाम्बरभूषणैः ।
तत आकारयामास ज्ञातीन्सम्बन्धिनः परान् ॥ ४७ ॥
आजग्मुर्गोपवनिता नानोपायनपाणयः ।
सूताश्च मागधा विप्रा वन्दिनो नटनर्तकाः ॥ ४८ ॥
विद्योपजीविनश्चान्ये समाजग्मुः प्रहर्षिताः ।
नन्दस्तेभ्यो ददौ हृष्टो वस्त्रमाल्याम्बरस्रजः ॥ ४९ ॥
दुन्दुभिध्वानमुखरा बभूवुः ककुभां गणाः ।
वीणामृदङ्गवाद्यानि द्वारदेशेभिनेदिरे ॥ ५० ॥
केचिन्नृत्यन्ति गायन्ति हासयन्त्यपि कौतुकैः ।
एतस्मिन्नन्तरे नन्दगेहिनी सा यशस्विनी ॥ ५१ ॥
स्नापयामास तनयं रत्नसिंहासनस्थितम् ।
परितो गोपकन्याभिर्गायन्तीभिर्यशोऽमलम् ॥ ५२ ॥
वेष्टितं विविधैर्वार्भिः कौङ्कुमैः पुष्पवासितैः ।
अङ्गमार्जनवस्त्रेण मार्जयित्वा हरेस्तनुम् ॥ ५३ ॥
चतुर्द्वारयुतं रत्नमण्डपं सा निनाय तम् ।
शृङ्गारमकरोत्तस्य विविधाम्बरभूषणैः ॥ ५४ ॥

सुवर्णपट्टिकाव्युप्तमुक्ताकरत्नेन वाससा ।
प्रान्तेषु स्निग्धपीतेन कटिकच्छं बबन्ध सा ॥ ५५ ॥
वृश्चिकाकृतिसद्भूषाश्चरणाङ्गुलिषु व्यधात् ।
अनेकविस्फुरद्रत्नप्रभाजालेऽस्य पादयोः ॥ ५६ ॥
नूपुरे पादकटके स्वर्णघुङ्घुरुमालिके ।
अनेकरत्नविद्योतत्किङ्किणीजालभूषणम् ॥
अकरोत्कटिदेशेऽस्य पीतवस्त्रोपरिस्फुरत् ॥ ५७ ॥
प्रवालरक्तहस्ताग्राङ्गुलिष्वमलमुद्रिकाः ।
प्रहसद्रत्नमुक्ताद्या व्याततान दशस्वपि ॥ ५८ ॥
पाण्योरुपरिभागे च हस्तशृङ्खलमादधौ ।
मुक्तावैदूर्यमाणिक्यजटितं स्वर्णनिर्मितम् ॥ ५९ ॥
विस्फुरत्कङ्कणयुगं बबन्ध मणिबन्धयोः ।
आलम्बमानसन्मुक्तागुच्छशोभाविराजितम् ॥ ६० ॥
बाहुमध्येऽङ्गदयुगं बबन्ध मणिभूषितम् ।
अन्तरान्तरविन्यस्तरत्नवैदूर्यशोभितम् ॥ ६१ ॥
आनाभिलम्बिनीं मालां मौक्तिकीमादधौ गले ।
अनेकपुष्परचितां वनमालां सुशोभनाम् ॥
सौवर्णाः शृङ्खलाश्चापि व्याततानोरसि स्थिताः ॥ ६२ ॥
अनेकरत्नजटितमुरस्थं पदकं व्यधात् ।
गले बबन्ध ग्रैवेयं माणिक्यहीरकोज्ज्वलम् ॥ ६३ ॥
मुखरुक्यमुनापूरतरती मीनकुण्डले ।
कर्णयोरदधाद्विद्युल्लतास्फुरणविभ्रमे ॥ ६४ ॥
कस्तूरीतिलकालिप्तभालदेशे सुशोभने ।
मुक्तामाणिक्यजटितं रुचिरं तिलकं दधौ ॥ ६५ ॥
शिरस्यधात्सुरुचिरं मायूरमुकुटोज्ज्वलम् ।
स्वभावसुन्दरलसन्नेत्रयोरञ्जनं तथा ॥ ६६ ॥
ताम्बूलवीटिकां वक्त्रे स्वभावादरुणाधरे ।

कटिकच्छे च मुरलीं हस्ते लकुटिकामदात् ॥ ६७ ॥
परितो मिलिता गोप्यस्तदङ्गस्पर्शलालसाः ।
शृङ्गारशिक्षाव्याजेन हस्तस्पर्शमकुर्वत ॥ ६८ ॥
उत्सवालोकनायातां वृषभानोः सुतामपि ।
शोभार्थं स्थापयामास निकटे च शुभासने ॥ ६९ ॥
मिलितास्तास्तदा गोप्यो वार्तां चक्रुः परस्परम् ।
अहो रूपमिदं कीदृगुपमानबहिः स्थितम् ॥ ७० ॥
अन्योन्यशोभाजनकं युगलं चैतयोरिह ।
तडित्तडिद्वतोर्यद्वत्सुवर्णमणिनीलयोः ॥ ७१ ॥
राधारूपमपर्याप्तं नन्दसूनोः पृथक्स्थितम् ।
नन्दसूनोरपि प्रायस्तथैवानन्वितं तया ॥ ७२ ॥
एतयोरेव संयोगे दृश्यते सुषमा तु या ।
सा चानुभवसंवेद्या वक्तुं वाचा न शक्यते ॥ ७३ ॥
सख्यः केनोपमीयेत लावण्यरसमाधुरी ।
चक्षुषा सह यल्लीनं चेतो नोत्थितुमर्हति ॥ ७४ ॥
यशोदे तव बालोयं व्रजप्राणो व्रजेश्वरः ।
व्रजप्राणपतिः साक्षाद्व्रजरत्नं व्रजोत्सवः ॥ ७५ ॥
व्रजभाग्याङ्कुरमयो नन्दपुण्यतरोः फलम् ।
यशोदानन्दकन्दश्च गोपीनेत्राब्जभानुमान् ॥ ७६ ॥
चिरं जीवतु कृष्णस्ते यशोदे सुव्रते सति ।
मनोरथास्ते सञ्जाताः सम्पूर्णाः पुत्रलालनात् ॥ ७७ ॥
न तवैव प्रियः कृष्णो नितरां वन(व्रज)वासिनाम् ।
समस्तानां प्रेमपात्रं एक एव न संशयः ॥ ७८ ॥
अनेककोटिब्रह्माण्डव्यस्तसौन्दर्यमेकतः ।
राशीकृतमिवाभाति दृष्टिर्यस्मिन्विमुह्यति ॥ ७९ ॥
इत्येवं गोपिकावाक्यं श्रुत्वा नन्दस्य गेहिनी ।
प्रहसत्प्रेमवदना प्राह प्रहृतया वचः ॥ ८० ॥

॥ यशोदोवाच ॥

नास्माकं पुण्यचरितं न तपः पूर्वसञ्चितम् ।
पुत्रोपलालनसुखं भवदाशीः फलं मम ॥ ८१ ॥
स्वप्नं वा सत्यमित्ये (तन्ना)वं न जानामि यथातथम् ।
वृद्धपुण्यप्रभावोऽयं न मे पुण्यं हि तादृशम् ॥ ८२ ॥
पयोदधिघृतादीनि भवतीनां गृहेष्वपि ।
अत्यर्पयति बालेभ्यो मर्कटेभ्यो विशेषतः ॥ ८३ ॥
भाण्डभङ्गं च कुरुते विक्रोशयति बालकान् ।
मुञ्चत्यकालतो वत्सांस्तत्सर्वं विदितं मम ॥ ८४ ॥
तथापि भवतीनां च तत्सर्वं प्रेम्णि मज्जति ।
अस्मत्सुखेन सुखिनो व्रजस्योचितमेव तत् ॥ ८५ ॥
एवमुक्तवती नन्दपत्नी कृष्णस्य भालके ।
दृग्दोषपरिहारार्थं कज्जलाङ्कमधाच्छनैः ॥ ८६ ॥
तदा गोप्यः स्मितं कृत्वा प्रोचुर्हास्यमिषेण हि ।
[1]नास्मद्दृष्टिर्हि दोषाय कदापीत्यवबुध्यताम् ॥ ८७ ॥
त्वत्पुत्रप्रेमवशगा विस्मारितनिजगृहाः ।
वयं व्रजस्था वै गोप्यो नास्मद्दृष्टिरघावहा ॥ ८८ ॥
इति वामवचः श्रुत्वा गोपिकानां यशोमती ।
स्मितपूर्वमुवाचेदं परिहासमजानती ॥ ८९ ॥
अहो किमेतद्वचनं मर्मभेदनिदर्शकम् ।
ब्रूथ दृष्टिर्मदीयैव कथं दोषाय नो भवेत् ॥ ९० ॥
सामान्यतश्च दृग्दोषपरिहाराय मे कृतः ।
कज्जलाङ्कः पुत्रभाले प्रतिकूलं किमादृताः ॥ ९१ ॥
तदा जहसुरन्योन्यं तीर्यग्वक्त्राः स्मिताननाः ।
ऊचुर्यशोदे परीहासः क्रियते प्रेमरंहसा ॥ ९२ ॥
एवमन्योन्यं सञ्जल्पं कुर्वन्तीनां व्रजार्भके ।

---

१ न नो दृष्टिर्हि इ. पा. ।

प्रेमाब्धिरतिमर्यादो बभूव व्रजयोषिताम् ॥ ९३ ॥
एतस्मिन्नन्तरे गोपा नन्दाद्याः सद्विजातयः ।
त्वरमाणाः समाजग्मुर्मुहूर्तातिक्रमे भयात् ॥ ९४ ॥
ज्योतिर्विद्याविदो विप्राः प्रोचुर्भो व्रजयोषितः ।
कुङ्कुमाक्षतपुष्पैश्च कृष्णं वर्धापयन्त्वितः ॥ ९५ ॥
सुमुहूर्तक्षणो ह्येषो यावन्नाति क्रमेदिह ।
तावत्कृष्णेन गन्तव्यमस्ति वत्सैर्वनं प्रति ॥ ९६ ॥
तस्मात्त्वरैव कर्तव्या माचिरं चेत्युदीरिताः ।
व्रजस्त्रियस्तथा चक्रुर्विधिं वृद्धाभिशिक्षिताः ॥ ९७ ॥
तावद्गोपसुताः सर्वे धृतवेशविभूषणाः ।
नन्दद्वारिसमाजग्मुः सह वत्सैर्विभूषितैः ९८ ॥
स्त्रियो गायन्ति नृत्यन्ति नर्तक्यो गायका जगुः ।
ऋग्यजुः सामभिर्विप्रा आशिषः समयोजयन् ॥ ९९ ॥
गोपीवृन्दान्तरचरः कृष्णोपि सह वाडवैः ।
कोटिकामकलापूर्णो द्वारि तस्थौ शुभासने ॥ १०० ॥
तावदानन्दितो नन्दः कृष्णस्य करपङ्कजे ।
वत्सदाम ददौ प्रेम्णा बाष्पगद्गदितोऽब्रवीत् ॥ १०१ ॥
पुत्र दूरे न गन्तव्यं गहने च वनान्तरे ।
कंटकैरा[1]चिते मार्गे न धार्यं पदपङ्कजम् ॥ १०२ ॥
पुरस्तान्नाभिगन्तव्यं धावन्तीनां गवामपि ।
न वृक्षमूले स्थातव्यं त्वया पुत्र कदाचन ॥ १०३ ॥
नातपे पथि गन्तव्यं सेवकाः सह यान्ति ते ।
चारयिष्यन्ति ते वत्सान्स्थातव्यं ते शुभस्थले ॥ १०४ ॥
यदाज्ञापयते धीरो बलभद्रस्तवाग्रजः ।
त्वया तदेवानुष्ठेयं स्नेहः कार्यः परस्परम् ॥ १०५ ॥
न च युद्धं विधातव्यं बालकैर्मित्रतां गतैः ।

---

१ 'आस्तृते' इ. पा. ।

नोत्फालनीयः कूपश्च गर्तश्चापि महांस्त्वया ॥ १०६ ॥
नाखिश्रृङ्गिषु विश्वासो न कर्तव्यस्त्वया क्वचित् ।
एकाकिना त्वया पुत्र न गन्तव्यं च कुत्रचित् ॥ १०७ ॥
वृक्षाणां कोटरस्थाने लताजाले च वल्मिके ।
हस्तो न धार्यः सततं यतस्ते सत्वसंश्रिता[1]ः ॥ १०८ ॥
न वृक्षारोहणं कार्यं कपिपुच्छावलम्बनम् ।
नातिवेलं त्वया स्थेयं वनेषु च ममाज्ञया ॥ १०९ ॥
इति नन्दस्य मातुश्च शिक्षां मूर्ध्नाभिगृह्य च ।
अभिवन्द्य पदाम्भोजं वत्समादाय दामनि ॥ ११० ॥
नदत्सु पञ्चवाद्येषु ब्राह्मणेषु पठत्सु च ।
गायन्तीषु च गोपीषु जगाम व्रजनागरः ॥ १११ ॥
अग्रे रामस्ततः पश्चात्कृष्णः कमललोचनः ।
परितो बालकाः सर्वे काप्यभूत्सुषमा तदा ॥ ११२ ॥
आसन्नं वनमाविश्य क्रीडित्वा सह बालकैः ।
रामकृष्णौ पितुर्गेहमीयतुर्वत्सवत्सपैः ॥ ११३ ॥
तस्मिन्नवसरे देवा दृष्ट्वा लीलामलौकिकीम् ।
प्रणन्तुमभिधावन्ति तावत्सर्वं तिरोदधे ॥ ११४ ॥
चित्तोन्मेषनिमेषाभ्यामक्षरस्य परात्मनः ।
आविर्भावतिरोभावा लीलायाः साक्षिकल्पिताः ॥ ११५ ॥
य इमं शृणुयान्मर्त्यः श्रावयत्यतिभक्तितः ।
श्रीकृष्णदर्शनफलं तयोस्तुल्यं न संशयः ॥ ११६ ॥

इति श्रीपुराणसंहितायां सिद्धान्तसारे देवानां नित्यगोलोक-
लीलागोचरो नाम सप्तदशोऽध्यायः ॥ १७ ॥

आदितः श्लोकानां समष्ट्यङ्काः ॥ १२८१ ॥

---

१ संश्रयाः इ. पा. ।

# अष्टादशोऽध्यायः ॥ १८ ॥

॥ वेदा ऊचुः ॥

अतः परं शृणु मुने लीलान्तरनिदर्शनम् ।
यस्य श्रवण मात्रेण तल्लीलालोकसत्फलम् ॥ १ ॥
अथ ते ब्रह्मविष्ण्वाद्या ज्ञात्वा लीलां तिरोहिताम् ।
अगाधविस्मयाम्भोधौ ममज्जुः किमिदं त्विति ॥ २ ॥
पुनर्ददृशुस्तत्रैव यशोदां पुत्रवत्सलाम् ।
अनेकगोपिकामध्ये शोचन्तीं विरहातुराम् ॥ ३ ॥
पुत्रागमनमार्गे च दृशं निःक्षिपतीं मुहुः ।
सतुषाराब्जपत्राक्षीं पुत्रशून्यगृहाद्बहिः ॥ ४ ॥
श्रीकृष्णवदनालोकमृते कल्पायते क्षणः ।
यशोदाहालिपुरतो वचनं विरहातुरा ॥ ५ ॥

॥ यशोदोवाच ॥

वृंदावनादभिगतस्य सुतस्य वक्त्रं गोधूलिधूसरमतिश्रमबिन्दुचित्रम् ।
स्निग्धालकालिभिरिवालिभिरब्जमुग्धच्छोभंविघूर्णनयनं शिखिपिच्छचूडं
वन्यप्रसूनतरुपल्लवकर्णपूरमापूरयन्मुरलिकामधरामृतेन ।
नासानटद्गुरुतरामलमुक्तमाराद्द्रक्ष्ये कदा सखि विषादभरेण नुन्ना ।
उत्फुल्लगल्लमधरामृतसिक्तवल्गुवेणुस्वनैः सपदि गाश्च समाह्वयंतम् ।
उद्भ्रामयंतमभितो लकुटीं करेण कृष्णं कदा सखि पुरःप्रविलोकयिष्ये
आभाष्य मात इति मन्निकटं समेत्य संतापभाजि हृदि मेघ कदा किशोरः
कल्पप्रवालमृदुपाणिसरोरुहाभ्यामालिंगयिष्यतितरां च निलीय गाढ
अङ्गं मुहुर्विचलयन् क्षुधमुग्रजातामावेदयन् जठरपाणिरुदारलीलः ।
धुन्वन् शिरो दधिपयोनवनीतमिच्छन्कृष्णः कदा हठमुपेत्य करिष्यतीह
आगत्य मेंऽघ्रिकमले पतितस्य सूनोर्वक्त्रं कदा पशुखुरोद्धृतरेणुपूर्णम्।
उत्थाप्य चाङ्कमुपनीय विनीतबुद्धेः स्वीयाञ्चलेन मृदुनानुविमार्जयिष्ये॥
वृंदावनांतरसमागतमेकपुत्रं दृष्ट्वाभिधाव्य परिगृह्य करांबुजाभ्याम् ।
कंठे निरूप्य सखि सुंदरसुंदराङ्गमुद्धृत्य वक्त्रमिह चुंबनमाचरिष्ये १२

वृन्दावनादागतमिव गृहं परिवृत्तसूनोर्मूर्धानमेव परितो भ्रमणं विधाय ।
मार्गे सुदुर्जनदृशः परिपातदोषनाशाय राजिलवणानि कदोत्स्त्राजिष्ये॥
एवं विरहसन्तप्ता यशोदा प्रेमविह्वला ।
स्वपाणितलविन्यस्तमुखाम्भोजा सबाष्पदृक् ॥ १४ ॥
नानामनोरथाक्रान्तहृदया सखिसन्निधौ ।
विषाणवेणुमधुरालापान्सुश्राव दूरतः ॥ १५ ॥
प्राप्तप्राणेव तन्मार्गनिहितानिमिषेक्षणा ।
परितो गोपवृन्दैश्च वेष्टितं गोरजःप्लुतम् ॥ १६ ॥
सङ्कुचिताधरविन्यस्तमुरलीवादनोत्सुकम् ।
उत्तङ्गकोटिमायूरमुकुटान्दोलनश्रियम् ॥ १७ ॥
सुवर्णवर्णवसनद्युत्या विद्युद्घनोपमम् ।
आकारयन्तं गोयूथान्यभितो हुंकृतिस्वनैः ॥ १८ ॥
भ्रामयन्तं लकुटिकां हासयन्तं सुहृज्जनान् ।
विविच्य स्वस्वयूथेषु योजयन्तं तथा पशून् ॥ १९ ॥
ददर्श कृष्णं रुचिरं रुचिरापाङ्गवीक्षितैः ।
संक्रामयन्तमानन्दं व्रजस्त्रीहृदयान्तरे ॥ २० ॥
स्मितव्रीडानना गोप्यः पीत्वा तन्मुखपङ्कजम् ।
लावण्यरसमाधुर्यं तापमुत्सस्रुजुः क्षणात् ॥ २१ ॥
यशोदापि महाभागा द्वारि स्थितमथात्मजम् ।
नीराज्य काञ्चनस्थालीनिहितैः पञ्चदीपकैः ॥ २२ ॥
राजिका लवणं चापि तन्मूर्ध्नि परितो मुहुः ।
उत्तार्य करपद्माभ्यामालिलिङ्गोरसि दृढम् ॥ २३ ॥
चुम्बयित्वा मुखाम्भोजं स्थापयित्वासने शुभे ।
गोरजश्छुरितं वक्त्रं मार्जयामास वाससा ॥ २४ ॥
केशान्समूहयामास लम्बमानान्मुखोपरि ।
उत्थायोत्थाय धावन्तं बालक्रीडामिषेण तम् ॥ २५ ॥
निवारयन्ती जननी स्थापयामास वै पुनः ।

श्रान्तोसि पुत्र भ्रमणात्कानने कण्टकान्विते ॥ २६ ॥
धावन्तीनां गवां रोधे धावमानोसि पुत्रक ।
कचिदातपसंक्लिष्टः कचिदापीडितः क्षुधा ॥ २७ ॥
वनक्लेशान्बहुविधाननुभूयागतो गृहम् ।
तथापि न तव स्थैर्यं चिरं तिष्ठासनोत्तमे ॥ २८ ॥
एवमात्मजमाबोध्य यशोदा नन्दगेहिनी ।
गृहारण्यकृतं वेषमुत्ततार सखीवृता ॥ २९ ॥
पुष्पवासिततैलेन तदङ्गाभ्यङ्गमादधौ ।
उद्वर्तनेन तत्तैलमाजहार पुनः सती ॥ ३० ॥
कवोष्णैरुदकैः स्वच्छैः स्नापयित्वा स्वमात्मजम् ।
अङ्गरागं चकारास्य शशिनाभ्यक्तचन्दनैः ॥ ३१ ॥
पुष्पहारान्दधौ कण्ठे किरीटं पुष्पकल्पितम् ।
पुष्पमण्डपिकामध्ये तं निनाय शुभासने ॥ ३२ ॥
धूपमाने त्वगरुभिश्चन्दनाम्भोभिरुक्षिते ।
व्रजस्त्रियोभिर्विविशुर्मण्डले पुष्पकल्पिते ॥ ३३ ॥
स्वर्णपात्रस्थितं तस्मै शाकपाकान्नसम्भृतम् ।
अनेकविधपक्वान्नैः सद्यो मथितगोरसैः ॥ ३४ ॥
सशर्करापयोभिश्च सुशृतैर्माहिषीभवैः ।
सूपायसान्नसंयावैर्दध्यक्तवटकैरपि ॥ ३५ ॥
पूर्णेन्दुमण्डलनिभैश्चन्द्रिकाम्ररसैर्युतम् ।
द्राक्षाबदरजम्बीरबीजपूरकरीरकैः ॥ ३६ ॥
कदलीफलकन्दैश्च शिम्बीसूरणसंयुतम् ।
कटुक्षाराम्लतिक्ताद्यैः पदार्थैरुपशोभितैः ॥ ३७ ॥
निम्बूकाद्रैर्बिल्वफलैरुपदंशैः समन्वितम् ।
नानापेयरसैर्युक्तं भोजनं समकारयत् ॥ ३८ ॥
अङ्गुल्याभरणस्फूर्जद्रत्नद्योतितपाणिना ।

१ सूपापूपान्न 'सुपायसान्न' इ. पाठः ।

बुभुजे परमानन्दः स्वमात्रादिष्टमादरात् ॥ ३९ ॥
व्रजस्त्रीवदनाम्भोजदत्तदृष्टिर्हि भोजने ।
हासयामास लीलाभिः कोटिमन्मथसुन्दरः ॥ ४० ॥
सूचयामास सङ्केतस्थलानि व्रजयोषिताम् ।
दिवा विरहतप्तानां भ्रूविक्षेपैर्मनोहरैः ॥ ४१ ॥
कृतसीत्कारवदनो व्यञ्जनाद्युपपादितैः ।
मरीचिराजिकाद्रव्यैः शिरोऽप्यान्दोलयन्नपि ॥ ४२ ॥
मात्रादरविनिर्दिष्टहस्ताग्राहितवस्तुनः ।
पप्रच्छ स्वादुतां मातः कीदृशं चेति को रसः ॥ ४३ ॥
गोप्युक्तिश्रवणासक्तमानसोऽश्नन्नपि स्थितः ।
कथानीतामितीदं च वस्तुस्वादु पप्रच्छ च ॥ ४४ ॥
मात्रोक्ते नास्ति तद्रूपपश्यन्भावमुद्गिरन् ।
हस्ताभ्यां मोदकौ वृत्तौ आदायोत्तोलयन्मुहुः ॥ ४५ ॥
भवत्कुचनिभावेताविव्यसंसूचयन्दृशा ।
पिबन्काञ्चनपात्रेण तप्तं दुग्धं ससीत्कृतिः ॥ ४६ ॥
गोपीभ्यः सूचयामास स्वाधरामृतपानवत् ।
मातरानय शिक्यस्थं दध्यनम्लमिति प्रसूम् ॥ ४७ ॥
पाययित्वा व्रजस्त्रीणां मुखचुम्बनमादधे ।
ता अपि प्रोञ्छयामासुर्यशोदाभयतोऽधरान् ॥ ४८ ॥
तस्य तत्क्रीडितं वीक्ष्य गोप्योऽद्भुतरसाकुलाः ।
परस्परमुखालोकजातस्मितमुखाम्बुजाः ॥ ४९ ॥
दध्यादाय यशोदापि यावत्तत्राव्रजेत्तदा ।
भुञ्जन्नुत्थाय सहसा जननीं चेदमब्रवीत् ॥ ५० ॥

॥ श्रीकृष्ण उवाच ॥

मातः प्रयोजनं नास्ति दध्ना चान्यरसेन वा ।
पयोविकारो विकृतिं जनयत्येव निश्चितम् ॥ ५१ ॥
मया स्वादुसुधा पीता महानन्दविवर्धिनी ।

मुक्तामणिस्फुरत्स्वर्णपात्रस्था मृतजीविनी ॥ ५२ ॥
न चातः परमं किञ्चिन्मया स्वादुनिरूप्यते ।
अतो दधि न भोक्षेऽहमित्युक्ता गोपयोषितः ॥ ५३ ॥
सर्वतश्चारयंश्चक्षुर्मुदिता अकरोद्व्रजे ।
ततो यशोदा जननी पुत्रस्नेहरसाकुला ॥ ५४ ॥
हस्तस्नेहापनोदार्थं गन्धद्रव्यसमन्वितम् ।
ददौ चूर्णं स्वपुत्राय हस्तक्षालनकर्मणि ॥ ५५ ॥
क्षालयामास तद्धस्तौ कवोष्णेनैव वारिणा ।
मुखप्रक्षालनार्थाय ददौ वारि सुशीतलम् ॥ ५६ ॥
मुखपाणिप्रोञ्छनार्थमनुरागवती सखी ।
काचिद्ददौ हस्तवासः प्रेम्णा स्निग्धं सितं मृदु ॥ ५७ ॥
काचिदानीय झटिति मणिकाञ्चनभूषितम् ।
स्थापयामास शालायां आसनं परमोत्तमम् ॥ ५८ ॥
काचित्कर्पूरनाभ्यक्तचन्दनं द्रव्यचर्च्चितम् ।
तदङ्गमकरोत्प्रेम्णा तदङ्गस्पर्शसिद्धये ॥ ५९ ॥
हस्तौ विलेपयामास द्रव्येण च सुगन्धिना ।
पर्य्यधापयदेका तु तदङ्के कुसुमस्रजम् ॥ ६० ॥
एलालवङ्गकर्पूरनलदेन सुवासितम् ।
पानीयं शीतलं स्वच्छं स्वर्णपात्र (मयं) स्थितं चका ॥६१॥
रत्नपात्रेष्वधिष्ठाप्य काचित्ताम्बूलवीटिकाः ।
शशिनाभिलवङ्गैलावासिताः प्रददौ च का ॥ ६२ ॥
मायूरव्यजनेनाशु सखी काचित्सुरागिणी ।
वीजयामास चित्तज्ञा मन्द मन्दं पुरःस्थिता ॥ ६३ ॥
काचिच्छयनवस्त्राणि पर्य्यधापयदुत्सुका ।
समीपचकार हस्ताभ्यां काचिच्छय्यां सितच्छदाम् ॥६४॥
पादुकाजलपात्राणि हस्तवासश्च वीटिकाः ।
चन्दनद्रवसिक्तानि कुसुमव्यजनानि च ॥ ६५ ॥

उशीरव्यजनं चारु फलानि विविधानि च ।
पुत्रिका दीपहस्ताश्च भक्ष्याणि विविधानि च ॥ ६६ ॥
विविधा भोगसामग्री शय्याया निकटस्थले ।
स्थापयामास परितो यशोदा पुत्रवत्सला ॥ ६७ ॥

॥ यशोदोवाच ॥

वनभ्रमणखिन्नोसि पुत्र शय्यामिमां श्रय ।
शयनस्थो वने वृत्तमखिलं मे निवेदय ॥ ६८ ॥

गृहतश्चलितः स्वबालकैः पशुयूथानि पुरः प्रवर्तयन् ।
मधुरां मुरलीं निनादयन्वद केनेह पथा यथा गतः ॥ ६९ ॥
बहुकर्कशशर्करान्वितास्तृणदर्भाङ्कुरकण्टकैश्चिताः ।
वनभूमय आतपोल्वणाः कथमेतास्त्वमवातरत्सुत ॥ ७० ॥
कुत्र पुत्र भवता स्वगोधनं घर्मवर्षिणि सहस्रगौ स्थिते ।
चारितं घनपलाशपादपच्छायके किमथवातपाश्रये ॥ ७१ ॥
कुत्र पुत्र गृहतो विनिर्गतो गोपगोगणसमाजमध्यगः ।
वृक्षमूलमुपसृत्य संस्थितो भोजनं किमकरोन्मदर्पितम् ॥ ७२ ॥
कुत्र पुत्र किल गोपदारकैर्धावितं नयनमुद्रणादिकम् ।
आचचार विचरन्वनांतरे कानि कानि च फलान्युपाहरः ॥७३॥
पायिताः सुभग कुत्र धेनवः शृङ्गरञ्जनमकारि कुत्र वा ।
गैरिकादिभिरिदं वपुस्त्वया चित्रितं क्व वद मन्मुदे सुत ॥ ७४ ॥
मल्लयुद्धमपि गोपबालकैः श्रूयते तव कृतं जनान्तरात् ।
त्वत्पिता यदि जनाधिपः स्वयं वेत्ति ताडयति मा कुरुष्व तत् ७५
कुत्र गोधनमिदं वनान्तरे भ्रष्टमार्गमुपहूतमन्तिके ।
उन्नतां भुवमुपेत्य सादरं वेणुनादकृतसंज्ञया त्वया ॥ ७६ ॥
कुत्र गीतमनुभूतमुच्चकैः कोकिलाशुकषडंघ्रिगायकैः ।
सम्प्रसारितकलापमीक्षितं नीलकण्ठनटनर्तनं क्वचित् ॥ ७७ ॥
अग्रजस्य भवतश्च पक्षगैर्मल्लयुद्धमुपपादितं मिथः ।
तत्र के तव जिता बलस्य के के च के च बलिभिः पराजिताः॥७८॥

एतदन्यदपि यद्वनान्तरे त्वत्कृतं सकलमप्युदीरय ।
एष अप्यखिलसुन्दरीगणः सन्निशम्य मुदमेष्यति द्रुतम् ॥७९॥
इत्युदीरितमिदं व्रजेश्वरः सस्मिताननसरोरुहो मनाक् ।
प्राह मे जननि त्वत्कृपोदयात्काननं सुखदसम्भवद्भवेत् ॥ ८० ॥
तत्र तत्र नवकानने मया निर्भयोत्कटबलान्वितेन च ।
क्रीडनानि रचितानि साम्प्रतं कानि कानि पदमाप्नुयुः स्मृतेः ८१
यानि यानि जगति श्रुतानि वा दृष्टिमार्गमुपयान्ति भांति(यानि)च।
तानि तानि सकलानि वै मया बालभावचरितानि सेव्यते॥८२॥
कानने सकलसत्ववर्जिते धेनुकः खरसरूपधृक्स्वयम् ।
भीषयन्नुपगतोपि तत्क्षणादग्रजेन सह मे निपातितः ॥ ८३ ॥
तच्च तालवनमम्ब सुन्दरं सेव्यतेऽद्य किल गोगणैर्नृभिः ।
पात्यते च फलसंहतिः सुखं भुज्यते सकलगोपबालकैः ॥ ८४ ॥
तत्र नाण्वपि भयं त्वया प्रसो भावनीयमिह मत्कृते सदा ।
प्रीतये च न यथा गृहं भवेत्काननं मम सुखाय तद्यथा ॥ ८५ ॥
तत्र सन्ति फलपुष्पपत्रिणः पादपाः श्रमनुदः सहस्रशः ।
तत्र तत्र बहुपक्षिणां गिरः श्रूयते श्रुतिसुखावहाश्चिरम् ॥ ८६ ॥
यत्र वर्त्मनि गता वयं प्रसो तत्र तत्र हरिणाङ्गनाजनः ।
प्रेमपूर्णविनिमेषलोचनैर्मन्मुखं पिबति विश्वगास्थितः ॥ ८७ ॥
आतपे व्रजपशून्विनीषतः पद्मकोमलमवेत्य मन्मुखम् ।
आतपत्रमिव वारिदोम्बरे स्वं वपुः प्रकुरुतेम्बु विक्षिपन् ॥ ८८ ॥
पादपायतभुजेषु संस्थिताः पक्षिणः शुकपिकादयोपरे ।
वेणुनादहृतचित्तवृत्तयः स्वां गिरं च परिमुद्रयन्त्यहो ॥ ८९ ॥
गोगणः सपदि वेणुकूजितं सन्निशम्य दशनान्तराहितम् ।
उन्नयन् श्रुतियुगं स्वसंमुखो नो भुनक्ति कवलं रसातुरः ॥९०॥
चेतना इव निशम्य तद्रवं वृन्तमुक्तकुसुमच्छलेन ते ।
अश्रुसन्ततिमिवासृजन्त्यहो पादपाः समनुविद्धचेतसः ॥ ९१ ॥
नास्ति वैरं जातिसिद्धं सत्वानां च परस्परम् ।

न बाधतेऽल्पं प्रबलो न बली बलवत्तरम् ॥ ९२ ॥
तस्माच्चिन्ता न कर्तव्या मदर्थेम्ब कदाचन ।
अग्रजो बलवान्रक्षां करोति मम सर्वतः ॥ ९३ ॥
सहाया अपि मे सन्ति श्रीदामाद्याः सहस्रशः ।
न वियुक्तश्चराम्येकस्तेभ्यो मातस्तवाज्ञया ॥ ९४ ॥
एवं विवदतोस्तत्र बलः प्राह यशोमतीम् ।
सखीसमक्षं कृष्णस्य स्वयं प्रकृतिरीश्वरः ॥ ९५ ॥

॥ बलभद्र उवाच ॥

मातर्भयं त्वया नैव कर्तव्यं हि कदाचन ।
न चास्य प्रतिकर्तारः सन्ति क्वापि कदापि च ॥ ९६ ॥
नायमस्मत्सहायेन सुखी भवितुमर्हति ।
एतस्यैव सहायेन सुखिनो वयमेव हि ॥ ९७ ॥
माहात्म्यमस्य विज्ञातुं प्रवक्तुं च व्रजेश्वरि ।
नाहं शक्तो न चान्येऽपि येऽपि ब्रह्मविदोमलाः ॥ ९८ ॥
इति बलवचनं स्फुटं निशम्य प्रगुणितहर्षरया व्रजेश्वरी सा ।
करकमलयुगेन पुत्रवक्त्रं दृढमुपगृह्य चुचुम्ब चालिलिङ्ग ॥ ९९ ॥
स्वापयित्वा च पर्यङ्के पुष्पव्यजनवायुना ।
वीजयामास चार्वङ्गी पुत्रं प्रणयविह्वला ॥ १०० ॥
इति साक्षात्प्रपश्यन्तो लीलां सर्वे दिवौकसः ।
क्षणात्तिरोहितां वीक्ष्य ममज्जुर्विस्मयाम्बुधौ ॥ १०१ ॥

इति श्रीपुराणसंहितायां सिद्धान्तसारे गोलोकलीला-
दर्शनं नामाष्टादशोऽध्यायः ॥ १८ ॥
आदितः श्लोकानां समष्ट्यङ्काः ॥ ११८३ ॥

# एकोनविंशोऽध्यायः ॥ १९ ॥

॥ वेदा ऊचुः ॥

अथ ते त्रिदशाः सर्वे प्रस्थिता ददृशुः समम् ।
हैयङ्गवीनहरणे गोपिकाभिरनुद्रुतम् ॥ १ ॥
वायुलोलालकं श्रीमद्बद्धकच्छं सधूसरम् ।
हठादनुद्रुत्य(त्य) तदा मिलित्वा दशपञ्च च ॥ २ ॥
कृष्णं च जगृहुः प्रीत्या कटिदेशे निधाय च ।
उत्तरीयाञ्चलेनैव समाच्छाद्य समन्ततः ॥ ३ ॥
यशोदायै दर्शयितुं साक्षात्पुत्रस्य चेष्टितम् ।
पुत्रापराधानश्रद्दधानायै विशेषतः ॥ ४ ॥
जग्मुस्तन्निकटे हृष्टाः स्मेरवक्त्राः परस्परम् ।
तामेत्योचुर्भो यशोदे वार्यतामात्मजो बलात् ॥ ५ ॥
न शक्नुमो व्रजे स्थातुं तव पुत्रानयेन च ।
दधीनि नवनीतानि पयांसि च मधूनि च ॥ ६ ॥
भुङ्क्ते विभज्य बालेभ्यो मर्कटेभ्यो ददात्यपि ।
क्रोशयत्येव बालांश्च पात्राण्यपि भिनत्ति च ॥ ७ ॥
वत्सान्मुञ्चत्यकालेऽपि कुपिता नो हसत्यपि ।
प्रविश्यान्तर्गृहं चौरः केनापि ह्यविलक्षितः ॥ ८ ॥
सभाण्डपक्वान्नचयं गृहीत्वा चत्वरे स्थितः ।
विभज्याऽश्नाति बालेभ्यः श्वमार्जारेभ्य एव च ॥ ९ ॥
भाण्डभेदन्ततः कृत्वा भाण्डखण्डाननेकशः ।
क्रोशन्तीनां तदास्माकं सम्मुखं प्रक्षिपत्यसौ ॥ १० ॥
तदास्य ग्रहणायैव उद्युक्ता नो निरीक्ष्य च ।
पलायनं च कुरुते ज्ञात्वास्मांस्तत्र यूथशः ॥ ११ ॥
अन्योन्यकथनासक्ताः पश्चाद्द्वारेण वै पुनः ।
प्रविश्य गृहमेकाकी कृतसङ्केतबालकान् ॥ १२ ॥

प्रवेशयित्वा यत्किंचिदवशिष्टं रसादिकम् ।
मध्वाज्यदधिदुग्धानि भोजयित्वा यथारुचि ॥ १३ ॥
ततो भित्तिषु काष्ठेषु कपाटेषु च वास्तुषु ।
अवशिष्टस्य भागस्य लेपनं कुरुते भृशम् ॥ १४ ॥
गृहभूमौ विकिरति वत्सेभ्यः खादयत्यपि ।
कदाचित्तु गृहस्यैव ऊर्ध्वभूमौ निलीय च ॥ १५ ॥
तिष्ठन्विजनमालक्ष्य शनैरुत्तार्य यत्नतः ।
निःशब्दं द्वारमुद्धाट्य प्रवेशयति चापरान् ॥ १६ ॥
तैर्ग्राहयित्वा भाण्डानि दधिदुग्धभृतान्यपि ।
याति वेगेन केनापि प्रकारेणापि वञ्चयन् ॥ १७ ॥
गत्वा रहसि भाण्डस्थं प्राश्य सर्वं च बालकैः ।
ततः कर्दमपूर्णानि भाण्डानि विधाय च ॥ १८ ॥
आरोप्य शिक्येषु पुनर्यथापूर्वं तवात्मजः ।
वञ्चयित्वा च नश्चक्षुर्यथा यात्येन्द्रजालिकः ॥ १९ ॥
ततः क्षणान्तरे साधुवदनः शान्तलोचनः ।
अचञ्चलो नातिवादी शान्तधीरुपतिष्ठति ॥ २० ॥
प्रशान्तनयनं ब्रूते क्षुधितोऽस्मि चिरादहम् ।
मात्रा सन्ताडितश्चास्मि दत्तं नाहार्यमण्वपि ॥ २१ ॥
इहायातोऽस्म्यहं तस्माद्देहि खाद्यं क्षुधातुरः ।
दध्नो भाण्डमिहानीय दर्शयित्वा समुद्धर ॥ २२ ॥
अन्यथोपरिभागस्थं दधि त्वमपनेष्यसि ।
इत्यस्य वचने श्रद्धां धारयन्ती गृहस्थलात् ॥ २३ ॥
आनीय पात्रमस्याग्रे स्थापयन्ती पुरः स्थिता ।
उद्धाटयेति चाप्युक्ता यावदुद्धाटयाम्यहम् ॥ २४ ॥
अपश्यं पङ्किलापूर्णं मेने चास्यैव चेष्टितम् ।
उक्तं मया तदा चास्मै तवैवैतद्विचेष्टितम् ॥ २५ ॥
दधिपूर्णे च पात्रेऽस्मिन् यज्जम्बालनिवेशनम् ।

एवं मयोक्ते कुपितः पङ्कमादाय भाण्डगम् ॥ २६ ॥
हस्तेन त्वरयाऽऽक्षिप्य मुहुर्याति मुखे हसन् ।
दूरस्थो नृत्यते भूरि कक्षाध्वनिमुदीरयन् ॥ २७ ॥
कथयिष्ये मातुरग्रे प्रार्थिते दध्नि मे प्रभोः ।
मुहुर्दधि कुतो दध्नि जग्धि पङ्कमतः परम् ॥ २८ ॥
इत्युक्त्वा दर्शितं मेऽद्य भाण्ड पङ्किलपूरितम् ।
एवंविधान्यनेकानि चेष्टितानि तवात्मजः ॥ २९ ॥
कुरुते कं प्रति ब्रूमो भवती न शृणोति चेत् ।
इत्युक्त्वा दर्शयामास यशोदायै सुतं स्वकम् ॥ ३० ॥
स्वसूनुरेव ददृशे तया विस्मितचेतसा ।
कृष्णस्तु स्वगृहादाविर्बभूवाशु स्मिताननः ॥ ३१ ॥
तदा यशोदा प्रोवाच दृष्ट्वा पुत्रं गृहोद्गतम् ।
एवमेव सदा यूयमपराधयुजोऽर्भके ॥ ३२ ॥
नास्ति किं मे गृहे भूरि नवनीतादिकं दधि ।
भवतीनां गृहादेष प्रार्थयेद्यद्बुभुक्षितः ॥ ३३ ॥
सन्ति मेऽम्ब गृहे भूरि नवनीतदधीनि च ।
अरक्षितानि सततं भुङ्क्ते स्वैरमशङ्कितम् ॥ ३४ ॥
चौर्यं करोतीति सदा मुहुरुक्तः सुतो मम ।
नाश्नात्यन्नं दधि पयो लोकवादेन गर्हितः ॥ ३५ ॥
एवमेवालीकवादं किमर्थं ब्रूत गोपिकाः ।
बालकः किं विजानाति चौर्यं गोपितवस्तुनः ॥ ३६ ॥
चञ्चलत्वात्समायाति क्रीडार्थं भवतीगृहे ।
मया निषेध्यमानोऽपि बोध्यमानोपि नित्यदा ॥ ३७ ॥
मया (सं)यं शिक्षितः सम्यक्परगेहगतिं प्रति ।
त्वया पुत्र न गन्तव्यं गोपिकानां गृहेषु च ॥ ३८ ॥
सन्त्यस्माकं गृहे भूरि दधिदुग्धघृतानि च ।
तान्येव निर्भयो भुङ्क्ष्व मा चौर्येणाहर क्वचित् ॥ ३९

सद्भिर्विगर्हितं चौर्यमस्माकमयशस्करम् ।
एकः पुत्रोऽपि नाप्नोति स्वगृहे हार्यमुत्तमम् ॥ ४० ॥
यस्मात्परगृहे चौर्यं कृत्वा जीवति पुत्रकः ।
एवं हि कथयिष्यन्ति लोकाः सर्वेऽयशः स्फुटम् ॥ ४१ ॥
किमस्माकं गृहे नास्ति गोमहिष्यादिकं धनम् ।
व्रजराजसुतो भूत्वा नैतत्कर्तुं त्वमर्हसि ॥ ४२ ॥
यदि त्वं क्रीडनासक्त्या परसद्मानि यासि भोः ।
तदाहूय गृहे बालान्मित्रभूतान्सहस्रशः ॥ ४३ ॥
क्रीडस्व निर्भयो नूनं यथारुचि गतश्रमः ।
वयस्येभ्योऽपि ते पुत्र दास्यामि दधिगोरसान् ॥ ४४ ॥
अन्नं चाति (रसं) गुणं भूरि चतुर्विधमनुत्तमम् ।
परगृहे गतो भुञ्जन्दृष्टिदोषेण लिप्यसे ॥ ४५ ॥
जायते महती पीडा जठरे (जयते) दुर्विनीत भोः ।
बहिर्भ्रमणयोग्यो हि नास्ति पुत्र यतो भवान् ॥ ४६ ॥
न मत्प्रणीतं कुरुषे स्वेच्छाधीनोऽसि पुत्रक ।
न मेऽन्ये तनयाः सन्ति न भविष्यन्त्यतः परम् ॥ ४७ ॥
प्राणाधारस्त्वमेवैको यस्मद्भाग्यादुपस्थितः ।
पित्रोरपयशो लोके न प्रसारय सर्वथा ॥ ४८ ॥
एवं प्रबोध्यमानोऽपि प्रतिक्षणमहर्निशम् ।
बालकत्वान्न जानाति पुनरायाति वो गृ(हान्)हम् ॥४९॥
इदानीं तु मया दृष्टं भवतीनां व्रजस्त्रियः ।
सत्यवाक्त्वमभिव्यक्तं स्वपुत्रानयनेन यत् ॥ ५० ॥
ये केचित्कुर्वते बाला अपराधान् गृहागताः ।
तत्सर्वममुनैकेन कृतं च तनुजेन मे ॥ ५१ ॥
अतः परं न मन्तव्यं भवतीनां वचोऽनृतम् ।
न ताडनीयः सततं पुत्रः प्राणाधिको मया ॥ ५२ ॥
यशोदाया वचः श्रुत्वा दृष्ट्वा कृष्णं गृहाद्गतम् ।

दृष्ट्वानीतं स्वतनयं गोप्योऽभूवन्सुलज्जिताः ॥ ५३ ॥
अधोमुख्यः पदाङ्गुष्ठसमुत्खातभुवः किल ।
न शेकुरुत्तरं वक्तुं प्रत्यक्षानुभवाच्चयोः ॥ ५४ ॥
कृष्णः प्राह तदा हृष्टो मातरं स्वां यशस्विनीम् ।
शृण्वन्तीषु व्रजस्त्रीषुं तन्मुखार्पितलोचनः ॥ ५५ ॥

॥ श्रीकृष्ण उवाच ॥

मातरेवं प्रतिदिनमलीकवचसोऽबलाः ।
प्रत्यहं भवतीमेत्य मां ताडयितुमुद्यताः ॥ ५६ ॥
नैतासां वचनं मातर्मन्तव्यं ते कदाचन ।
परापराधान्मय्येव सर्वानारोपयन्ति याः ॥ ५७ ॥
अहं कस्या अपि गृहं न गच्छामि कदाचन ।
नयन्ति स्वगृहं ह्येता रमन्तं स्वगृहाङ्गणे ॥ ५८ ॥
गृहस्यान्तर्गृहं नीत्वा वं(रो)चनाभिरिमाः स्त्रियः ।
स्थापयित्वा करौ(रं) कण्ठे दृढमालिङ्गयन्ति माम् ॥ ५९ ॥
चुम्बन्ति मुखपद्मं मे प्रेरयन्ति तथैव माम् ।
चुम्ब स्वदन्तदलनमधरे नः समाचर ॥ ६० ॥
मत्पाणी कुरुते स्वीयकुचेषु कठिनेषु च ।
नर्तयन्ति च मामेता दधिदुग्धादिलोभनैः ॥ ६१ ॥
गृहकार्याणि सततं कारयन्ति मया प्रभो ।
गृहकोणे स्थितं चेदं मुशलं त्वमिहानय ॥ ६२ ॥
आनयस्वोलूखलं च मानं सूर्पं च पादुकाम् ।
पीठं रज्जुं तथा चान्यदानेतुं मां दिशन्ति च ॥ ६३ ॥
ततः प्रसन्नाः किमपि खाद्यं मह्यं ददत्यपि ।
बालकेभ्यो विभज्याहं भुक्त्वा(दत्त्वा)यामि यतस्ततः ॥६४॥
अतः परतरं किञ्चिद्वदन्ति व्रजयोषितः ।
अलीकमेव तत्सर्वं माननीयं त्वया प्रभो ॥ ६५ ॥
एता वदन्ति मां नित्यमानीय स्वगृहान्तरम् ।

उत्तानायाश्च मे वक्षस्यपि त्वं शयनं कुरु ॥ ६६ ॥
कथं शये हृदि ह्यासां पाषाणकठिनस्तने ।
इति मत्वा च नेत्युक्ते भीषयन्ति तदा हि माम् ॥ ६७ ॥
वृथापराधमातुरग्रे कथयिष्यामहे वयम् ।
यथा त्वां ताडयत्येषा करिष्यामो वयं तथा ॥ ६८ ॥
तस्मादेताश्च भो मातस्तवाग्रे कथयन्ति च ।
ममापराधान्वृथा न मन्तव्यास्त्वया क्वचित् ॥ ६९ ॥
किं नास्त्यस्मद्गृहे भूरि यत्परेभ्योऽहमर्थये ।
त्वद्दत्तभक्ष्यभोज्यादितृप्त एव चराम्यहम् ॥ ७० ॥
न पुनर्भक्षणे श्रद्धा जायते मे कदाचन ।
यदि वा जायते मातस्त्वं कियद्दूरगासि भोः ॥ ७१ ॥
नन्दराजस्य पुत्रोऽहं भूत्वाऽऽसां क्षुद्रयोषिताम् ।
गृहे गत्वार्थयामीति लज्जा मे जायते न किम् ॥ ७२ ॥
इति कृष्णवचः श्रुत्वा लज्जया नम्रकन्धराः ।
न किञ्चनोचुः प्रमदा धाष्टर्यमोहितमानसाः ॥ ७३ ॥
एवं यशोदागोपीनां कृष्णस्य च परस्परम् ।
विवादलीलामाश्रुत्य दृष्ट्वा साक्षादिव स्वयम् ॥ ७४ ॥
ब्रह्माद्या देवताः सर्वाः प्रमोदभरमानसाः ।
किञ्चित्स्तोतुं मनश्चक्रुस्तावल्लीला तिरोदधे ॥ ७५ ॥
तिरोहितायां लीलायां देवा आश्चर्यसागरे ।
ममज्जुरेतत्किमिदं दृष्टमात्रं तिरोहितम् ॥ ७६ ॥
धैर्यमालम्ब्य च पुनर्व्रजन्तो ददृशुः स्फुटम् ।
नृत्यन्तं काद्रवेयस्य फणामण्डलराजिषु ॥ ७७ ॥
फणारत्नस्फुरद्दीप्तिदीप्यमाननखप्रभम् ।
अधरामृतसंसिक्त मुरलीवादनोत्सुकम् ॥ ७८ ॥
अथ कुत्रापि ददृशुर्बद्धकच्छशिरोरुहम् ।
गृहीत्वा पाणिना चञ्चुं दारयन्तं बकं बलात् ॥ ७९ ॥

कुत्रापि दहशुर्देवा महासर्पगलान्तरे ।
प्रविशन्तं गोपबालैः स्फोटयन्तमहेस्तनुम् ॥ ८० ॥
जीवयन्तं गोपबालान्स्तूयमानं सुरैरपि ।
अभिवृष्टं च कुसुमैः स्वमित्रैरपि संस्तुतम् ॥ ८१ ॥
अथ कुत्रापि दहशुर्गोपमण्डलमध्यगम् ।
भोजयन्तं च भुञ्जन्तं हासयन्तं सदुक्तिभिः ॥ ८२ ॥
स्वमित्रप्रीतये तस्मादुत्थाय पशुमार्गणे ।
जगाम तावदासाद्य विधिरेताञ्जहार च ॥ ८३ ॥
वत्सान्पालांश्च सहसा तद्विज्ञाय विधेः कृतम् ।
तावद्रूपो ययौ कृष्णस्तन्मातॄणां प्रियङ्करः ॥ ८४ ॥
विधिः कदाचिदासाद्य यथापूर्वमवस्थितम् ।
दृष्ट्वा कुतूहलाक्रान्तः क एते वत्स(पा)बालकाः ॥ ८५ ॥
तावत्सर्वे घनश्यामाः पीतकौशेयवाससः ।
किरीटकुण्डलधरा वनमालाविभूषिताः ॥ ८६ ॥
प्रत्येकं ब्रह्मरुद्राद्यैः सेव्यमानाः समन्ततः ।
अदृश्यन्त वनोद्देशे विरञ्चिर्विस्मयं ययौ ॥ ८७ ॥
क्षणादेव ततः सर्वे कृष्णदेहे तिरोहिताः ।
एक एव ततः कृष्णः स्थितः कवलपाणिना ॥ ८८ ॥
विलज्जितमना भूत्वा स्तुत्या तुष्टाव तं विधिः ।
प्रणनाम धरापृष्ठे लग्नहृद्बाहुमस्तकः ॥ ८९ ॥
एवंविधा महालीलादर्शनोद्भ्रान्तमानसः ।
उवाच हरिरुद्रेशान्विरञ्चिर्विस्मयाकुलः ॥ ९० ॥
अहो महाश्चर्यमिदं दृष्टं वो जगदीश्वराः ।
मन्नामरूपवसनाकारगुणवाहनाः ॥ ९१ ॥
विरञ्चयो बहुविधाः स्तुवन्तोऽस्माभिरीक्षिताः ।
विष्णवो विश्वनेतारः स्तुवन्तस्ते समीक्षिताः ॥ ९२ ॥
चञ्चच्चन्द्रांशुधवला जटाभस्मविभूषणाः ।

चन्द्रालङ्कृतमूर्धानः कति रुद्रा न वीक्षिताः ॥ ९३ ॥
कियन्तो विष्णवः सन्ति रुद्रा अपि कति स्थिताः ।
ब्रह्माणः कति वा सन्ति नामरूपगुणैः समाः ॥ ९४ ॥
क(त) एते सन्ति कुत्रस्थाः स्वस्वब्रह्माण्डविच्युताः ।
शर्करेवाप्सु न कथं ब्रह्मण्येकत्वमागताः ॥ ९५ ॥
इत्याश्चर्यरसाम्भोधौ निमग्नमनसः सुराः ।
तर्कयन्तश्चिरं यातास्तस्यै कृत्वा दिशे नमः ॥ ९६ ॥

इति श्रीमत्पुराणसंहितायां सिद्धान्तसारे ब्रह्मादीनां विस्मयोद्भवो नाम एकोनविंशोऽध्यायः ॥ १९ ॥
आदितः श्लोकानां समष्ट्यङ्काः ॥ १४७९ ॥

---

## विंशोऽध्यायः ॥ २० ॥

॥ वेदा ऊचुः ॥

अथ ते त्रिदशाः सर्वे ब्रह्मरुद्रपुरोगमाः ।
गोलोकमविशंश्चित्रं गोपगोपीजनाकुलम् ॥ १ ॥
नवरत्नविचित्रेण हेमशालेन वेष्टितम् ।
चतुर्भिर्गोपुरद्वारैरिन्द्रनीलकपाटकैः ॥ २ ॥
उद्यानैः परितो रम्यैः शोभमानं सुपुष्पितैः ।
उपासितैर्नीलकण्ठशुकपारापतैः पिकैः ॥ ३ ॥
आविर्भूतमहाशोभैर्मन्दिरैर्मणिमेदुरैः ।
सहस्रस्तम्भसन्नद्धैः सुवर्णकलशोज्वलैः ॥ ४ ॥
अलङ्कृतं हेमरत्नवेदिकाभिर्गृहे गृहे ।
शुद्धस्फटिकसंक्लृप्तराजमार्गं श्रियोल्लसत् ॥ ५ ॥
पद्मरागेन्द्रगोमेदहीरकोज्ज्वलतोरणम् ।
रत्नदण्डध्वजशतैः पताकाभिश्च शोभितम् ॥ ६ ॥
स्फटिकमणिमयश्रीमार्गसञ्चारिणीना-
मलधुकुचनितम्बाक्रान्तगत्या वधूनाम् ।

चरणनिहितरत्नोद्दाममञ्जीरनाद,
श्रवणसुखसमुद्रोद्वेलमादर्शयन्तम् ॥ ७ ॥
विविधविपुलसौधोद्दामवातायनेभ्यः
प्रसरदगुरुधूपोद्गारधूम्रान्तरालम् ।
मधुरमृदुमृदङ्गध्वानवाचा लशा (रसा) लं
वियदिव घनराजिक्रान्तमन्तःसनादम् ॥ ८ ॥
युगपदुदितभास्वच्चन्द्रकोटिप्रकाश-
प्रतिहतपटुरत्नद्योतविद्युन्निवासम् ।
मणिसदनसमुत्थज्योतिरालिप्तमार्ग-
ग्रथितविशदमुक्ताराजिताराभिरामम् ॥ ९ ॥
कोटियोजनमानेन विस्तृतं समवर्तुलम् ।
स्वप्रकाशं चिदानन्दरसाम्भोधिरनुत्तमम् ॥ १० ॥
यस्य पूर्वदिशि द्वारे पार्षदप्रवरो महान् ।
त्रिलक्षगोपसंवीतो राजते रजनीकरः ॥ ११ ॥
प्रस्फुरद्रत्नमुकुटो लसन्मकरकुण्डलः ।
पीताम्बरधरः स्रग्वी ललिताकृतिसुन्दरः ॥ १२ ॥
श्यामावदातः सुमुखः पद्मगर्भारुणेक्षणः ।
श्वेतचन्दनलिप्ताङ्गो मणिदण्डधरः करे ॥ १३ ॥
दक्षिणस्यां दिशिद्वारे महानीलकपाटके ।
त्रिलक्षगोपसंवीतो विद्युन्मालीति विश्रुतः ॥ १४ ॥
पार्षदप्रवरः साक्षाद्धेमाभरणभूषितः ।
विलसद्रत्नमालाभिर्विद्योतितभुजान्तरः ॥ १५ ॥
नीलरत्नविचित्रेण हैमदण्डेन भूयसा ।
राजमानकराम्भोजो रसनाविलसत्कटिः ॥ १६ ॥
प्रत्यक्द्वारे नीलरत्नकपाटवति सुन्दरे ।
पार्षदप्रवरः साक्षाच्चित्रबाहुर्महाभुजः ॥ १७ ॥
किरीटीकुण्डलधरो वनमालाविभूषितः ।

प्रवातपद्मनयनो रक्तचन्दनचर्चितः ॥ १८ ॥
कपाटवक्षोविभ्राजन्मुक्ताहारविराजितः ।
मुक्ताखचितहैमेन दण्डेन विलसत्करः ॥ १९ ॥
उत्तरद्वारमाश्रित्य रत्नपालीति विश्रुतः ।
नीलाम्बरधरः स्रग्वी रणत्काञ्चननूपुरः ॥ २० ॥
प्रफुल्लगल्लवदनः पीतचन्दनचर्चितः ।
अनर्घ्यमाणिक्यलसन्मुकुटाटोपमण्डितः ॥ २१ ॥
कर्णविन्यस्तमकराकृतिकुण्डलदीपितः ।
हेमदण्डधरो गोपलक्षत्रयनिषेवितः ॥ २२ ॥
अथ तेषां प्रविष्टानां पश्यतां गोपुरश्रियम् ।
चेतांसि विविशुः साक्षाच्चिदानन्दमहाम्बुधिम् ॥ २३ ॥
सौधकुट्टिमराजीनां मणिस्तम्भावलीषु च ।
संक्रान्तप्रतिबिम्बासु बहुरूपा इवाभवन् ॥ २४ ॥
दूरात्ते ददृशुर्देवास्तेज कूटमिवोत्थितम् ।
भानुकोटिप्रतीकाशं चन्द्रकोटिसुशीतलम् ॥ २५ ॥
चिदानन्दमयं दिव्यमनन्तं सर्वतोमुखम् ।
तस्मिन्निलीनं ददृशुर्गोलोकमखिलं सुराः ॥ २६ ॥
दृष्ट्वा तत्तेजसः कूटमाश्चर्यमनसोऽभवन् ।
आविर्भूतं च सहसा किमेतत्तेज अद्भुतम् ॥ २७ ॥
कुतः कस्येति किं चेति विमृशन्तोऽपि नाययुः ।
ततः क्षणान्तरे तस्मिन्नाविरासीन्महाद्भुतम् ॥ २८ ॥
महाचिन्तामणिव्रातरचितं भुवनं महत् ।
मणिस्तम्भसहस्रैश्च ध्रियमाणं समन्ततः ॥ २९ ॥
लक्षसोपानसञ्चारं सात्प्रभामं श्रियोज्वलम् ।
इन्द्रनीलस्फुरच्छालवेष्टितं विश्वदर्पणम् ॥ ३० ॥
दिव्योद्यानसहस्रैस्तु रत्नराजितभूमिकैः ।
कदम्बपारिजातैश्च कल्पवृक्षैश्च चन्दनैः ॥ ३१ ॥

बकुलैः कोविदारैश्च चम्पकैः स्थलपङ्कजैः ।
दिव्यरत्नशिलाबद्धसरसीभिरलङ्कृतैः ॥ ३२ ॥
कूजद्धंसमयूरैश्च धावद्धरिणराजिभिः ।
कूजद्विहङ्गमकुलकलरावमनोहरैः ॥ ३३ ॥
मकरन्दरसास्वादमत्तभृङ्गकृतास्पदैः ।
कुञ्जकुञ्जान्तरालेषु क्रीडागृहशतैर्युतम् ॥ ३४ ॥
न यत्र प्राकृता दोषा गुणा वा सन्ति केचन ।
गुणदोषोभयातीतमानन्दं पदमेव यत् ॥ ३५ ॥
चिन्तामणिगृहं दिव्यं केवलानन्दरूपकम् ।
दृष्ट्वा मुमुदिरे तेषां चेतांसि रसमज्जनात् ॥ ३६ ॥
षोडशद्वारसंस्थानां द्वारपानां तदाज्ञया ।
क्रमेण चरमं द्वारमापन्नास्त्रिदशेश्वराः ॥ ३७ ॥

॥ देवा ऊचुः ॥

दौवारक दयासिन्धो ब्रह्माण्डाधीश्वरान् हि नः ।
दर्शनार्थमिहायातान् ब्रूहि विश्वेश्वराय हि ॥ ३८ ॥
द्वारपालस्त्वेवमुक्तो गत्वा तन्मन्दिरान्तरम् ।
कथयामास तत्सर्वं पूर्णाय परमात्मने ॥ ३९ ॥
भो भो महाराज वचः श्रोतव्यं श्रूयतामिह ।
द्वारि तिष्ठन्ति ब्रह्माण्डनायकाः पञ्च विश्रुताः ॥ ४० ॥
दर्शनार्थं समायातास्तेषु चाज्ञा विधीयताम् ।
अप्रवेश्या प्रवेश्याः वा यत्कर्तव्यमुदीर्यताम् ॥ ४१ ॥
निशम्य वचनं तस्य द्वारपालस्य नित्यराट् ।
अनुग्रहपरो नूनमुवाच वचनं तदा ॥ ४२ ॥
मत्प्रेरिताक्षरदृशा जायन्ते ह्यण्डराशयः ।
न शक्यते तद्गणनं कर्तुं युगशतैरपि ॥ ४३ ॥
यथा कीटाः प्रजायन्ते औदुम्बरफलान्तरे ।
तथा ब्रह्माण्डमध्ये तु ब्रह्माण्डाधीश्वराः स्थिताः ॥ ४४ ॥

तस्मात्पृच्छस्व तान् गत्वा कस्माद्ण्डादिहागताः ।
किंनामानो भवन्तश्च किं कार्यं वो भवेदिह ॥ ४५ ॥
दौवारकोपि तच्छ्रुत्वा पुनरागत्य तान्सुरान् ।
पप्रच्छ यूयं भो कस्माद्ब्रह्माण्डादिह सङ्गताः ॥ ४६ ॥
कथ्यतां स्वस्वनामानि हेतुमागमनेऽपि च ।

॥ ब्रह्मोवाच ॥

सुमुखं नाम ब्रह्माण्डमस्ति दिव्यं महाद्भुतम् ॥ ४७ ॥
चतुर्विंशतिशाखाढ्य पञ्चस्कन्धं त्रिमूलकम् ।
एकाङ्कुरं चैकबीजं चिदाभासामृतोक्षितम् ॥ ४८ ॥
अश्वत्थरूपं परममनादिबीजबन्धनम् ।
यस्याधः कल्पिताः सप्त लोका ऊर्ध्वं च सप्त च ॥४९॥
ऊर्ध्वं च सप्तमो लोकः सत्यलोक इति स्थितः ।
कोट्यष्टको योजनानां भूर्लोकादुपरिस्थितः ॥ ५० ॥
तल्लोकनायकश्चास्मि विरंचिरिति नामतः ।
तस्माद्प्यष्टकोटियोजनाना प्रमाणतः ॥५१॥
वैकुण्ठः परमो लोको न्यासिनां या परागतिः ।
तल्लोकाधिपतिः सोयं विष्णुर्विश्वैकपालकः ॥ ५२ ॥
असौ रुद्रो महायोगी जगतामीश्वरेश्वरः ।
कैलासवासी विश्वात्मा काले तामसरूपधृक् ॥ ५३ ॥
अयं त्वीश्वर इत्युक्तो नाम्ना सर्वेश्वरो महान् ।
वायुतत्वास्थित इति तिरोधानकरो लये ॥ ५४ ॥
असौ सदाशिवः साक्षाद्बिन्दुरूपी परात्परः ।
आकाशतत्वाधिष्ठाता सर्वानुग्रहकारकः ॥ ५५ ॥
यस्माद्वयं समुद्भूतास्तदीशनसमीहया ।

---

१, २४ तत्त्वानि । २, ५ तत्त्वानि । ३, त्रयो गुणाः । ४, १ जीवः ।
५, वासनाबीजम् ।

आगताः स्म वयं सर्वे इत्येतद्विनिवेदय ॥ ५६ ॥
इति सञ्चोदितो देवैर्द्वारपालो न्यवेदयत् ।
तथैव नामकर्माणि स्थानानि च महात्मनाम् ॥ ५७ ॥
अथ ते देवपतयः सच्चिदानन्दमूर्तिना ।
आकारितास्तन्निकटमनुजग्मुः प्रहर्षिताः ॥ ५८ ॥
श्रीराधाकृष्णयुगलमेकासनगतं तदा ।
तद्देहतेजसाक्षिप्तलोचना द्रष्टुमक्षमाः ॥ ५९ ॥
तुष्टुवुर्दीनमनसः प्रबद्धाञ्जलयः समम् ।
स्तुत्यं स्तुतिभिरर्थ्याभिः प्रणमन्तोवनीतले ॥ ६० ॥

॥ ब्रह्माद्या ऊचुः ॥

प्रणमामि सदा पुरातनं परमज्योतिरुदारदर्शनम्
शरणागतभक्तवत्सलं जगदानन्दमखण्डमीश्वरम् ॥ ६१ ॥
क इहास्ति भवत्पदाम्बुजस्मरणानुग्रहक्लेशवर्जितः ।
महिमानमवैतुमुत्सहेन्निगमानामपि यो न गोचरः ॥ ६२ ॥
तदिदं हृदि शल्यमर्पितं परमानन्दपदे चिरं त्वयि ।
अनवाप्य रतिं श्रमातुरा भवसंतापजुषोऽपि पण्डिताः ॥ ६३ ॥
यदि नाथ तवैव मायया जगदेतत्प्रकटीकृतं तदा ।
किमिति प्रथयन्ति वासनां ममताहंकृतिलम्बिनीं मुधा ॥ ६४ ॥
यदि कश्चन सत्समागमावसरे त्वद्गुणकीर्तनाम्बुधौ ।
अभिषिक्तमतिः प्रलम्भितं मलमुत्सारयतीह मायया ॥ ६५ ॥
जगदेव भवांस्तदीश्वरो जगतो दूरचरोऽपि तद्गतः ।
न करोषि न लिप्यसेऽपि चेज्जगतः कारणमामनन्त्यहो ॥६६॥
जगदात्मन अक्षरस्य चेत्प्रकृतेरध्यसनादिदं जगत् ।
तव किं च तदन्तरात्मनः परमानन्दतरङ्गवारिधेः ॥ ६७ ॥
परिकल्पितभोगिहेतुतामयसम्बन्धवशेन स्रग्यथा ।
भयहेतुतया प्रतीयते न तथा त्वं प्रकृतेः सुदूरगः ॥ ६८ ॥
भवदीयकथासुधारसद्रवसिक्तं परिप्रश्नकर्षितम् ।

अपनीतकुतर्ककर्करं मन आनन्दफलेन युज्यते ॥ ६९ ॥
गुणजातिविजातिवर्जितं परमज्योतिरुपासते बुधः ।
तदवैमि भवत्तनूरुहोद्गलितं धाम तमोनिरासकृत् ॥ ७० ॥
अतिशुद्धसमाधिधौतया न हि बुध्यापि विचारगोचरम् ।
तव रूपमिदं तथाप्यहो किमपि प्रेमभरोपबन्धनम् ॥ ७१ ॥
सरसीव घृतैलबिन्दुनाम्रियतेन्तः पतितेन निश्चयात् ।
अविकारमखण्डमक्षरं परमानन्दरसेन वै त्वया ॥ ७२ ॥
तव रूपमिदं परात्परं न हि नो लोचनगोचरीकृतम् ।
भवदङ्गगलत्प्रभामयं किमपि ज्योतिरिदं विलोक्यते ॥ ७३ ॥
नियमासनवायुसंयमेन्द्रियसंहृत्यनुधारणादिभिः ।
सुवशीकृतमीक्षते मनः किमपि ज्योतिरिदं न ते पदम् ॥ ७४ ॥

किं स्तुमस्त्वां विसदृशस्तुत्या स्तुतिपथातिगम् ।
पवित्रयामस्तु परं वाचं त्वद्गुणकीर्तनैः ॥ ७५ ॥
शब्दातीतं परं च त्वां को वा स्तोतुं समीहते ।
वेदोऽपि चकितं धत्ते त्वत्स्वरूपविनिर्णये ॥ ७६ ॥
अतः प्रसीद भगवन्दर्शयात्मानमव्ययम् ।
न शक्नुमस्त्वन्महसा द्रष्टुं विहतचक्षुषः ॥ ७७ ॥
एवं सम्प्रार्थ्यमानानां तेषां स्तुत्या प्रसादितः ।
स्वरूपं दर्शयामास तडित्स्फुरणवत्क्षणम् ॥ ७८ ॥
अनन्तकोटिकन्दर्पलावण्यरससागरम् ।
नवरत्नस्फुरच्चारुमुकुटाटोपमण्डितम् ॥ ७९ ॥
कपोललावण्यसरित्स्फुरन्मकरकुण्डलम् ।
नीलस्निग्धालकभ्रूकपर्युष्टाननपङ्कजम् ॥ ८० ॥
स्मरकोदण्डकुटिलभ्रूयुगाक्षेपविभ्रमम् ।
अगण्यलावण्यलसच्चिबुकश्रीविराजितम् ॥ ८१ ॥
आकर्णाकृष्टकामेषु भ्रमोत्पादिविलोचनम् ।
स्मिताविर्भूतकुन्दाभदन्ताविष्कृतचन्द्रिकम् ॥ ८२ ॥

मुक्तावैदूर्यमाणिक्यतारहारभरोज्वलम् ।
पीतांशुकाच्छन्नकटिकूजन्माणिक्यमेखलम् ॥ ८३ ॥
पदमञ्जीररत्नांशुपूरितेन्दुनखश्रियम् ।
हस्तपादाङ्गुलिजितविद्रुमाङ्कुरसौष्ठवम् ॥ ८४ ॥
राधास्येन्दुसुधापानमत्तनेत्रचकोरकम् ।
भ्रामयन्तं सरसिजं धृतदण्डेन पाणिना ॥ ८५ ॥
तत्समीपस्थितां राधां रसभावभरालसाम् ।
उन्मिषद्रत्नजटितभूषणोल्लासिविग्रहाम् ॥ ८६ ॥
रसभावप्रवाहांश्चोद्गिरन्तीमिव चक्षुषा ।
अपाङ्गाक्षेपसङ्कोचमुग्धीकृतनिजप्रियाम् ॥ ८७ ॥
मुक्ताहारलतोल्लासिकुचकुम्भभरालसाम् ।
नासापुटनटच्चारुमुक्ताभूषणविभ्रमाम् ॥ ८८ ॥
विद्युदुल्लसितप्रायं दृष्ट्वा क्षणिकदर्शनम् ।
स्वात्मानुसन्धानपथादपतन्मोहिताशयाः ॥ ८९ ॥
अध्यस्तस्त्रीस्वभावास्ते किञ्चिद्वक्तुं मनो दधुः ।
तावदाविर्भवद्वाणी गम्भीरा ललिताक्षरा ॥ ९० ॥
पुरस्तान्मणिभित्तिस्था चित्राकृतिरनुत्तमा ।
पृष्टव्यं यदि वा किञ्चित्सा सर्वं कथयिष्यति ॥ ९१ ॥
इत्युक्तास्ते ततो देवाः सम्मुखे मणिभित्तिगाम् ।
दृष्ट्वा प्रतिकृतिं रम्यां राधाकृष्णस्वरूपिणीम् ॥ ९२ ॥

॥ ब्रह्माद्या ऊचुः ॥

न जानीमो वयं नाथ दृष्टुं युगलमद्भुतम् ।
रसाम्भोधाविव वयं निमग्नास्तस्य दर्शनात् ॥ ९३ ॥
कथं तदालोकपथं पुनरेष्यामहे प्रभो ।
चमत्करोति नश्चेतो दृष्टमात्रयुगं तयोः ॥ ९४ ॥
युवयोर्युगलं चैतद्दृश्यते तत्किमात्मकम् ।
पुरस्ताद्दृष्टयुगलं तदपि स्यात्किमात्मकम् ॥ ९५ ॥

तद्रूपस्य भवद्रूपं साम्यमेति न संशयः ।
एतद्ब्रूहि महाराज शुश्रूषातुरचेतसाम् ॥ ९६ ॥

॥ प्रतिकृतिरुवाच ॥

अहो ब्रह्मादयः सर्वे शृणुध्वं वचनं मम ।
द्रष्टुं भवद्भिर्यद्रूपं परमानन्दविग्रहम् ॥ ९७ ॥
एकमेव परं वस्तु द्विधा व्यक्तितया स्थितम् ।
अद्वैतमपि तद्द्वैतं द्वैतमद्वैतमेव तत् ॥ ९८ ॥
न भेदो विद्यते कश्चिन्न कदा व्यक्तिवर्जितम् ।
तदेव व्यक्तियुगलं प्रतिबिम्बेन भासते ॥ ९९ ॥
निर्मले भित्तिफलके यथाहं प्रतिबिम्बभाक् ।
पूर्णानन्दस्य कृष्णस्य प्रतिबिम्बोऽस्म्यहं तथा ॥ १०० ॥
सच्चिन्मात्रे परे ब्रह्मण्यक्षरे परमात्मनि ।
शृङ्गाररसरूपं च परं ब्रह्मेति कीर्तितम् ॥ १०१ ॥
तस्यैव व्यक्तियुगलं स्वामिनी कृष्ण एव च ।
स्वामिनीकिरणा एव सख्योऽन्याः परिकल्पिताः ॥१०२॥
स्वामिनीसहितानां च सखीनां विप्रयोगकः ।
विप्रलम्भदलं प्रोक्तं संयोगो द्वितियं दलम् ॥ १०३ ॥
संयोगविप्रलम्भाभ्यां रसः क्रीडति नित्यदा ।
तच्च व्यक्तिद्वयद्वारा व्यक्तिश्चापि दलान्तरम् ॥ १०४ ॥
विप्रलम्भाख्यसिध्यर्थं द्वारमक्षरमेव हि ।
नित्यानन्दपदस्थानामन्यथासौ न सिध्यति ॥ १०५ ॥
इममर्थं समालम्ब्य श्रुतिर्द्वे ब्रह्मणीति च ।
अभिन्नं भिन्नवद्भाति रसक्रीडाप्रवृत्तये ॥ १०६ ॥
एक एव रसो यद्वद्व्यक्तिभेदेन वर्तते ।
स्वामिनीकृष्णभेदेन तथा कृष्णोऽक्षरात्मकः ॥ १०७ ॥
प्रपञ्चः प्राकृतः सर्वो भवेदक्षरमात्रकः ।
अक्षरः कृष्णमात्रस्तु स्वामिन्यपि तथाविधा ॥ १०८ ॥

एक एवेति च प्रोक्त्वा तथा द्वे ब्रह्मणीति च ।
सर्वं खल्विदमित्युक्त्वा नानात्वं च निषेध्यते ॥ १०९ ॥
अतो बहुविधा व्यक्तिर्वर्तते रसगा सदा ।
समत्वं विषमत्वं च ज्ञानमज्ञानमेव च ॥ ११० ॥
न्यूनाधिक्यं च सर्वत्र रसस्वाभाव्यतः स्मृतम् ।
अन्यथा न भवेल्लीला रसरूपा कदाचन ॥ १११ ॥
तस्माद्वैचित्र्यसिद्ध्यर्थं स्वभावः शरणं महत् ।
ऐक्येऽपि विप्रलम्भाख्यद्वारभूतोऽक्षरः परः ॥ ११२ ॥
रसस्य ब्रह्मणः साक्षान्न दक्षत्वेन गण्यते ।
अतो रसमयी लीला तत्र नास्तीति मन्यताम् ॥ ११३ ॥
अतो नित्यं भावयति रसलीलां निजान्तरे ।
भावनाविषयो नास्ति रसलीलाम्बुधिर्महान् ॥ ११४ ॥
यथा चञ्चुपुटेनाब्धिः परिमाति पतत्रिणः ।
तथा लीलारसाम्भोधिः कूटस्थहृदयेऽखिलः ॥ ११५ ॥
भावनाबलमात्रेण रसांशेनापि केनचित् ।
विद्धमात्रे च हृदये तदंशः प्रतिबिम्बितः ॥ ११६ ॥
सोंऽशो भवद्भिः परमो व्यक्तोक्ति परमाद्भुतः ।
आत्मनामात्मनश्चात्मा येनानन्दमयोऽक्षरः ॥ ११७ ॥
अक्षरस्यात्मनस्तस्मात्सच्चिदानन्दरूपता ।
सन्मात्रमन्यथा भाति नामरूपविवर्जितम् ॥ ११८ ॥
मोहनिद्रावशादेव शयानो वर्ततेऽधुना ।
तत्स्वप्नरचिता लोकाश्चतुर्दश महेश्वराः ॥ ११९ ॥
भूर्लोके भारते खण्डे स्वामिनी स्वसखीवृता ।
वृन्दावने व्रजभुवि मोहावेशेन सङ्गता ॥ १२० ॥
गोपिकारूपमात्मानं पश्यन्ति पदसंस्थिताः ।
अनुभूयागमिष्यन्ति विप्रलम्भदलं पुनः ॥ १२१ ॥
युष्माकं कामिनीभावो जातस्तद्युगदर्शनात् ।

तस्माद्यूयं प्रयास्यध्वं वासनांशैर्महीतलम् ॥ १२२ ॥
तत्रावतीर्णाः कृष्णस्य स्वामिनीसहिताः प्रियाः।
रक्षध्वं ताश्च विघ्नेभ्यो मोहावेशात्प्रमादतः ॥ १२३ ॥
सखीभावाश्रयाः सर्वे भूत्वा तद्विरहव्यथाम्।
अनुभूय सखीरूपा गोलोकं यूयमाप्स्यथ ॥ १२४ ॥
ततः कृष्णेन संयोगमवाप्यानन्दमाप्स्यथ।
पृथिव्यां भारते वर्षे तस्माद्गच्छध्वमादरात् ॥ १२५ ॥
तत्र वाराहकल्पोऽभून्मध्ये सारस्वतः किल।
पुनर्वाराह एवास्ति तत्र सर्गः प्रवर्तितः ॥ १२६ ॥
सरस्वती वेदमाता तस्मात्सारस्वता हि ते।
तैरेवोल्लिखिताश्चित्ते तस्मात्सारस्वताभिधः ॥ १२७ ॥
युष्माकं नैव तत्रास्ति कारणत्वं कदाचन।
साक्षिणा कल्पितं सर्वं जगत्स्थावरजङ्गमम् ॥ १२८ ॥
ब्रह्मादयोऽपि सम्भूताः पुनः कल्पे प्रवर्तिते।
गमिष्यन्ति यदा धाम निजं कृष्णप्रियास्तदा ॥ १२९ ॥
अक्षरे बोधमापन्ने ब्रह्माद्यास्ते तदात्मिकाः।
भविष्यन्ति पुनर्यूयं सखीरूपत्वमागताः ॥ १३० ॥
अत्रैष्यथ चिरं नित्यलीलानुभवमाप्स्यथ।
अनेककोटिब्रह्माण्डनायकाः केशविष्णवः ॥ १३१ ॥
मय्येव प्रविलीयन्ते शतशोऽथ सहस्रशः।
नानारूपधराः सर्वे यथाब्धावुदबिंदवः ॥ १३२ ॥
तेषामनुभवो नास्ति कदाचिन्मत्सुखस्य च।
यतस्तेषां न कदाचिद्दर्शनं मम जायते ॥ १३३ ॥
युष्माकं दर्शनं जातं तेन भावः प्रवर्तितः।
भावबीजान्महानन्दलीलाफलमवाप्स्यथ ॥ १३४ ॥
स्त्रीभावेनैव सम्प्राप्तिः ब्रह्मणो रसरूपिणः।
स्त्रीभावः साधनं लोके मत्प्राप्तेरिति निश्चयः ॥ १३५ ॥

मन्मूलरूपसम्प्राप्तिर्मूलस्त्रीणामसंशयः।
कूटस्थलीलासंविमा मूलभूताः स्त्रियस्तु ताः ॥ १३६ ॥
स्वरूपानुभवं लब्ध्वा यास्यन्ति स्वनिकेतनम्।
तस्मात्स्त्रीभावसम्प्राप्त्या स्वाधिकारसमाप्तितः ॥ १३७ ॥
आगमिष्यथ वै यूयं तूर्णं यातः मुदान्विताः ॥ १३८ ॥
इति श्रीमत्पुराणसंहितायां सिद्धान्तसारे देवानां गोलोक-
नाथसमागमो नाम विंशतितमोऽध्यायः ॥ २० ॥
आदितः श्लोकानां समष्ट्यङ्काः ॥ १६१७ ॥

## ॥ एकविंशोध्यायः ॥ २१ ॥

॥ व्यास उवाच ॥

धन्योऽहं कृतकृत्योऽहं जातोऽस्मि वः प्रसादतः।
स्वकीयं हृदयं तस्मात्स्फुटीकुरुथ सत्तमाः ॥ १ ॥
दुष्प्राप्यं तत्पदं प्राप्तं तल्लीलानुभवस्पृशः।
कथं ते पुनरायाता भवन्तो मे ब्रुवन्तु तत् ॥ २ ॥

॥ निगमा ऊचुः ॥

मुने शृणु महाप्राज्ञ यथा ते पुनरागताः।
निशम्य प्रतिकृतिवचः प्रहृष्टवदनाम्बुजाः ॥ ३ ॥
प्रणेमुर्युगपत्सर्वे गन्तुकामाः पदाब्जयोः।
सायुज्यमिव सम्प्राप्तास्तत्नखादर्शमण्डले ॥ ४ ॥
क्षणाद्बुत्पन्नमतयो ददृशुस्तेऽण्डकोटयः।
प्रत्यण्डं ब्रह्मरुद्राद्या देवर्षिपितृपन्नगाः ॥ ५ ॥
मानवा यक्षरक्षांसि मन्वाद्या वासवादयः।
यजन्ति यज्ञैर्मुनयो युंजन्ते योगिनो मनः ॥ ६ ॥
सेवन्ते विषयान्केचिदिन्द्रियानन्दलालसाः।
सुरासुराणामतुलं क्वचिद्युद्धं प्रवर्तते ॥ ७ ॥

---

१ युगलरूपेण। २ मूलस्त्रियः निजधामस्था सख्यः।

स्वरवाक्यपदाभिज्ञाः पठन्ति निगमान्द्विजाः ।
गृहस्था अग्निहोत्रेण जुह्वति हविरादृताः ॥ ८ ॥
वानप्रस्था वने वासाश्चरन्ति व्रतमुत्तमम् ।
त्रिदण्डधारिणः केचित्पञ्चदण्डधरा अपि ॥ ९ ॥
एकदण्डधराश्चान्ये यतयः संशितव्रताः ।
अभ्यस्तवेदान्तनया वेदानुगुणयुक्तिभिः ॥ १० ॥
तदर्थानुगुणैस्तर्कैर्ब्रह्म मीमांसते परम् ।
नित्यनैमित्तिकपराः केचित्काम्यपरायणाः ॥ ११ ॥
अश्वमेधादिभिर्यज्ञैर्यजन्ते श्रद्धयान्विताः ।
यजन्ते शिवमात्मानं शैवीदीक्षाधराश्च ये ॥ १२ ॥
विष्णुमाराधयन्त्यन्ये विष्णुव्रतपरायणाः ।
शाक्ताः पाशुपताः केचिद्बौद्धा जैनाश्च सौगताः ॥ १३ ॥
दिगम्बरा माध्यमिकाः सौराः कापालिनः परे ।
शून्यवादरताः केचित्केचिद्देहात्मवादिनः ॥ १४ ॥
क्षणिकात्मवादनिरताः पाखण्डाचारवादिनः ।
समुद्रद्वीपमर्यादा वनानि कुलपर्वताः ॥ १५ ॥
एवं भ्रमन्तो भूलोकमपश्यंस्त्रिदशेश्वराः ।
ते भूलोकमतिक्रम्य स्वर्लोकमगमन्सुराः ॥ १६ ॥
यत्रास्ते नन्दनवनं सपुष्पफलपादपम् ।
दिव्यपुष्पलतागन्धमत्तभृङ्गनिनादितम् ॥ १७ ॥
पारिजातवनोत्थेन गन्धेनोल्लासितामरम् ।
दिव्यस्त्रीपदविन्यासयावकार्द्रमहापथम् ॥ १८ ॥
अचञ्चलतडिद्वर्णललनालिङ्गितामरैः ।
समाश्रितविमानाग्र्यैर्घनैरिव चिताम्बरम् ॥ १९ ॥
पतन्मन्दाकिनीपूरघोषिताखिलदिङ्मुखम् ।
विलोकयन्तः स्वर्गस्य शोभामिन्द्रसभां ययुः ॥ २० ॥
तत्र सिंहासनासीनमिन्द्राणीसहितं प्रभुम् ।

शारदेन्दुप्रभागौरच्छत्रच्छायसमाश्रयम् ॥ २१ ॥
हंसश्रियोर्व्यजनयोर्वायुना परिवीजितम् ।
उपास्यमानममरैः समन्ताज्जयवादिभिः ॥ २२ ॥
तिलोत्तमोर्वशीमुख्यादिव्यस्त्रीनृत्यदर्शिनम् ।
सहस्रनयनं देवमपश्यंस्त्रिदशेश्वराः ॥ २३ ॥
तानवेक्ष्यामरेन्द्रोऽपि मनस्येवान्वचिन्तयत् ।
क एते पञ्चपुरुषाः पृथग्रूपविभाविताः ॥ २४ ॥
ईश्वरा एव लक्ष्यन्ते पूजामर्हन्ति मामकीम् ।
इत्याकलय्य मनसा देवेन्द्रोऽपि निजासनात् ॥ २५ ॥
अवतीर्यार्घ्यपाद्याभ्यां पूजयामास सत्कृतान् ।
के यूयमिति सम्पृष्टाः प्रत्यूचुस्ते दिवौकसः ॥ २६ ॥

॥ ब्रह्माद्या ऊचुः ॥

वयं ब्रह्माण्डनाथाः स्म स्थित्युत्पत्त्यन्तहेतवः ।
चरन्त इह सम्प्राप्ता निबोधेन्द्र यथातथम् ॥ २७ ॥

॥ इन्द्र उवाच ॥

ब्रह्माण्डाधीश्वरा ये च सन्ति ते स्वस्वधामनि ।
भवन्त एवेति कथं मन्येऽलीकमिदं वचः ॥ २८ ॥
एक एव भवेदिन्द्रो विष्णुरेकः शिवस्तथा ।
मायावी कश्चिदसुरो मां विमोहयितुं स्थितः ॥ २९ ॥

॥ ब्रह्माद्या ऊचुः ॥

न साधारण्यतो देवा वयं देवेन्द्र मन्यताम् ।
प्रकृतेर्गुणसाम्यस्य कालबन्धोः गुणैस्त्रिभिः ॥ ३० ॥
रजःसत्त्वतमोभिश्च चिदाभासेन जीवितैः ।
जाता वयं ब्रह्मविष्णुरुद्रा एवेति संज्ञया ॥ ३१ ॥
विरञ्चिं मामिमं विद्धि जगत्स्रष्टारमीश्वरम् ।
पातारमखिलाण्डस्य विष्वेनं विष्णुमागतम् ॥ ३२ ॥
एष रुद्रोऽन्तकाले यः पिबत्यास्तेऽखिलं जगत् ।

त्रयाणामीश्वरः सोयं नादरूपी सनातनः ॥ ३३ ॥
तस्माद्वयं त्रयो जाताः स्थित्युत्पत्त्यन्तहेतवः ।
न यक्षो नासुरो रक्षो मायावी त्वामुपागतः ॥ ३५ ॥
॥ इन्द्र उवाच ॥
ब्रह्मलोकोऽनुगन्तव्य एवं चेन्निदशेश्वराः ।
ब्रह्माणं दर्शयिष्यामि तत्र सन्तं सनातनम् ॥ ३६ ॥
इत्युक्ता निर्ययुः सर्वे ब्रह्मलोकं निरामयम् ।
नो शोको यत्र नोद्वेगो ना दुःखं नारतिः क्वचित् ॥ ३७ ॥
ब्रह्माणं ददृशुः सर्वे सनकाद्यैः परिवृतम् ।
भृगुमुख्यैर्नारदाद्यैः सेवितं सर्वतो मुखम् ॥ ३८ ॥
विचारयन्तममलमात्मानं तमसः परम् ।
ससहायैः सांख्ययोगमीमांसादिभिरच्युत ॥ ३९ ॥
निगमैः सह सङ्गम्य विद्याभिः संहितादिभिः ।
पुराणैर्निर्णयैश्चैव युक्तिभिः कृतजीवनैः ॥ ४० ॥
ब्रह्मा ब्रह्माणमालक्ष्य स्वशीलगुणभूषणम् ।
पप्रच्छ को भवानत्र मत्सादृश्यमुपागतः ॥ ४१ ॥
॥ ब्रह्मोवाच ॥
स्रष्टाहं जगतामस्मि विरिञ्चिरिति नामतः ।
इत्यात्मानं तु जानामि नाहं वेद्मि विशेषतः ॥ ४२ ॥
एवं श्रुत्वा विधेर्वाक्यं स्थानस्थो विधिरब्रवीत् ।
उभयोरपि वैरंच्यं वर्तते निर्विशेषणम् ॥ ४३ ॥
रुद्रान्तरेण रुद्रस्य हरेर्हर्यन्तरेण च ।
वर्तते निर्विशेषत्वं वस्तुत्वं केषु विद्यते ॥ ४४ ॥
स्वतो न ज्ञायते तस्माद्भूयं पश्चाहमच्युत ।
विष्णुना च हरेणापि सह सङ्गत्य निश्चयात् ॥ ४५ ॥
ब्रह्माण्डावरणं[1] भित्त्वा पुरुषं प्रकृतीश्वरम् ।

१ ब्रह्माण्डाधारणं इत्यपि पाठः ।

आधारं महदादीनां शक्तीनां नित्यमव्ययम् ॥ ४६ ॥
पृच्छामहे यतः सर्वं प्रसूतं स्थिरमस्थिरम् ।
पुरुषस्य पराशक्तिः प्रकृतिः सा न विकृतिः ॥ ४७ ॥
मूलभूता ततः सर्वाः पुरुषानुप्रवेशतः ।
प्रजायन्ते विकृतयो महदाद्या दिवौकसः ॥ ४८ ॥
स्वप्रकृत्यैव पुरुषो मोहितो ज्ञानगूढया ।
स्वप्नं पश्यन्निवोद्भूतमण्डमाविविशे विभुः ॥ ४९ ॥
पुरुषस्यात्मविज्ञानविभ्रंशे मोहसंज्ञके ।
उद्भूताण्डं ततस्तस्मिन्प्रविष्टोऽनिष्टवासनः ॥ ५० ॥
तत एव समुत्तस्थौ कालेन बहुना पुमान् ।
वैराज इति सम्प्रोक्तो यद्देहे कल्पितं जगत् ॥ ५१ ॥
तदण्डं च द्विधा प्रोक्तं पिण्डब्रह्माण्डभेदतः ।
समष्टिः किल पिण्डानां ब्रह्माण्डमिति कल्पितम् ॥ ५२ ॥
पिण्डाः स्तद्व्यष्टिराख्याताः कारणैक्यादभेदिनः ।
अतोऽण्डावयवाः सर्वे पिण्डेष्वपि निरूपिताः ॥ ५३ ॥
भूतेन्द्रियमनःप्राणाः पिण्डब्रह्माण्डसङ्गताः ।
महत्तत्वं समुद्भूतं पुरुषस्य मनो हि तत् ॥ ५४ ॥
नानात्वं तस्य वै नास्ति व्याप्तं पिण्डेषु सर्वतः ।
एवं भूतेन्द्रियप्राणव्याप्तिः पिण्डेषु लक्ष्यते ॥ ५५ ॥
व्यष्टिपिण्डे यथा स्थूले गुणावस्था च जाग्रति ।
अभिमानी तयोर्विश्वः समष्टौ च तथा विराट् ॥ ५६ ॥
अपञ्चीकृतभूतोत्थे सूक्ष्मे स्वप्नदशा स्थिता ।
अभिमानी तयोरेषस्तैजसः कीर्त्यते यथा ॥ ५७ ॥
हिरण्यगर्भोऽपि तथा समष्टिमभिमन्यते ।
चिदाभासेन सन्दीप्तमज्ञानं स्थूलसूक्ष्मयोः ॥ ५८ ॥
कारणं कारणवपुः सुषुप्तिस्तत्र वै दशा ।
अज्ञानं च सुषुप्तिं च योऽभिमन्येत चात्मनि ॥ ५९ ॥

तं प्राज्ञं प्राहुः पिण्डस्थं ब्रह्माण्डेऽव्याकृतं च तम् ।
स्थूलसूक्ष्मप्रपञ्चस्य मूलाऽज्ञानं च कारणम् ॥ ६० ॥
न सन्नासन्न सदसद्भिन्नं नाभिन्नमप्युत ।
न तन्निरवयं चापि न च सावयवं तथा ॥ ६१ ॥
ज्ञानापनोद्यं निर्मूलमविचारितसुन्दरम् ।
ज्ञानेनाज्ञाननाशे च तत्कार्यमपि नश्यति ॥ ६२ ॥
तामसाहङ्कृतेर्नाशात्तत्कार्यं भूतपञ्चकम् ।
तदारब्धं शरीरं च जाग्रत्या सह नश्यति ॥ ६३ ॥
शरीरजाग्रद्विलये साक्षी विश्वोऽपि नश्यति ।
राजसाहङ्कृतेर्नाशात्तत्कार्याणीन्द्रियाणि च ॥ ६४ ॥
स्वप्नया सह नश्यन्ति साक्षिकस्तत्र तैजसः ।
सात्विकाहङ्कृतेर्नाशाद्देवानां मनसो लये ॥ ६५ ॥
सुषुप्तौ ज्ञानविरहात्कः साक्षी प्राज्ञ उच्यते ।
एवं विराजोऽपि लयो महाभूतलयो भवेत् ॥ ६६ ॥
जाग्रद्विराट्प्रविलये वैराजोऽपि विलीयते ।
अपञ्चीकृतभूतानां विनाशे लिङ्गसंक्षये ॥ ६७ ॥
स्वप्नावस्थाविनाशः स्यात्कुतो नारायणस्तदा ।
समष्ट्यज्ञाननाशस्तु सुषुप्त्या सह वै यदा ॥ ६८ ॥
न तदाऽव्याकृतस्तिष्ठेत्कार्यकारणविप्लवात् ।
अवशिष्टस्तदा साक्षात्स्वराडक्षर एव हि ॥
पिण्डब्रह्माण्डविलये मूलाज्ञाने लयं गते ॥ ६९ ॥
इदानीं मोहसंवीतः स्वप्नं पश्यन्निवाक्षरः ।
हिरण्यगर्भरूपेण सर्वसाक्षितया स्थितः ॥ ७० ॥
तं पृच्छामो वयं गत्वा स्वाधिकारविनिर्णयम् ।
तस्माद्यूयं समायातु तत्पदान्वेषणे मया ॥ ७१ ॥
एवं मिथो रहः कृत्वा पञ्चभिः सहितो विधिः ।
जगाम शिवलोकं च सत्कृतास्ते च शम्भुना ॥ ७२ ॥

शिवोऽपि शिवमुद्वीक्ष्य स्वतुल्याकृतिमागतम् ।
परमाश्चर्यसम्पन्नो बभाषे स्वाण्डविग्रहम् ॥ ७३ ॥

॥ स्थानीयशिव उवाच ॥

अहो ब्रह्मन्निमे कस्मात्समयाताश्चारुदर्शनाः ।
त्वद्रूपभागयं कोऽसौ कोऽसौ मद्रूपवानयम् ॥ ७४ ॥
विष्णुरूपधरः कोऽयं देवः कमललोचनः ।
काविमौ पुरुषावाद्यौ दृश्येते मत्पुरः स्थितौ ॥ ७५ ॥
अपूर्वदर्शना ह्येते किमर्थमिहसङ्गताः ।
एवं शम्भोर्वचः श्रुत्वा तदण्डस्थोऽब्रवीद्विधिः ॥ ७६ ॥
अयं ब्रह्माहमस्मीति स्वात्मानं मनुते प्रभो ।
अयं रुद्राभिमानी च विष्णुरस्मीति चापरः ॥ ७७ ॥
वदत्यतो महादेव विष्णुना भवता सह ।
गन्तुमिच्छामहे देव द्रष्टुं नारायणं विभुम् ॥ ७८ ॥
निशम्येदं विधेर्वाक्यं प्रहस्य भगवान् भवः ।
तान्पूजयित्वा प्रययौ सह तैर्विष्णुमन्दिरम् ॥ ७९ ॥
विष्णुना सह सङ्गम्य नारायणपदावधि ।
गन्तुं कृतधियोऽष्टौ ते निर्जग्मुस्त्रिदशेश्वराः ॥ ८० ॥
ब्रह्माण्डान्तमुपव्रज्य तत्र छिद्रेण निर्ययुः ।
श्रुरान्त्यधारामात्रेण अणिमानं समाश्रिताः ॥ ८१ ॥
ब्रह्माण्डमपरं तत्र द्वीपाब्धिगिरिसङ्कुलम् ।
सराशिग्रहनक्षत्रं पञ्चभूतगुणान्वितम् ॥ ८२ ॥
भूरादिसप्तलोकैश्च सप्तभूविवराश्रयम् ।
दृष्ट्वा विस्मितचित्तास्ते पदमैन्द्रं सुरा ययुः ॥ ८३ ॥
इन्द्रपूजां समादाय ब्रह्मलोकं ततो ययुः ।
स्रष्टारं जगतां दृष्ट्वा प्रणम्य प्रतिपूजिताः ॥ ८४ ॥
कुतूहलधियो जग्मुः शिवं कैलासवासिनम् ।
शिवं दृष्ट्वा नमस्कृत्य वैकुण्ठमगमन्सुराः ॥ ८५ ॥

तदप्यण्डमतिक्रम्य छिद्रमार्गेण निर्ययुः ।
तत्रापि ददृशुर्देवा ब्रह्माण्डं च तथाविधम् ॥ ८६ ॥
ब्रह्मेन्द्रविष्णुरुद्रांश्च स्वाधिकारव्यवस्थितान् ।
तत्र तत्रापीक्षमाणा विस्मयाक्रान्तचेतसः ॥ ८७ ॥
एवं ब्रह्माण्डकोटीषु भ्रमन्तोऽपि न ते सुराः ।
सम्प्रापुरवधिं क्वापि विमनस्कास्ततोऽभवन् ॥ ८८ ॥
स्वमुखाण्डस्य नेतारः खिन्नचित्ततया स्थिताः ।
स्मेरुः कृष्णं ततश्चित्ते पूर्वदृष्टं कृपानिधिम् ॥ ८९ ॥
तावत्ते ददृशुः सर्वे स्वं स्वमात्मानमीश्वराः ।
तत्पादाब्जधृतकराञ्जलिन्यस्तोत्तमाङ्गकम् ॥ ९० ॥
तानुवाच प्रतिकृतिः किं दृष्टमिह चाद्भुतम् ।
लक्ष्यते भवतां चेतो लक्षणैरनुमापकैः ॥ ९१ ॥

॥ ब्रह्माद्या ऊचुः ॥

अद्भुतं किं वदामोऽत्र त्वय्यनन्ते परावरे ।
दुर्विभाव्या हि ते शक्तिर्दुःपारा चेशमानिनाम् ॥ ९२ ॥
न भवान् ज्ञानगम्योऽस्ति योगगम्योऽपि नो भवान् ।
त्वद्याथात्म्यज्ञाननिष्ठाः सम्मुह्यन्ति न संशयः ॥ ९३ ॥
त्वल्लीलारसभोक्तारः प्रेमनिर्भिन्नमानसाः ।
त्वया चानुगृहीताश्च जानन्ति त्वां न चेतरे ॥ ९४ ॥
दर्शितो महिमा तेऽद्य कथं वाचा प्रचक्ष्यते ।
अनुग्रहाण देवेश त्वदीयानुररीकुरु ॥ ९५ ॥
इत्युक्त्वा ते प्रणम्येशाः प्रतिजग्मुः प्रहर्षिताः ।
येनागतं पथा तेन प्रणम्य मुहुरेव तान् ॥ ९६ ॥
सदाशिवेश्वरावेतौ स्वस्वधामानि संस्थितौ ।
ब्रह्मविष्णुमहेशानां ध्यानगा वासना तु (या) सा ॥९७॥
शारीरमभिसम्पद्य प्रबुद्धविषयाभवत् ।
अन्योन्यं ते त्रयो वीक्ष्य मुदिताननलोचनाः ॥ ९८ ॥

आनन्दमग्नमनसो बभूवुर्विस्मयाकुलाः ।
प्रणेमतुः शिवं प्रीत्या प्रबद्धकरसम्पुटौ ॥ ९९ ॥
॥ देवावूचतुः ॥
नमः शिवाय शान्ताय निवृत्तगुणवृत्तये ।
त्र्यम्बकाय नमस्तुभ्यं नमोऽन्धकविनाशिने ॥ १०० ॥
व्याघ्रचर्मोत्तरीयाय नमस्तुभ्यं जटाभृते ।
चन्द्ररे(ले)खाकिरीटाय नागकुण्डलधारिणे ॥ १०१ ॥
कर्पूरगौरदेहाय कृतदिग्वाससे नमः ।
चन्द्रसूर्याग्निनेत्राय मूर्त्यष्टकमुपेयुषे ॥ १०२ ॥
नमस्ते नीलकण्ठाय नमस्ते दिव्यसंविदे ।
महानन्दाब्धिकल्लोलक्रीडाकलितचेतसे ॥ १०३ ॥
अस्पृष्टाज्ञानगन्धाय महादेव नमोऽस्तु ते ।
त्वत्प्रसादेन देवेश पूर्णाः सर्वे मनोरथाः ॥ १०४ ॥
प्रमाणमन्यथाकर्तुं क ईशोऽन्यो भवत्परः ।
स्वाप्निकः स्वप्नसंद्रष्टुः कथमन्तर्विशेदहो ॥ १०५ ॥
अयमीश्वरसद्भावो न विष्णौ मयि विद्यते ।
सर्वधर्मान्परित्यज्य यस्तु त्वामेव सेवते ॥ १०६ ॥
स च धन्यतमो लोके यतस्तज्ज्ञानदो भवान् ।
अतः परं च ये केचिन्नानाधर्मचरा अपि ॥ १०७ ॥
गमिष्यन्ति तदा सिद्धिं यदि त्वत्कृतसौहृदाः ।
त्वयि द्रोहवतां वेदे (लोके) प्रायश्चित्तं न विद्यते ॥१०८॥
त्वयि स्नेहवतां चापि प्रायश्चित्तं न विद्यते ।
इति स्तुत्वा महेशानं हर्षगद्गदया गिरा ॥ १०९ ॥
स्वनेत्राश्रूणि सम्मृज्य पाणिना हर(रि)चक्षुषी (षोः) ।
हृषीकेशो मृजन्मग्नमीक्ष्य प्रेमरसाम्बुधौ ॥ ११० ॥
अन्योऽन्यं संविदं कृत्वा स्मृत्वा लीलारसाम्बुधिम् ।
प्रणेमन्तो ध्यानदृष्टं स्वधामानि ययुः सुराः ॥ १११ ॥

वर्णये(य एत)च्छृणुयान्नित्यं श्रावयेद्वापि भक्तितः ।
सोऽपि भावं समासाद्य कृष्णे रतिमवाप्नुयात् ॥ ११२ ॥

इति श्रीमत्पुराणसंहितायां सिद्धान्तसारे देवानां गोलोक-
दर्शनानन्तरं स्वलोकप्राप्तिर्नामैकविंशोऽध्यायः ॥ २१ ॥
आदितः श्लोकानां समष्ट्यङ्काः ॥ १७२९ ॥
॥ इति पूर्वार्धः ॥

॥ अथोत्तरार्धः ॥

## ॥ द्वाविंशोऽध्यायः ॥ २२ ॥

॥ व्यास उवाच ॥

अहो विचित्रं परमं पवित्रं पुरातनं वः ( त्वत् ) कथितं श्रुतं मे ।
तथापि नात्मालमुपैति भावं सुधां पिबं(जुषं)स्तृप्यति को बराकः ॥१॥
यथा पिपासुर्वनवारणो महान् घर्माभितप्तोऽम्भसि नर्मदायाः ।
मज्जन्न सन्तापमुपैति मे मनः कथासुधासिन्धुनिमज्जनेन ॥ २ ॥
कथा भवव्यथानाशकरी दिव्यौषधी यथा ।
ज्ञानदारिद्र्यशमने चिन्तारत्नमयीव स्रक् ॥ ३ ॥
मनोमालिन्यशमनी जलस्येव यथा शरत् ।
मनसस्तोषजननी सिद्धिर्योगयुजामिव ॥ ४ ॥
अज्ञानान्ध्यतमःस्तोमविच्छेदायेव कौमुदी ।
वज्रधारेव सुमहत्पापाद्रिच्छेदकर्मणि ॥ ५ ॥
अविद्यातूलवात्याली तरीव भववारिधौ ।
भावाम्भोधिसमुल्लास(माह्लाद)कर्त्रीव शशिनः कला ॥ ६ ॥
सङ्कुचद्धृदयाम्भोजविकाशायोष्णगोः प्रभा ।
अनादिघोरसंसारमूलच्छेदकुठारिका ॥ ७ ॥
सन्मार्गदर्शनार्थाय विस्फुरन्तीव दीपिका ।
तृष्णाभुजङ्गी दष्टानां सुधाधारेव सत्कथा ॥ ८ ॥

कस्य नो कुरुते हर्षं परासुपशुभिर्विना ।
पापावरितचित्तानां दूरगः श्रवणोत्सवः ॥ ९ ॥
आत्मवादकथातीर्थस्नायी शुध्यति पातकी (पापभाक्) ।
पापान्तरायनिर्मुक्तं मनः प्रेम्णि निमज्जति ॥ १० ॥
आविर्भूता भवेल्लीला प्रेमपूरितचेतसि ।
लीलाविर्भावमात्रेण कृतार्थः स्यान्न चान्यथा ॥ ११ ॥
तस्मात्परतरं नास्ति कथायाः साधनान्तरम् ।
अतो वः प्रष्टुमिच्छामि सन्देहान्मनसि स्थितान् ॥
प्रब्रुवन्तु महाभागा मदनुग्रहकाम्यया ॥ १२ ॥

॥ सूत उवाच ॥

एवं वदति विप्रर्षौ जिज्ञासाकुलचेतसि ।
अतिवेलमवस्थानमसहन्तोऽब्रुवन्मुनिम् ॥ १३ ॥

॥ वेदा ऊचुः ॥

अतः परमवस्थानमस्माकमुचितं न हि ।
शब्दमूर्तिधराणां च दीपस्येवानिलस्थले ॥ १४ ॥
न मूर्तिधारिणो दृश्याः सत्यलोकं विना क्वचित् ।
जिज्ञासापूर्तये तस्मात्सेव्यः पशुपतिस्त्वया ॥ १५ ॥
स ईशः सर्वविज्ञाता परतत्त्वार्थदर्शनः ।
पावनः सर्वलोकानामस्पृष्टः कालमायया ॥ १६ ॥
निर्दोषः पुरुषो वक्ता भ्रान्तिज्ञानविवर्जितः ।
सत्यवक्ता सत्यकर्ता सत्यलभ्यः सतां गतिः ॥ १७ ॥
तमाराधय देवेशं भक्तानुग्रहतत्परम् ।
स च ते हृदयग्रन्थिं छेत्ता नान्योऽस्ति कश्चन ॥ १८ ॥
एवमुक्त्वा ततः सर्वे वेदाश्चान्तर्दधुः क्षणात् ।
तस्यै दिशे नमस्कृत्य व्यासस्तत्रैव संस्थितः ॥ १९ ॥
तपश्चचार विपुलं शिवाराधनतत्परः ।
तृणपर्णाशनः शश्वच्छिवध्यानपरायणः ॥ २० ॥

जपन्पञ्चाक्षरीं विद्यां प्रणिधाय मनो हृदि ।
वत्सरान्ते प्रसन्नोऽभूच्छङ्करो लोकशंकरः ॥ २१ ॥
स्वरूपं दर्शयामास भस्मोद्धूलितविग्रहम् ।
कर्पूरगौरममलं शुद्धस्फटिकतेजसम् ॥ २२ ॥
त्रिनेत्रमरुणापाङ्गं सर्पयज्ञोपवीतिनम् ।
बृहत्पिङ्गजटाभारमरुणाधरसुन्दरम् ॥ २३ ॥
पार्वत्याश्लिष्टवामाङ्गमनङ्गमदभञ्जनम् ।
वरदानोत्तंसकरं कृपापूर्णदृगीक्षणम् ॥ २४ ॥

॥ शिव उवाच ॥

पाराशर्य मुने ब्रह्मन्कामपूरोऽहमागतः ।
वृणु कामवरं लोके दुर्लभं ते ददाम्यहम् ॥ २५ ॥
किमर्थमहमाहूतस्तपसा दुश्चरेण ते ।
मदर्थसन्तापजुषां तापं प्रशमयाम्यहम् ॥ २६ ॥
द्वैपायनोऽपि गिरिशं दृष्ट्वानुग्रहतत्परम् ।
स्तुत्वा नत्वा जगादेदं प्राञ्जलिर्दण्डवत्पतन् ॥ २७ ॥

॥ व्यास उवाच ॥

अहो महादेव महाननुग्रहः कृतस्त्वया सर्वजनान्तरात्मना ।
यद्दर्शितं रूपमिदं समाधिभिर्विमृश्यते योगिभिरन्तरुद्गतम् ॥ २८ ॥
त्वमेव साक्षादपरो न विद्यते विमोचयेद्यः पशुपाशसङ्कटात् ।
जीवान्दयापूरितचेतसामयं स्वभाव एवास्ति परोपकारिता ॥२९॥
ये केऽपि च त्वच्चरणार्पिताशयाः सीदन्त्यविद्यातमसि भ्रमन्तः ।
कदापि न क्वापि यतः प्रभुर्भवानाराधितो दीप इवार्थदर्शनः ॥३०॥
अतो भवत्तो भवपाशमोचकाद्वरं न याचे परमात्मबन्धनम् ।
याचेहमन्तास्तिमिरापनोदनं ज्ञानं सविज्ञानमतस्तदादिश ॥ ३१ ॥
मया चाराधिता वेदा भगवन्तो महाशयाः ।
प्रसन्नास्ते मया दृष्टाः श्रुत्यर्थमविजानता ॥ ३२ ॥
श्रुतिराथर्वणी काचिदक्षरात्परतः परः ।

परतःपदमित्येतदक्षरस्य विशेषणम् ॥ ३३ ॥
स्वतन्त्रं वा पदं ह्येतदत्र सम्मुग्धमानसः ।
निगमैर्वर्णितमिदं स्वतन्त्रपदमेव हि ॥ ३४ ॥
अस्मिन्पक्षेऽक्षरादन्यो ज्ञायते परतः पदात् ।
तत्परोऽप्यवगम्येत पदात्पर इतीरितात् ॥ ३५ ॥
तत्राक्षरो वेदसिद्धस्तत्परोऽपि कथञ्चन ।
तद्विशेषपरिज्ञाने प्रार्थिता निगमा मया ॥ ३६ ॥
यथावद्वर्णयामासुरक्षरान्तर्विहारिणम् ।
तस्मादतीतपुरुषप्रश्ने सन्दर्शितो भवान् ॥ ३७ ॥
अक्षरात्तत्परस्माच्च कः परः पुरुषो महान् ।
तस्य वा कीदृशी लीला तद्यथावद्वदाधुना ॥ ३८ ॥
परस्य ब्रह्मणः साक्षादक्षरस्य महात्मनः ।
शयनं कस्य वा हेतोरुन्निद्रस्य चिदात्मनः ॥ ३९ ॥
समाधिरिति चेदस्य न ध्यातव्यं च विद्यते ।
अद्वितीयस्य चैकस्य पूर्णस्य परमात्मनः ॥ ४० ॥
स्वरूपानवबोधोत्थं शयनं चेति यच्छ्रुतम् ।
न प्रमाणपथारूढं भाति मे किञ्चिदप्यहो ॥ ४१ ॥
इत्यादिसंशयच्छेदे निर्दिष्टस्तैर्भवान्मम ।
संशयं शल्यमिव मे समुद्धर हृदि स्थितम् ॥ ४२ ॥
॥ शिव उवाच ॥
शृणु व्यास मुने सत्यं वदामि तव सुव्रत ।
यस्य श्रवणमात्रेण निःसन्दिग्धं मनो भवेत् ॥ ४३ ॥
अक्षरः पुरुषः पूर्णोऽनवच्छिछ(च्छ)न्नश्च निर्गुणः ।
निःसङ्गो निर्मलोऽनन्तो निरीहः प्रकृतेः परः ॥ ४४ ॥
प्रणवाक्षरमात्रं हि तन्न जानीहि भो मुने ।
अमात्रं शब्दरहितं स्वरव्यञ्जनवर्जितम् ॥
बिन्दुनादकलातीतं ब्रह्माक्षरमुदाहृतम् ॥ ४५ ॥

हस्वदीर्घप्लुतैर्हीनममात्रमिति चोच्यते ।
शब्दादतीतमिति यत्प्रोच्यते तदशब्दकम् ॥ ४६ ॥
व्यञ्जनानि हलाः सर्वे स्वराः षोडश विश्रुताः ।
पदैस्तत्समुदायोत्थैरभिधातुं न शक्यते ॥ ४७ ॥
तस्मादुक्तं मुने तत्तु स्वरव्यञ्जनवर्जितम् ।
अनुस्वारस्तु बिन्दुः स्यान्नादो घण्टानिनादवत् ॥ ४८ ॥
कला नादैकदेशस्तु तेभ्योऽतीतं बृहद्यतः ।
बिन्दुनादकलातीतमतः सम्प्रोच्यते बुधैः ॥ ४९ ॥
अघोषमव्यञ्जनमस्वरं च अतालुकण्ठोष्ठमनासिकं च ।
अरेष(ख)जातोष्मविवर्जितं च तदक्षरं न क्षरते कदाचन ॥ ५० ॥
अनादिमत्परं ब्रह्म सच्चिदानन्दलक्षणम् ।
रसरूपतया तत्तु नित्यमेव पृथक् स्थितम् ॥ ५१ ॥
अक्षरं चिन्मयं प्रोक्तं ज्ञानरूपं निराकृति ।
नित्यमेव पृथग्भूतो ह्यानन्दोऽपि हि साकृतिः ॥ ५२ ॥
अनौपम्यात्स्वभोग्यत्वात्पुरुषागोचरत्वतः ।
प्रेष्ठत्वात्परमं तत्वं स्त्रीणां कामस्वरूपधृक् ॥ ५३ ॥
पातुं लालयितुं भोक्तुं स्त्रियः शक्ता न तं परे(रं) ।
रमणार्थं पृथग्भावात्स्वामिनी प्रथमं दलम् ॥ ५४ ॥
कृष्णस्य रसरूपस्य सैवान्तःकरणात्मिका ।
अन्तःकरणवृत्तिस्तु चतुर्धा परिगीयते ॥ ५५ ॥
आनन्दोत्साहिनी चैव प्रमोदा चानुरागिणी ।
एकैकवृत्तिनिस्पन्दास्त्रिसहस्राणि संख्यया ॥ ५६ ॥
ता एव स्वामिनीसख्यः सूर्यसाहस्रसंख्यया ।
वृत्तेर्वृत्त्यन्तराणां च संख्या नैवोपलभ्यते ॥ ५७ ॥
आत्मानं ता न जानन्ति प्रियं प्रियतमं विदुः ।
लालनं प्रीणनं तस्मात्कुर्वन्ति परमादृताः ॥ ५८ ॥
निःस्पंदैर्वृत्तिभिर्हीनं तथान्तःकरणेन च ।

तदक्षरं च विज्ञेयं ज्ञानमात्रं च बालवत् ॥ ५९ ॥
अत एव न तत्रास्ति कामलीला रसात्मिका ।
न तद्बलं प्रशंसन्ति द्वारं स्याद्विप्रलम्भके ॥ ६० ॥
द्वारत्व(द्वारंतत्)सिद्धये तस्मिन्निच्छाविर्भावहेतवे ।
कामांशो लवमात्रस्तु नित्यमेव व्यवस्थितः ॥ ६१ ॥
तेन साकृति तद्ब्रह्म चिन्मात्रं तु निराकृति ।
आनन्दलवसंसर्गात्सच्चिदानन्दमुच्यते ॥ ६२ ॥
स लवः कृष्णरूपेण कूटस्थहृदि वर्तते ।
अन्तर्यामिस्वरूपेण तेन नित्यं प्रणोदितः ॥ ६३ ॥
लीलावलोकहृदयो नित्यं याति दिदृक्षया ।
विप्रलम्भोन्मुखतया प्रवृत्तस्तु यदा रसः ॥ ६४ ॥
तदैकदाऽक्षरो द्रष्टुं जगाम पुरुषोत्तमम् ।
महासौधाङ्गणबहिः पद्मोद्यानभुविभि(स्थि)तः ॥ ६५ ॥
दिदृक्षाकुलचित्तत्वादूर्ध्वदृष्टिः कृताञ्जलिः ।
अनन्यचेतास्तत्सौधभूमिकालग्नलोचनः ॥ ६६ ॥
चिरं तस्थौ तदाकृष्णो भूमिकां नवमीं श्रिस्थितः ।
सखीवृन्दैः परिवृतो नृत्यगानपरायणैः ॥ ६७ ॥
मृदुगर्जितमेघालिमलिने गगने सति ।
उल्लसन्तीषु विद्युत्सु पतत्सु जलबिन्दुषु ॥ ६८ ॥
प्रवहत्सु च वातेषु केतकीगन्धबन्धुषु ।
नृत्यत्सु नीलकण्ठेषु नृत्यन्तीषु लतासु च ॥ ६९ ॥
नदत्सु च विहङ्गेषु वृक्षशाखावलम्बिषु ।
श्रेणीबन्धेन गगनं सारसेषूत्पतत्सु च ॥ ७० ॥
मृदङ्गनादमुखरीकृतासु वनराजिषु ।
रत्नभित्तिषु वीणानां रणत्कारवतीषु च ॥ ७१ ॥
कस्याश्चिन्नाट्यविक्षिप्तचरणाब्जनखप्रभाम् ।
विद्युत्पुञ्जनिभां शोणां वैडूर्य(मञ्जीर)मणिचित्रिताम् ॥ ७२ ॥

लावण्यपूरनिवहां मनोनयननन्दिनीम् ।
रसालां रुचिरां दूरात्सौधवातायनोद्गताम् ॥ ७३ ॥
दृष्ट्वा विमोहितमना बभूवाविकृतोपि सन् ।
विचारयामास तदा अहो किमिदमद्भुतम् ॥ ७४ ॥
यत्पदाब्जनखच्छायालावण्याब्धिनिमज्जितम् ।
मन्मना न पुनस्तस्मादुत्थातुं च समीहते ॥ ७५ ॥
एकदेशस्थलावण्यपूरमग्नं मनो यदि ।
अन्यावयवसौन्दर्यं कथं लक्षीकरोतु तत् ॥ ७६ ॥
यत्संकल्पपथातीतमुपमानसमुज्झितम् ।
श्रवणनायमश्राव्यं शोभाधाम किमद्भुतम् ॥ ७७ ॥
रहस्यलीलाधिकृताः सख्यः सन्ति सहस्रशः ।
विहरन्ति च कृष्णेन तादृश्यः केलिलम्पटाः ॥ ७८ ॥
लीलारहस्यमतुलं कथं द्रक्ष्येहमातुरः ।
द्रक्ष्येहमपि चेत्कृष्णोऽनुग्रहं कुरुते मयि ॥ ७९ ॥
अनुग्रहेण सेत्स्यन्ति कार्याणि विषमाण्यपि ।
दुर्घटानि दुराराध्यतमान्यपि न संशयः ॥ ८० ॥
तस्मान्मनोरथमिमं कृपासिन्धुरयं मम ।
फलितं कुरुतादेवं विमृश्य हृदये निजे ॥ ८१ ॥
स्वकं धामागमन्नत्वा दूरात्कृष्णमलक्षितम् ॥ ८२ ॥

इति श्रीमत्पुराणसंहितायां सिद्धान्तसारे शिवव्याससंवादे अक्षरस्य पुरुषोत्तमदर्शनं नाम द्वाविंशोऽध्यायः ॥ २२ ॥
आदितः श्लोकानां समष्ट्यङ्काः ॥ १८११ ॥



## ॥ त्रयोविंशोऽध्यायः ॥ २३ ॥

॥ शिव उवाच ॥

कूटस्थ एव तद्धाम्नि कृष्णदर्शनलालसः ।
नित्यं प्रयाति परमप्रेमपूरितमानसः ॥ १ ॥
प्रविष्टमात्रः पुरुषः कूटस्थोऽनन्दधामानि ।
आनन्दावरणव्याप्तचित्प्रकाशोऽधितिष्ठति ॥ २ ॥
स्फाटिकः पद्मरागीयमहःसंवलितो यथा ।
तिरोहितस्वभावोऽभूदानन्दपरिपूरितः ॥ ३ ॥
तत्सान्निध्यान्मणिः श्वेतोऽन्यत्र नीतो यदा भवेत् ।
स्वभावं लभते पूर्वमागन्तुकमतस्त्यजेत् ॥ ४ ॥
तथानन्दमयीभूमिबहिर्भूतो यदाक्षरः ।
तदैव निजमाहात्म्यमनुगच्छति पूर्ववत् ॥ ५ ॥

॥ व्यास उवाच ॥

अखण्डानन्दरूपेऽस्मिन्नानन्दव्याप्तिरुच्यते ।
तदंशभूतजीवानामप्यानन्दः कथ न हि ॥ ६ ॥

॥ शिव उवाच ॥

आनन्दाध्यासवशतश्चैतन्यं सर्वतो न हि ।
व्याप्तं भवति तत्रैव परमानन्दधामनि ॥ ७ ॥
देशावच्छेदतद्व्याप्तो बहिश्चैतन्यविग्रहः ।
कूटस्थो भाति वै तस्माद्विश्वात्मा विश्वविग्रहः ॥
न जीवास्तेन सर्वत्र परमानन्दभागिनः ॥ ८ ॥

॥ व्यास उवाच ॥

सच्चिदानन्दरूपं हि भेदत्रयविवर्जितम् ।
ज्ञानानन्दौ कथं भातः परस्परविरोधिनौ ॥ ९ ॥

॥ शिव उवाच ॥

ज्ञानानन्दौ विजातीयौ न मन्तव्यौ त्वया मुने ।

आविर्भवेद्यदानन्दो ज्ञानं चैव तिरोहितम् ॥
ज्ञानमाविर्भवेद्यत्र तत्रानन्दस्तिरोहति ॥ १० ॥
रसस्वाभाव्यतो लीलाद्वयव्यक्तिकृते बृहत् ।
द्विधावज्ञाति भगवन्नेकमद्वैतमस्त्यपि ॥ ११ ॥
यथैकस्मिन् शुक्तिपुटे पीतरक्तादयो गुणाः ।
ब्रह्मव्यक्तिद्वये तद्वज्ज्ञानानन्दौ पृथक्स्थितौ ॥ १२ ॥
यथा पुष्पविशेषेषु दलवर्णाः पृथक् पृथक् ।
दले दले स्वतन्त्रास्ते पुष्पे तेषां समन्वयः ॥ १३ ॥
सच्चिदानन्दधर्माणां ब्रह्मण्येव समन्वयः ।
लीलार्थं व्यक्तिभेदे तु विभक्ताविव संस्थितौ ॥ १४ ॥
एकमेव श्रुतिप्रोक्तं सच्चिदानन्दलक्षणम् ।
द्वे ब्रह्मणीति च पुनः प्रोच्यते कथमन्यथा ॥ १५ ॥
तस्मादेवाक्षरव्यक्तौ चित्प्रकाशो विजृम्भते ।
तदतीतव्यक्तिभेदे परमानन्द एव हि ॥ १६ ॥
सत्ता तूभयसंश्लिष्टा सच्चिन्मात्रोऽक्षरस्ततः ।
सदानन्दोऽक्षरातीतः कृषिर्भूवाचकोऽस्तितः ॥ १७ ॥
केप्याहुरक्षरं ब्रह्म सच्चिदानन्दलक्षणम् ।
आनन्दलवसम्बन्धात् घटेतापि महामुने ॥ १८ ॥
इमां दृष्टिमवष्टभ्य सच्चिदानन्दमक्षरम् ।
वर्णयन्त्येकमद्वैतं व्यक्तिभेदविवर्जितम् ॥ १९ ॥
कथयन्ति च भूतानि तदारब्धमिदं जगत् ।
पिण्डब्रह्माण्डसहितं पुरुषः क्षरसं(ज्ञकः)ज्ञितः ॥ २० ॥
हिरण्यगर्भो जीवश्च पिण्डब्रह्माण्डसंस्थितौ ।
कूटस्थमक्षरं तद्धि वर्णयन्तीति वादिनः ॥ २१ ॥
तयोर्द्वयोरतीतस्तु परात्मा पुरुषोत्तमः ।
एवं सङ्कुचितज्ञाना वादिनो बहुधा जगुः ॥ २२ ॥
केचिदाहुः क्षरं विश्वमक्षरं प्रकृतिः परा ।

पुरुषश्चाक्षरातीतो य उक्तः प्रकृतेः परः ॥ २३ ॥
नश्वरत्वात्क्षरं विश्वं नित्या प्रकृतिरक्षरा ।
पुरुषश्चाक्षरातीतः पुरुषोत्तम एव सः ॥ २४ ॥
वदन्ति वादिनो मूढा अनुसन्धानवर्जिताः ।
हिरण्यगर्भो जीवश्च यद्यक्षरतयोच्यते ॥ २५ ॥
आत्यन्तिकं तु प्रलयं न सहाते कथं नु तौ ।
हिरण्यगर्भजीवाख्यं तस्मान्नाक्षरसंज्ञितम् ॥ २६ ॥
अक्षरत्वेन प्रकृतिं ये वदन्ति विमोहिताः ।
पुरुषत्वेन निर्दिष्टं कथं पश्यन्ति ते न हि ॥ २७ ॥
तस्मात्क्षरं विश्वमिदमक्षरं ब्रह्म केवलम् ।
श्रीकृष्णश्चाक्षरातीतः पुरुषोत्तमसंज्ञितः ॥ २८ ॥
रसरूपतया यस्तु श्रुतिभिः परिगीयते ।
संयोगविप्रलम्भाभ्यां नित्यं क्रीडत्यसौ रसः ॥ २९ ॥
क्रीडने विप्रलम्भाख्ये द्वारमक्षर एव हि ।
सखीपदनखज्योत्स्नादर्शनोत्थमनोरथः ॥ ३० ॥
स एव भावरूपस्तु चिन्ताबीजमथावपत् ।
नित्यं चिन्तयतस्तस्य तन्मनोरथचेतसः ॥ ३१ ॥
उन्मिमेष तदा चित्ते शक्तिर्नाम सुमङ्गला ।
तया विमोहितमतिर्यदा दर्शनकाम्य(क्ष)या ।
नित्यं प्रयाति कूटस्थस्तल्लीलादर्शनोत्सुकः ॥ ३२ ॥
कृष्ण क्रीडागृहाद्दूरे वर्तमानः कृताञ्जलिः ।
इमं मन्त्रं सकृज्जप्त्वा प्रतियाति निजं स्थलम् ॥ ३३ ॥
नाहं स्थातुं च शक्नोमि त्वल्लीलादर्शनादृते ।
दर्शयस्व महाराज लीलां दृग्गोचरे स्थिताम् ॥ ३४ ॥
तस्यैवं वर्तमानस्य काले बहुतिथे गते ।
अनेककोटिमार्त्तण्डप्रकाशोज्ज्वलधामनि ॥ ३५ ॥
नवभूम्यात्मके दीप्तचन्द्रशालाविराजिते ।

आधारभूमिकामेत्य रत्नसिंहासनोत्तमे ॥ ३६ ॥
एकदा संस्थितः कृष्णः स्वामिन्या तत्सखीवृतः ।
चक्रे बहुविधा लीलाः शृङ्गाररसपेशलाः ॥ ३७ ॥
ताभिः प्रसादितः सम्यग्विलासैर्विभ्रमाङ्कितैः ।
प्रसन्नः प्राह विप्रर्षे कृष्णः कामस्वरूपधृक् ॥ ३८ ॥
अद्याहं वः प्रसन्नोऽस्मि प्रीयतां किञ्चिदद्भुतम् ।
सम्पादयिष्ये सततं यद्वो मनसि वर्तते ॥ ३९ ॥
न दुर्लभतरं किञ्चित्परमानन्दधामनि ।
तथापि स्पृहणीयं वो यदि किञ्चित्करोम्यहम् ॥ ४० ॥
एवं कर्णपुटैः पीत्वा प्रेष्ठवाक्यसुधां प्रियाः ।
जहसुर्भावगम्भीरं प्रेमव्रीडानताननाः ॥ ४१ ॥

॥ सख्य ऊचुः ॥

भो भो प्राणपते किञ्चिद्दुर्लभं किं भवेदिह ।
वयं पूर्णाः पूर्णकामास्त्वत्कामाः किं वृणीमहे ॥ ४२ ॥
एवमुक्त्वा प्रियाः सर्वास्तूष्णीमासुर्यदा तदा ।
इच्छा सुमङ्गला शक्तिस्तन्मनांसि समाविशत् ॥ ४३ ॥
स्वामिन्याद्याः प्रियाः सर्वास्तदा व्यामोहितान्तराः ।
एतस्मिन्नन्तरे साक्षात्स्वामिनी स्वसमीपगाम् ॥ ४४ ॥
मिहिलां काञ्चन सखीं प्रत्युवाच विमोहिता ।

॥ श्रीस्वामिन्युवाच ॥

मिहिले कथयैताभ्यो यदहं ते निवेदये ॥ ४५ ॥
साक्षाद्वक्तुमहं लज्जे तस्माद्वक्ष्ये भवन्मुखैः ।
प्रसन्नो यदि चेत्कृष्ण देहि नो वाञ्छितं हृदि ॥ ४६ ॥
प्रपञ्चलीलामतुलां द्रष्टुमिच्छामहे वयम् ।
वृणुध्वमेवं सकलाः सह सम्भूय योषितः ॥ ४७ ॥
स्वामिन्याज्ञां समासाद्य मिहिला ताः सखीः प्रति ।
प्रोवाच शिक्षितं सर्वं ततस्ताः कृष्णमब्रुवन् ॥ ४८ ॥

॥ सख्य ऊचुः ॥

प्राणनाथ प्रियाधार वचनं नो निशामय ।
दुर्लभं नास्ति नः किञ्चित्परमानन्दधामनि ॥ ४९ ॥
त्वत्स्वरूपसुधापानमत्तानां किमपेक्षितम् ।
यत्र यत्रोपलभ्येत तत्र स्यार्चन्मनोरथः ॥ ५० ॥
पूर्णानन्दपदे नाथ दुर्लभं किं नु विद्यते ।
तथापि महती नाथ तृष्णैका त्वत्प्रियासु च ॥ ५१ ॥
कुरुते महतीमार्तिं तां वारय महाभुज ।
अक्षरप्रकृतेर्लीला विचित्रा या प्रवर्तते ॥ ५२ ॥
तद्दिदृक्षा तु नश्चित्तमाकुलीकुरुते प्रभो ।
तल्लीलादर्शनं नोद्य कारयाश्वविचारतः ॥ ५३ ॥
यदि प्रसन्नः प्राणेश प्रियाणां प्रार्थितं कुरु ।
प्रियाणां प्रार्थितं श्रुत्वा कृष्णः प्राह हसन्निव ॥ ५४ ॥

॥ श्रीकृष्ण उवाच ॥

विचाररहितं ब्रूथ सख्यः केन प्रतारिताः ।
कथं घटेत लीलायाः प्राकृताया निदर्शनम् ॥ ५५ ॥
प्राकृता मोहिनी लीला स्वात्मभित्तिसुधामसी ।
यत्र प्रवेशमात्रेण स्वात्मानमुत्सृजेद्बुधः ॥ ५६ ॥
पञ्चभूतमयम्पिण्डमात्मत्वेनाभिमन्यते ।
तिरोभवेयुः स्वात्मधर्मा उद्भवन्ति ततोऽन्यथा ॥ ५७ ॥
आचरिष्यथ भो सर्वा मायाकार्याणि सर्वथा ।
तृष्णा पिशाची यत्रास्ते स्वात्मानन्दापहारिणी ॥ ५८ ॥
कामक्रोधादिनामानो यत्र षट् दस्यवः स्थिताः ।
प्राविष्टाः क्रूरकर्माणो विलुम्पन्ति बलाद्धनम् ॥ ५९ ॥
यत्र दैन्यं पारतन्त्र्यमात्मापह्नव एव च ।
न स्वीयजनता यत्र येन विश्राम्यते क्षणम् ॥ ६० ॥
पुत्रपौत्रादिनाशोत्थदुःखदावाग्निपीडनम् ।

सा कीला शून्यसरसीतुल्यरूपावधार्यताम् ॥ ६१ ॥
यत्र क्रीडन्ति नो हंसाः काकोलूकशिवास्पदे ।
यत्रात्मानं तु विस्मृत्य रूपान्तरमुपेत्य च ॥ ६२ ॥
तत्र लब्धेन हृष्यन्ति शोचन्ति च रुदन्ति च ।
न यत्रोत्तारणविधिर्मग्नस्येवाम्बुधौ यथा ॥ ६३ ॥
संसारसागरे घोरे कालव्यालदुरासदे ।
तृष्णासलिलसङ्कीर्णे क्रोधोर्वे कामगर्तके ॥ ६४ ॥
रागद्वेषतरङ्गाढ्ये मदग्राहभयानके ।
त्रिवर्गक्षुल्लकाचिते ह्यहंकारतिमिङ्गिले ॥ ६५ ॥
अक्षमातुष्टयशान्त्यादिसरिल्लक्षाभिसेविते ।
इन्द्रियोरगसंकीर्णे विषयोद्यानमण्डिते ॥ ६६ ॥
विमोहवप्रवलये स्मृतिच्यवनफानिले ।
नानापाखण्डजम्बाले जराशैवालदूषिते ॥ ६७ ॥
लाभप्रवालरुचिरे लोभलुब्धकसेविते ।
मायाजालावृते विश्वक् पिण्डबुद्बुदसङ्कुले ॥ ६८ ॥
मानित्वगाम्भीर्यवति दम्भपूरातिवेगिनि ।
स्वरूपस्मृतिमर्यादामुद्रिते नाविकोज्झिते ॥ ६९ ॥
व्यापारकर्करकुले चिन्तावर्तसुभीषणे ।
तत्रोत्पतितुमिच्छा वः कुत एतदभिसङ्गता ॥ ७० ॥
पतितानां च वः कोपि प्रतीकारो न विद्यते ।
भूतप्रेतपिशाचादिगृहे भिक्षामटिष्यथ ॥ ७१ ॥
भवतीनां कथं कालो गमिष्यति मया विना ।
यदि वा यास्यते कालः प्रेमरीतिरियं तु का ॥ ७२ ॥
अतः साम्राज्यमुत्सृज्य भिक्षामटितुमिच्छथ ।
हस्तस्थममृतं हित्वा बुभुक्षागरलस्य तु ॥ ७३ ॥
रत्नराशिं परित्यज्य काचखण्डान्गृहीष्यथ ।
रत्नमन्दिरमुत्सृज्य श्मशाने वासमिच्छथ ॥ ७४ ॥

फुल्लपद्मं सन्त्यक्त्वा मृगतृष्णां नु धावथ ।
मामानन्दं परित्यज्य पाषाणं पूजयिष्यथ ॥ ७५ ॥
लीलाक्रीडारसानन्दानुभवं परिहास्यथ ।
दैन्यकार्पण्यदुःखाक्तमाकारमुपयास्यथ ॥ ७६ ॥
गाढान्धकारमार्गेषु कथं नु विचरिष्यथ ।
लीलाकार्याणि सन्त्यक्त्वा दुष्टकार्याण्युपास्यथ ॥ ७७ ॥
गुणसौन्दर्यचातुर्यवैपरीत्यमवाप्स्यथ ।
मां न द्रक्ष्यथ कुत्रापि विस्मरिष्यथ सर्वदा ॥ ७८ ॥
धामगेहसर्खीसख्यविस्मृतिर्भविता किल ।
एवं विधानिष्टगताविष्टबुद्धिः कुतः श्रिता ।
तस्मान्निर्बन्धमुत्सृज्य विहरध्वं निजे पदे ॥ ७९ ॥
विषवृक्षाङ्कुर इव जातोऽयं वो मनोरथः ।
धैर्यखड्गेन तं छित्वा नित्यश्रेय अवाप्स्यथ ॥ ८० ॥
इत्युक्त्वा विरते पत्यौ कृष्णे परमपूरुषे ।
अन्योन्यालोकनपरा पुनर्वाक्यमथाब्रुवन् ॥ ८१ ॥

इति श्रीपुराणसंहितायां सिद्धान्तसारे श्रीकृष्णसखीसंवादे त्रयोविंशोऽध्यायः ॥ २३ ॥
॥ आदितः श्लोकानां समष्ट्यङ्काः ॥ १८९९ ॥

---

## ॥ चतुर्विंशोऽध्यायः ॥ २४ ॥

### ॥ व्यास उवाच ॥

भगवन् भूतभव्येश भूतनाथ जगत्प्रभो ।
इच्छाशक्तिर्बलवती यया सम्मोहितोऽक्षरः ॥ १ ॥
कृष्णप्रिया अपि तथा लीलामात्रकलेवराः ।
अन्यथाभिनिवेशं च कारितास्ता अपि स्फुटम् ॥ २ ॥
मायामपश्यदोषोक्त्यानिषिद्धा बहुधापि हि ।

इच्छाविमोहमापन्नाः किमूचुः स्वामिनं प्रति ॥ ३ ॥
तद्वर्णय सुराधीश शुश्रूषा जायतेतराम् ।
ब्रूयुः स्निग्धाय शिष्याय गुरवो गुह्यमप्युत ॥ ४ ॥

॥ शिव उवाच ॥

शृणु व्यास महाबुद्धे प्रवक्ष्यामि यथातथम् ।
इच्छावेशविमुग्धास्ताः प्रत्यूचुः स्वामिनं च यत् ॥ ५ ॥

॥ सख्य ऊचुः ॥

प्राणनाथ महाराज प्रियाणां प्रियकृत्प्रभो ।
जातो मनोरथश्चायं शल्यवद्व्यथतेऽनिशम् ॥ ६ ॥
तस्य चोद्धरणे शक्तो भवानेव न चापरः ।
अक्षरप्रकृतेर्लीलादर्शनेन महाभुज ॥ ७ ॥
भयं दर्शयसे भूरि तेन किं भीषिता वयम् ।
प्रियाणां प्रियकामस्य रोधनं नोचितस्तव ॥ ८ ॥
न कदाचित्त्वया नाथ प्रियाकामविघातनम् ।
कृतमद्य कथं तत्र प्रतिकूलमिहाकरोः ॥ ९ ॥
शर्करा कर्करा न स्यादमृतं न विषं भवेत् ।
चिन्तामणिर्न पाषाणो न दिवा रजनी भवेत् ॥ १० ॥
नाम्भोनिधिः स्थलमयो न प्रियश्चाप्रियो भवेत् ।
न चन्द्रश्चण्डरश्मिश्च न दया निर्दया भवेत् ॥ ११ ॥
त्वं तु कस्मात्प्रियतमः प्रियाणामप्रियंकरः ।
भूत्वा खेदयसे चित्तमुन्माथि बलवत्प्रभो ॥ १२ ॥
यद्यप्यम्भोधिदृष्टान्तैर्लीला दुःखमयीति च ।
तथापि च तरिष्यामस्त्वत्पदाम्भोजनौकया ॥ १३ ॥
त्वया नो नित्यसम्बन्धः अनित्यो न भवेत्क्वचित् ।
अतश्चिन्तैकक्लेशोऽपि हृदयं न रुणद्धि नः ॥ १४ ॥
का नाम दुर्लभा लीला मणिधाम्नि सुखास्पदे ।
तथापि भवतश्चित्तमुद्यानगिरिगोचरम् ॥ १५ ॥

अविच्छिन्नस्मृतिधरास्त्वत्समर्पितचेतसः ।
त्वत्सेवानन्यविषयाः कथं मुह्यामहे वयम् ॥ १६ ॥
न कथंचिदपि प्रेष्ठं भवन्तं विस्मरामहे ।
नास्त्यत्र दैन्यकार्पण्यं पारतन्त्र्यादिकं च यत् ॥ १७ ॥
तदपीक्षामहे तत्र कीदृशं तद्भवेदिति ।
रागद्वेषजरातृष्णाकाममोहमदादयः ॥ १८ ॥
यदि वास्मान्न बध्नन्ति प्रतिकारकरो भवान् ।
यद्यप्यनिष्टविषयो जायते वा मनोरथः ॥ १९ ॥
नासौ वाक्प्रयोगेण निराकर्तुं च शक्यते ।
स्वयमेव निवर्तेत तादृशानुभवे सति ॥ २० ॥
पुराप्यविदिता लीला यासीदक्षरसम्भवा ।
किं जातमधुना येन तद्दिदृक्षातुरं मनः ॥ २१ ॥
प्रियाणां कामपूरोसि भवानेव यतः प्रियः ।
इति सत्यं यदि प्रेष्ठ न विलम्बितुमर्हसि ॥ २२ ॥
अस्मिन्मनोरथे मुख्या स्वामिनी तदनुव्रताः ।
तावकीनाः प्रिया ह्येताः कुरु पूर्णमनोरथाः ॥ २३ ॥
इत्यातुरवचोवादैः प्रार्थितः पुरुषोत्तमः ।
न किं च नोचे हस्तेन भ्रामयन्सरसीरुहम् ॥ २४ ॥
समयत्र्यवधानेन त्रिवारं प्रार्थितो विभुः ।
अक्षरेणान्वहमपि तदधाद्धृदये निजे ॥ २५ ॥
अक्षरस्तु स्वकं धाम गत्वा निजपदे स्थितः ।
लीलाचिन्ताप्रविष्टात्मा समाधिस्थ इवाचलः ॥ २६ ॥
हृदयाकाशनिलयात्प्रादुर्भूता सुमङ्गला ।
निद्रामुत्पादयामास महामोहमयीं दृढाम् ॥ २७ ॥
तस्मिन्विमोहजलधावशेत पुरुषो महान् ।
तस्मादेव समुत्तस्थौ भूत्वा नारायणः स्वयम् ॥ २८ ॥
पञ्चावयवसंयुक्तः स एव प्रणवाभिधः ।

पञ्चावयवसंस्थाना ब्रह्माद्याः पञ्चदेवताः ॥ २९ ॥
भूतदेहेन्द्रियैश्चैव सर्वतत्त्वैश्च संयुताः ।
मोहावच्छिन्नचिद्रूपः शब्दब्रह्मात्मना स्थितः ॥ ३० ॥
अहं ब्रह्मेति मन्वानो जातो नारायणाभिधः ।
अहयोरन्तराले च सर्वं वर्णात्मकं जगत् ॥ ३१ ॥
तस्योपरिस्थितं शून्यं बिन्दुरूपेण दृश्यते ।
वाच्यवाचकवर्णात्मा यत्र शब्दो विलीयते ॥ ३२ ॥
तच्छून्यरूपा निद्रा च महामोहमयी स्मृता ।
शब्दब्रह्मात्मकस्तारो ब्रह्मकेवलमक्षरम् ॥ ३३ ॥
अमात्रं शब्दरहितं स्वरव्यञ्जनवर्जितम् ।
बिन्दुनादकलातीतं ब्रह्मकेवलमक्षरम् ॥ ३४ ॥
समात्र शब्दसहितं स्वरयञ्जनसंयुतम् ।
बिन्दुनादकलाक्रान्तं शब्दब्रह्मेति कीर्तितम् ॥ ३५ ॥
क्रोडीकृत्वा तु चैतन्यं मोहो मात्रास्वरादिभिः ॥
चित्रयित्वाकरोत्तारं नारायणमवेहितम् ॥ ३६ ॥
तस्मात्सर्वात्मकस्तारस्तारे नादः प्रतिष्ठितः ।
नादान्तः संस्थितं ज्योतिर्मुद्रितं बिन्दुमुद्रया ॥ ३७ ॥
बिन्दुर्मोहमयी निद्रा तदावरणसंवृतम् ।
नोत्तिष्ठति बृहत्तावत्कृष्णस्त्रीकामपूरणम् ॥ ३८ ॥
नारायणः स तारात्मा साहङ्कारः समुत्थितः ।
मोहमध्यात्त्रिधा भूतो गुणैः सत्त्वादिभिः पृथक् ॥ ३९ ॥
सत्त्वं रजस्तम इति मोहाज्जातं गुणत्रयम् ।
सत्त्वं परिणतं तत्र चित्तमासीत्सुनिर्मलम् ॥ ४० ॥
निद्रायामपि यज्जाग्रद्दशासम्पादकं च यत् ।
तत्र तत्प्रतिबिम्बात्मा वासुदेवः प्रकाशते ॥
योगिध्येयोऽयमेवेति शुद्धसत्त्वात्मको यतः ॥ ४१ ॥
रजोंशाभिभूतमसः परिणामादहङ्कृतेः ।

सङ्कर्षणः समभवद्भूभारह(ध)रणक्षमः ॥ ४२ ॥
किञ्चिद्रजोंशसंवीतसत्त्वस्य परिणामजम् ।
मनस्तत्राभवत्साक्षादनिरुद्धेतिसंज्ञितः[1] ॥ ४३ ॥
ज्ञानाकारा तु या वृत्तिः सा सत्त्वपरिणामजा ।
बुद्धिस्तस्यां[2] समभवत्प्रद्युम्न इति संज्ञया ॥ ४४ ॥
चत्वार एते विज्ञेया व्यास नारायणः स्वयम् ॥
चित्ताद्या वृत्तयस्तस्य प्रतिस्फुरणभूमयः ॥
आविष्कुर्वन्ति ता वासुदेवमुख्यान्विभागशः ॥ ४५ ॥
वासुदेवमुखा या या लीला क्षितितले गता ।
चक्रुस्तां तापसो देवो मन्यते मत्कृतामिति ॥ ४६ ॥
या या लीला भविष्यन्ति व्रजे वा रासमण्डले ।
तास्ताः पश्यति कूटस्थो नारायणविलोचनः ॥ ४७ ॥
स हि नारायणो जातो मोहमध्यात्समुत्थितः ।
अपश्यत तदा शून्यमेकराट् पर्यवेक्षयत् ॥ ४८ ॥
बहु स्यामित्यभिध्यातुर्यः स्पन्दः प्रथमस्त्वभूत् ।
शिवतत्त्वं तदेवाहुः षट्त्रिंशत्तत्त्ववादिनः ॥ ४९ ॥
इच्छाशक्तिः सती देवी सह प्रादुर्बभूव ह ।
शिवा देवीति वै नाम्ना शिवस्य समधर्मिणी ॥ ५० ॥
बीजभावाश्रितं विश्वं प्रोद्गिरन्ती स्वलीलया ।
शक्तितत्त्वमिदं व्यास जानीहि परमाद्भुतम् ॥ ५१ ॥
तयेच्छाशक्तिरूपिण्या समुद्गीर्णमिदं जगत् ।
आत्माभेदेन वै जानन् जातः सोऽयं सदाशिवः ॥ ५२ ॥
तत्त्वं सदाशिवमयामिदं जानीहि वाडव ।
सूर्यकोटिप्रतीकाशमतिदीप्तं महद्गुणम् ॥ ५३ ॥
तन्मध्ये दशकोटीनां संख्यायोजनपङ्कजम् ।

---

१ मनस्तत्राभवत्साक्षात्प्रद्युम्न इति संज्ञया । इ० पा० ।
२ बुद्धिस्तस्यां समभवदनिरुद्धः स एव सः । इ० पा० ।

तत्कर्णिकायामासीनः शान्त्यतीतेश्वरः प्रभुः ॥ ५४ ॥
पञ्चवक्त्रो दशभुजो विद्युत्पुञ्जनिभाकृतिः ।
निवृत्तिश्च प्रतिष्ठा च विद्या शान्तिरनुक्रमात् ॥ ५५ ॥
परिवार्य स्थिताश्चैताः शान्त्यतीतां च तं तथा ।
स एव पश्यान्निखिलं विश्वं पश्यन्निदन्तया ॥ ५६ ॥
ईश्वरोऽभिहितो विप्र तत्त्वमीश्वरनामकम् ।
इच्छाशक्तिरभूच्छुद्धविद्यानाम्नीति विश्रुता ॥ ५७ ॥
अभेददर्शिनी साक्षादिदन्ताहन्तयोरपि ।
शुद्धविद्यामयं तत्त्वं मया ते समुदीरितम् ॥ ५८ ॥
पद्मकिञ्जल्कसङ्काशः सूर्यकोटिसमप्रभः ।
सु(पु)रैः परिवृतोऽसंख्यैर्मध्ये पञ्चकलान्वितः ॥ ५९ ॥
इन्धिका[2] दीपिका चैव रेचिका मोचिका तथा ।
ऊर्ध्वगा मध्यगा तासां पञ्चमी परमा[3] कला ॥ ६० ॥
चन्द्रकोटिसमप्रख्यं तन्मध्येऽर्बुदयोजनम् ।
पद्ममध्ये समासीनमीश्वरं चोर्ध्वगामिनम् ॥ ६१ ॥
चन्द्रायुतप्रतीकाशं पञ्चवक्त्रं त्रिलोचनम् ।
इन्धिराद्यैर्वृतं देवं शूलपाणिं जटाधरम् ॥ ६२ ॥
तस्योत्सङ्गगता देवी चोर्ध्वगा परमा शिवा ।
ईश्वरः शुद्धविद्येति तत्त्वद्वयमुदीरितम् ॥ ६३ ॥
नारायणांशभूतेषु जीवेषु निखिलेषु च ।
भेदबुद्धिस्वरूपेण मायाख्याभूत्सुमङ्गला ॥ ६४ ॥
मायातत्त्वमिदं विप्र जानीहि परमाद्भुतम् ।
यथा जलस्थितः सूर्यो जलसंवालितान्करान् ॥ ६५ ॥
भित्तौ प्रसारयेत्तद्वद्देवो नारायणो हि सः ।
स्वाभासान् जीवसंज्ञान्वै स्वात्मभित्तौ समुल्लिखेत् ॥६६॥

---

१ शान्त्यतीता इति देवतायाा नाम । २ क्वचिदिन्धिकास्थले 'बन्धिका' इत्यपि पदम् । ३ परमायाः 'परा' इति नामान्तरम् । ४ इंधिराद्यैः परिवृतं शूलपा०

तांश्च तादृग्विधान्दृष्ट्वा शक्तिरिच्छा सुमङ्गला ।
ज्ञानविद्राविणी शक्तिः स्वरूपेण तिरस्कृतान् ॥ ६७ ॥
जडानजीवयत्किंचिज्ज्ञत्वसंपादनोत्सुका ।
विद्येति गीयते व्यास विद्यातत्त्वमुदाहृतम् ॥ ६८ ॥
नित्याखंडा परा तृप्तिः कूटस्थाभासजीवगा ।
तां ग्रसंती मुने व्यास सुखे विषयसंभवे ॥ ६९ ॥
रंजयन्ती पुनः ख्याता रागतत्त्वस्वरूपिणी ।
नारायणांशभूतानां जीवानां शक्तयस्तु याः ॥ ७० ॥
संपूर्णकर्तृताद्याश्च संहरन्ती सुमंगला ।
स्वात्मप्रकाशनानीशं संध्येवार्कं वितन्वती ॥ ७१ ॥
किंचित्कर्तृत्वधर्मैश्च योजयंती विभागशः ।
जीवेषु संस्थिता व्यास कलारूपेण सा स्मृता ॥ ७२ ॥
कलातत्त्वमिदं व्यास मया तुभ्यं प्रकाशितम् ।
ब्रह्मकारणमित्येतद्विश्वं वीक्ष्य सदात्मकम् ॥ ७३ ॥
परिच्छेदकरी शक्तिः कालतत्त्वात्मिकाभवत् ।
स्वतन्त्रतापरा शक्तिर्ब्रह्मणो जीवगापि सा ७४ ॥
सङ्कोचयन्ती तामेव निषेधविधिगोचरा ।
कृत्वा कृत्येष्वकृत्येषु यमयन्ती सुमङ्गला ॥ ७५ ॥
नियतिः कथिता व्यास नियत्याख्यमुदीरितम् ।
इच्छादिशक्तित्रितयं स्थितं नारायणे च यत् ॥ ७६ ॥
अव्याहतं तज्जीवेषु संक्रान्तं स्थास्यति ध्रुवम् ।
अयुक्तमिति मन्वाना शक्तिरिच्छा सुमङ्गला ॥ ७७ ॥
तत्तिरोधाय प्रकृतिं गुणसाम्यमथासृजत् ।
प्रकृत्याख्यमिदं तत्त्वं सर्वकारणकारणम् ॥ ७८ ॥
इच्छास्या(सा)भूद्रजोरूपा सत्त्वं ज्ञानात्मिकाऽभवत् ।
क्रियाशक्तिस्तमोरूपा बभूव मुनिपुङ्गव ॥ ७९ ॥
इच्छालीनमहङ्कारं रज एव ससर्ज ह ।

ज्ञानशक्तिविलीनां च बुद्धिं सत्त्वमथासृजत् ॥ ८० ॥
क्रियालीनं मनस्तद्वत्तम एव ससर्ज ह ।
तमसोऽहङ्कृतियुतात्सशब्दमभवन्नभः ॥ ८१ ॥
नभसः स्पर्शगुणवान्बभूवाथ समीरणः ।
वायोश्च रूपवत्तेजस्तेजसः सरसं जलम् ॥ ८२ ॥
जलाद्गन्धवती पृथ्वी दशतत्त्वान्यमूनि वै ।
रजः सत्त्वोपसंसृष्टं पञ्चभूतेभ्य एव च ॥ ८३ ॥
इन्द्रियाणि दशाभूवन् ज्ञानकर्मविभागशः ।
भूतैरेतैः समुदितैर्मोह एव समुद्गते ।
अण्डे नारायणो भूत्वा प्रविश्यापश्यदक्षरः ॥ ८४ ॥
नारायणेन रूपेण द्रष्टा दृश्यं प्रपश्यति ।
तथापि मनुते स्वस्मिन्पश्यामीति विमोहितः ॥ ८५ ॥
बलीयानेष मोहोयमावृत्याक्षरमोजसा ।
उत्पाद्य विश्वमखिलं स्वशक्त्या समदर्शयत् ॥ ८६ ॥
सरिद्द्वीपवनोद्यानगिरिसागरसंकुलम् ।
सप्तपातालसहितं लोकैर्भूरादिभिर्युतम् ॥ ८७ ॥
चन्द्रसूर्याग्निनक्षत्रग्रहताराभिरन्वितम् ।
कालकर्मस्वभावैश्च कार्यकारणलक्षणैः ॥ ८८ ॥
दिक्क्षेत्रवेदमन्त्रादिपुराणन्यायमिश्रितम् ।
धर्माधर्मैः पुण्यपापैस्तत्तद्गतिभिरन्वितम् ॥ ८९ ॥
मन्त्रसाधनसंस्कारयागदीक्षाव्रतान्वितम् ।
अष्टाङ्गयोगसंसिद्धयोगिभिश्च तपस्विभिः ॥ ९० ॥
वर्णाश्रमसमायुक्तं ददर्श स्वात्मिकं जगत् ।
जाग्रत्संस्कारवच्चित्तपरिणामविजृम्भितम् ॥ ९१ ॥
पश्यामीति च यज्ज्ञानं विषयानवगाहते ।
तदेव तादृशं पश्चात्कूटस्थे पर्यवस्यति ॥ ९२ ॥
यथा घटादिकार्याणि मृदि विश्राम्य तिष्ठति ।

तत्प्रकाशादभिन्नत्वाद्विश्वाम्येदक्षरे जगत् ॥ ९३ ॥
नित्यः सर्वगतः स्थाणुः प्रकाशः परमात्मनः ।
तदध्यस्तमिदं विश्वं सह तेन प्रकाशते ॥ ९४ ॥
अस्तित्वं च प्रकाशत्वमसज्जडविनाशिषु ।
सच्चित्स्वरूपात्कूटस्थान्नित्यात्संक्रामति स्फुटम् ॥ ९५ ॥
ज्ञानानि तत्तद्विषया अहङ्कारेनुसञ्जते ।
साभासे सूत्रमणिवद्भासितास्तेन केवलम् ॥ ९६ ॥
स्फुरणं च ततः सत्तां लब्ध्वा कूटस्थगोचराः ।
नारायणमुखेनासौ सर्वानन्तः प्रपश्यति ॥ ९७ ॥
यथा सुप्तः पुमान् कश्चित्स्वप्ने गिरिवनादिकम् ।
पश्यन्नपि बहिर्भूतमन्तरे च प्रपश्यति ॥ ९८ ॥
स्वसत्तास्वप्रकाशाभ्यां व्याप्तं स्वाविद्ययार्पितम् ।
स्वया भासा भासितया स्वस्मिन्कल्पितमायया ॥
प्रकाशसत्तासङ्कोचात्सुषुप्तौ मनसो लये ।
सर्वथा न प्रकाशन्ते स्वयं जडमसत्किल ॥ १०० ॥
तस्मादन्तःस्थितं पश्येन्न बहिःस्थं कदाचन ।
न तथा च बहिर्गत्वा तत्र जाग्रत्प्रसङ्गतः ॥ १०१ ॥
तथाक्षरोऽपि विश्वात्मा मोहमय्यैव निद्रया ।
स्वाभास्यया कल्पितया दुःखासज्जडरूपया ॥ १०२ ॥
पश्च ब्रह्मात्मके मञ्चे शायितो मोहितो भृशम् ।
अन्तःस्थं पश्यते विश्वं बहिर्वद्वासनामयम् ॥ १०३ ॥
ददर्श तत्र जम्ब्वाख्यद्वीपान्तर्गतभारतम् ।
तत्रापश्यन्मधुवनं तदन्तःस्थं च गोकुलम् ॥ १०४ ॥
गोपगोपीगणाकीर्णं मण्डितं सितगोवृषैः ।
यमुनापुलिनानन्दं राजद्गोवर्धनाचलम् ॥ १०५ ॥
यत्र वृन्दावनं दिव्यं वनं कामदुघैर्द्रुमैः ।
कुञ्जैर्नानाविधैर्भातं कूजद्भृङ्गविहङ्गमम् ॥ १०६ ॥

लताकुसुमसौरभ्यमत्तालिकुलसङ्कुलम् ।
फलपुष्पनमद्वृक्षशाखाक्रान्तमहीतलम् ॥ १०७ ॥
अभ्रंलिहैर्महातालैरर्जुनैर्वटपिप्पलैः ।
उत्क्षिप्यन्ते सूर्यकराः समन्तात्तापवर्षिणः ॥ १०८ ॥
यमुनानीरसंसर्गमन्दमारुतकम्पितम् ।
नृत्यन्मयूरनिकरकलापोज्जृम्भितान्तरम् ॥ १०९ ॥
अत्र निर्विश्विशुर्गोपा नन्दाद्याः सकलत्रकाः ।
पृथिव्यां यत्र कुत्रापि प्रादुर्भूताः स्वलोकतः ॥ ११० ॥
एवं ददर्श भगवान्मोहमध्येण्डमुत्थितम् ।
मोहाविष्टोण्डमाविश्य जातो नारायणः स्वयम् ॥ १११ ॥
ततो विष्णुस्ततो ब्रह्मा ततो रुद्रादयोऽभवन् ।
श्वेतद्वीपाख्यवैकुण्ठे भूस्थे विष्णुरवास्थितः ॥ ११२ ॥
ब्रह्मा तु नाभिकमलाज्जातो नारायणस्य च ।
ब्रह्मणो दश पुत्रास्तु जाता अत्रिमुखा मुने ॥ ११३ ॥
जज्ञे त्रिनेत्रजश्चन्द्रो बुधस्तस्मादजायत ।
बुधात्पुरूरवा जज्ञे चन्द्रान्वयविभूषणम् ॥ ११४ ॥
तद्वंशाम्भोनिधौ जातो यदुश्चन्द्र इवापरः ।
तदन्वये प्रादुरासीत्सुतपा यः प्रजापतिः ॥ ११५ ॥
वसुदेवाभिधः साक्षात्पृश्निर्जाता च देवकी ।
उग्रसेनोऽभवद्राजा यदुवंशविभूषणम् ॥ ११६ ॥
अंशाः सुराणामभवन्यादवा इति विश्रुताः ।
श्वेतद्वीपपतेश्चापि पार्षदाः सुमहत्तराः ॥ ११७ ॥
धैर्यगाम्भीर्यसौन्दर्यबलबुद्धिभिरुन्नताः ।
स्वस्वदेवीसमायुक्तास्तेऽपि यदुकुलेऽवसन् ॥ ११८ ॥
भाराक्रान्ता यदा भूमिर्व्याकुलासुरभूभुजाम् ।
ब्रह्माणं सा समागत्य स्वदुःखं च न्यवेदयत् ॥११९॥
ब्रह्मा तद्वाक्यमाकर्ण्य सान्त्वयामास तां गिरा ।

करिष्यति हरिस्ते शं मा दुःखं कुरु पुत्रिके ॥ १२० ॥
तां विसृज्य ततो ब्रह्मा महेन्द्राद्यमरैः सह ।
जगाम क्षीराम्बुनिधेस्तीरं परमसुन्दरम् ॥ १२१ ॥
श्वेतद्वीपाख्यवैकुण्ठद्वारं क्षीराम्बुधौ स्थितम् ।
आवृतं मायया देव्या दुर्गमं तत्सुरासुरैः ॥ १२२ ॥
वेदार्थगर्भिताभिस्ते स्तुतिभिर्हरिमस्तुवन् ।
स्तुत्यन्ते भगवानाह खगिरा कमलासनम् ॥ १२३ ॥
मथुरायां यदुकुले जायन्तामखिलामराः ।
तत्पत्न्यश्चापि सेवार्थं सम्भवन्तु निजांशतः ॥ १२४ ॥
ममापि पार्षदवराः प्रभावबलशालिनः ।
आविर्भविष्यन्त्यचिराद्ये ये खगमृगादयः ॥ १२५ ॥
मच्छक्तिः परमा लक्ष्मीर्मथुरामेष्यति ध्रुवम् ।
तयानुरञ्जिता सम्यक् पुरी सा स्वर्गतोऽधिका ॥ १२६ ॥
अहमप्यागमिष्यामि सर्वलोकहिताय वै ।
अपनेष्ये भुवो भारमसुराख्यं सुदुःसहम् ॥ १२७ ॥
तस्मात्प्रयान्तु धामानि स्वानि स्वानि महेश्वराः ।
पृथिव्यामवताराय मुख्यस्त्वंशाभिजाभिजान् ॥ १२८ ॥
इति श्रुत्वा स्ववाक्प्रोक्तं वेधा प्राहामरान्प्रति ।
तदा प्रभृति ते देवाः स्वांशैर्यदुकुले वसन् ॥ १२९ ॥
पार्षदप्रवरा विष्णोस्तेऽपि तत्राविशन्स्वयम् ।
श्वेतद्वीपाख्यवैकुण्ठतुलनामाप सा पुरी ॥ १३० ॥
एवं ब्रह्माण्डसम्पत्तिर्जाता स्वप्नमयीशितुः ।
भूत्वा नारायणो द्रष्टा दृश्यमक्षर ऐक्षत ॥ १३१ ॥

इति श्रीपुराणसंहितायां सिद्धान्तसारे अक्षरस्वप्नब्रह्मा-
ण्डोत्पत्तिर्नाम चतुर्विंशोऽध्यायः ॥ २४ ॥
॥ आदितः श्लोकानां समष्ट्यङ्काः ॥ २०३० ॥

## ॥ पञ्चविंशोऽध्यायः ॥ २५ ॥

॥ व्यास उवाच ॥

धन्योस्म्यनुग्रहीतोस्मि भवता करुणानिधे ।
रहस्यं परमं दिव्यमुक्तवानसि यन्मम ॥ १ ॥
यद्बोधाज्जगज्ज्ञातमिति ते यदुदीरितम् ।
तत्र संशयमापन्नं चेतो मे खिद्यतेतराम् ॥ २ ॥
स्वस्वरूपभ्रमः स्वप्नः परार्थस्यानुदर्शनम् ।
हेतुर्मोहोत्र नान्योस्ति स चाज्ञानविजृम्भितः ॥ ३ ॥
अविलुप्तदृशस्तस्य दृष्टिलोपः कथं भवेत् ।
प्रविष्टा विकृतिः सेयं सन्मात्रेऽविकृतेऽक्षरे ॥ ४ ॥
को विशेषस्तदा तस्य जीवेनाज्ञेन शङ्कर ।
पराणुद महेशान हृदिस्थं संशयं मम ॥ ५ ॥

॥ शिव उवाच ॥

मुने ते साधु प्रश्नोऽयं कथावैशद्यहेतवे ।
शृणुष्वावहितः सम्यक् प्रवक्ष्यामि यथार्थतः ॥ ६ ॥
शक्यते केन वा वक्तुमक्षरेऽज्ञानसम्भवम् ।
तथापि निगमो वक्ति तत्त्वं वेत्सि न किं मुने ॥ ७ ॥
अजामेकां शुक्लकृष्णां लोहितां बहुधा प्रजाः ।
सृजन्तीं तामजो ह्येकः अनुशेतेऽविकारिणीम् ॥ ८ ॥
तया सन्दर्शितान् भोगानुपभुज्य महच्चरान् ।
त्यजत्येनां ततः साक्षात्स्वस्वरूपस्थितो भवेत् ॥ ९ ॥
इति वेदवचस्तथ्यं प्रमाणैर्निखिलैः स्तुतम् ।
केचित्प्रमाणं प्रत्यक्षमिति ते नास्तिका जगुः ॥ १० ॥
नास्तिकानां समस्तानां चार्वाको मलरूपभाक् ।
प्रत्यक्षान्न परं किञ्चित्प्रमाणं तस्य विद्यते ॥ ११ ॥
वदत्येवमसौ मूढो यदि प्रत्यक्षमन्तरा ।

अस्तित्ववादिनामर्थाः कदाचिद्व्यभिचारिणः ॥ १२ ॥
प्रत्यक्षविषये नास्ति व्यभिचारः कदाचन ।
तस्मात्प्रत्यक्षमेवैकं चार्वाको मन्यते मुने ॥ १३ ॥
चत्वार्य्येव हि भूतानि नास्त्याकाशे प्रमाणता ।
अरूपत्वादप्रत्यक्ष इति तत्वानि मन्यते ॥ १४ ॥
लोकाः स्वर्गादयश्चापि तदुत्पादक ईश्वरः ।
सुखदुःखपुण्यपापभोक्तात्माऽन्यो न विद्यते ॥ १५ ॥
विद्यते चेदसौ देहाद्घटवत्स्फुरतां पुरः ।
जीवाभावात्पुण्यपापकल्पना कस्य युज्यते ॥ १६ ॥
पुण्याभावे न ते लोकाः स्वर्गाद्याः वेदकल्पिताः ।
पापाभावान्न नरकं प्रत्यक्षविरहादिति ॥ १७ ॥
तस्मात्प्रत्यक्ष एवात्मा देहस्स्यादितरो नहि ।
अहं युवाहं वृद्धोस्मि कृष्णो गौरोनुभूयते ॥ १८ ॥
अतो वर्णाश्रमभिदा देहमात्रनिबन्धना ।
शाब्दिकानां च यद्यात्मा एक एव निरूपितः ॥ १९ ॥
वर्णाश्रमाचारभिदा कथं तैरुपपाद्यते ।
अस्तित्ववादिनां वेदे प्रमाणत्वेन कल्पिते ॥ २० ॥
दृश्यन्ते ये च संस्कारा जातकर्मादयश्च ये ।
सुखी भव चिरं जीवेत्याशिषो देहगाः स्थिताः ॥२१॥
अहं जातो म्रिये चेति देहेष्वेव प्रतीयते ।
इत्यसद्वचनावादी चार्वाकोतिविगर्हितः ॥ २२ ॥
दृश्यत्वाच्च जडत्वाच्च भौतिकत्वांशिकत्वतः ।
रूपवत्वान्न देहोयमात्मा भवति कुम्भवत् ॥ २३ ॥
परप्रकाशाधीनत्वं दृश्यत्वं नास्ति चात्मनि ।
स्वतः स्फुरणमेतस्य नास्ति तस्माज्जडः स्मृतः ॥ २४ ॥
एतादृशोपि चेदात्मा मूर्च्छामरणयोरपि ।
वर्तमानोपि नो कस्माद्भासतेहमिति स्फुटम् ॥ २५ ॥

अन्यदाभासते साक्षादहमस्मीति निश्चयात् ।
ममायं देह इत्येवमनुभूतिश्च दृश्यते ॥ २६ ॥
तस्मान्नात्मा भवेद्देहः परिणामी विकारवान् ।
बौद्धोऽनुमानं प्रत्यक्षं प्रमाणद्वयमिच्छति ॥ २७ ॥
भूतसङ्घात्मको देहो भवेदात्मा यदि स्वयम् ।
मृतदेहे कथं प्राणः श्वासोच्छ्वासं न मुञ्चति ॥ २८ ॥
तस्मात्प्राणो भवेदात्मा ह्यनुमानेन गृह्यते ।
अनुमानेन कल्पन्ते केचिदिन्द्रियमात्मवत् ॥ २९ ॥
प्राणो भवेज्जडो नात्मा चेतनानीन्द्रियाणि तु ।
आत्मानो दशधा सन्ति देहमध्ये व्यवस्थिताः ॥ ३० ॥
तेऽप्यसद्वादिनो मूढा ये वदन्तीन्द्रियात्मताम् ।
रूपादिग्रहणे चक्षुरादिः कारणमुच्यते ॥ ३१ ॥
सुषुप्तिस्वप्नयोस्तेषां व्यभिचारोऽपि दृश्यते ।
मूकान्धबधिरादीनामात्मनाशोऽभिपद्यते ॥ ३२ ॥
अहमन्धो न मे चक्षुराश्रयानुभवः स्फुटः ।
एकस्मिन्नेव देहेऽस्मिन्नात्मानो बहवो यदि ॥ ३३ ॥
एकात्मनो भवेदिच्छा पूर्वस्यां गमनं प्रति ।
अन्यस्य तु प्रतीच्यां च दाक्षिणस्यां तु कस्यचित् ॥३४॥
इतरस्य तथोदीच्यामन्योन्याकर्षितो यदा ।
चतुर्धा भिद्यते देहस्तस्मान्नात्मेन्द्रियाण्यपि ॥ ३५ ॥
शून्यमात्मेति वै कश्चित् अनुमानेन कल्पते ।
अहं सुषुप्तौ नैवासं इत्येषोऽनुभवः स्थितः ॥ ३६ ॥
अज्ञानाजगरग्रस्तः शून्यवादी विचेतनः ।
को वा सुषुप्त्यभावस्य साक्षी यो वेत्त्यभावताम् ॥३७॥
सांख्या अपि प्रभाषन्ते प्रमाणत्रयमेव हि ।
प्रत्यक्षमनुमानं च शब्दं तत्त्वविचारकाः ॥ ३८ ॥
उपमानाधिकान्येव तानि वै गौतमानुगाः ।

षट् प्रमाणानि मन्यन्ते तथा वेदान्तचिन्तकाः ॥ ३९ ॥
प्रत्यक्षमनुमानं च शब्दं साहश्यमेव च।
अर्थापत्तिरभावश्च प्रोक्तान्येतानि वै क्रमात् ॥ ४० ॥
पठन्त्यष्टौ प्रमाणानि तथा पौराणिका अपि।
सम्भवैतिह्ययुक्तानि पूर्वोक्तानि च तानि षट् ॥ ४१ ॥
प्रत्यक्षस्यानुमानादेर्व्यभिचारोऽपि दृश्यते।
तस्माद्भूयः शाब्दं (शब्दो) वै प्रमाणमिति मे मतम् ॥
शब्दप्रमाणमुत्सृज्य प्रमाणैरितरैरपि।
विचारयन्ति ये तत्त्वं ते मया नास्तिका मताः ॥ ४३ ॥
यथार्थानुभवो न स्याद्यः श्रुत्या परिहीयते।
श्रुत्यर्थेन विरुद्धश्चेत्तर्कोऽपि स्यादसंमतः ॥ ४४ ॥
तर्कदृष्टान्तयुक्त्याद्या बुध्यारोहाय केवलम्।
श्रुत्यर्थानुगतास्युश्चेत्तदा ते कार्यसाधकाः ॥ ४५ ॥
यथार्थानुभवश्चापि प्रमाणं तत्र चिन्तय।
चिदाभासे प्रतीयेत सुप्तावज्ञानसंस्थितिः ॥ ४६ ॥
सुषुप्तौ सुखमस्वाप्सं नाहं किञ्चिदवेदिषम्।
सुप्तोत्थितपरामर्शाच्छिष्टपज्ञानमात्मना ॥ ४७ ॥
राहुग्रस्तस्य सूर्यस्य कृष्णपीतो यथा तपः।
तद्वदज्ञानसंवीतकूटस्थाभास इत्यपि ॥ ४८ ॥
शुद्धा संवलिता चेति चित्तवृत्तिर्द्विधेशितुः।
लीलावलोकनोद्युक्ता शुद्धान्या विश्वसर्जिनी ॥
इच्छासृष्टाज्ञानशक्तिरावरणात्मिका स्वधा।
लीलाचिन्तातुरां वृत्तिमूर्णुनाव परात्मनः ॥ ५० ॥
तामेव निदधेऽन्यस्यां यथा कार्यद्वयं भवेत्।
परस्परविरुद्धत्वान्नान्यथा द्वयं भवेत् ॥ ५१ ॥
लीलाचिन्तातुरावृत्तिरहमात्मतयोद्गता।
इदन्तामुद्गिरन्ती सा वृत्तिः संवलिताऽभवत् ॥ ५२ ॥

प्रथमायां ततो जातो द्रष्टा नारायणोऽक्षरः ।
द्वितीयायां जगज्जातं ज्ञानमेवं बुधिद्वयं मतम् ॥ ५३ ॥
अद्वैतेऽद्वैतयोरैक्यं भविष्यति यदा तदा ।
साक्षात्स्वरूपसंसिद्धो भविष्यत्यक्षरः स्वयम् ॥ ५४ ॥
अधुना मोहसंविग्नो निद्रयेच्छानुवृत्तया ।
शेते ब्रह्ममये मञ्चे परमात्माऽक्षरो महान् ॥ ५५ ॥
अन्यथा न रसः सिध्येद्विप्रलम्भात्मको मुने ।
रसस्वभावो लुप्येत एवं जानीहि सुव्रत ॥ ५६ ॥
रसमार्गे प्रमाणानामन्यथास्थितिरीक्षते ।
त्वयैव वर्णिता वत्स कथं विस्मृत्य पृच्छसि ॥ ५७ ॥
जडे चेतनताधर्मं चेतने जडतामपि ।
जङ्गमानां गतिस्तम्भः स्वभावोयं रसस्य च ॥ ५८ ॥
अलुप्तदृक् निर्विकारं यद्यप्यक्षरमुच्यते ।
विप्रलम्भद्वारभूतमिति सर्वं घटेत हि ॥ ५९ ॥
प्रमाणाद्यप्रवेशोपि रसस्वाभाव्यविन्मुने ।
एकः प्रमाणं निगमो वक्त्यविद्यां चिदात्मनि ॥ ६० ॥
रसात्मकं परं ब्रह्म प्रमाणेन न गृह्यते ।
वेदोऽपि चकितो यत्र मर्यादास्थापको यतः ॥ ६१ ॥
तस्मान्न संशयाविष्टं कुरु चित्तं महामुने ।
नश्यन्ति[1] संशयात्मानस्त्वया चैवोपपादितम् ॥ ६२ ॥
ये कुतर्कपरा नित्यं श्रुतियुक्तिविदूषकाः ।
केवलेनानुमानेन युक्त्या कल्पितया खलाः ॥ ६३ ॥
स्वपाण्डित्यप्रकटना अनुसन्धानवर्जिताः ।
अनष्टसंशयास्तेषां शिवं न स्यात्कदाचन ॥ ६४ ॥
त्वं तु वेदविभागार्थं जातोसि भगवान्कलौ ।
सर्ववित्संशयं मुक्त्वा भव धीरो महामुने ॥ ६५ ॥

---

१. संशयात्मा विनश्यतीति गीतादौ ।

पार्वत्यै मे प्रकटितं ज्ञानमेतन्न कुत्रचित् ।
पुनस्तवाग्रे कथितं ज्ञात्वा विष्णुकलामिति ॥ ६६ ॥
गोप्याद्गोप्यतरं गुह्यं सद्भक्तायोपदिश्यते ।
धूर्तनास्तिकदुष्टोग्रसंशयिष्वेव गर्हितम् ॥ ६७ ॥

इति श्रीपुराणसंहितायां सिद्धान्तसारे व्यासशिवसंवादे पञ्चविंशोऽध्यायः ॥ २५ ॥
॥ आदितः श्लोकानां समष्ट्यङ्काः ॥ २०९७ ॥

## ॥ षड्विंशोऽध्यायः ॥ २६ ॥

॥ व्यास उवाच ॥

नष्टो मे संशयः स्वामिन्देवदेवेश धूर्जटे ।
दीप्तेम्बरमणौ लोके बाधते तिमिरं कथम् ॥ १ ॥
जिज्ञासा वर्तते नाथ तथापि हृदये मम ।
स्वलोकादाविविविशुर्गोपा नन्दादयः किल ॥
स्वातन्त्र्येणाज्ञया वापि तन्ममाचक्ष्व शंकर ॥ २ ॥

॥ शिव उवाच ॥

शृणु ब्रह्मन्प्रवक्ष्यामि यन्मां त्वं परिपृच्छसि ।
यस्य श्रवणमात्रेण मनो भवति निर्मलम् ॥ ३ ॥
ब्रह्माण्डभाण्डे संसिद्धे रमणार्थे मुनीश्वर ।
गोपादींश्च समाहूय गोलोकपतिरब्रवीत् ॥ ४ ॥
गोपाः सखायोऽनुज्ञां मे संशृणुध्वमतन्द्रिताः ।
श्रुत्वा चरन्तु त्वरितामाचिरं यूयमित्युत ॥ ५ ॥
यन्मे रूपं परं शुद्धं परात्परतरं महत् ।
केवलानुभवाकारमानन्दाकारमद्भुतम् ॥ ६ ॥

---

१. पूर्वमेतज्ज्ञानं माहेश्वरतन्त्रे पार्वत्यै शिवेन प्रकाशितम् । तत्रस्था विषयाः सर्वे अनुसंधेया अत्र इति सूचनाय पार्वत्यै मे प्रकटितमिति समुदीरयति परमेश्वरः ।

ध्यानातीतं मनोतीतं वागतीतं सुखात्मकम् ।
संयोगविप्रलम्भाख्यभावक्रीडारसात्मकम् ॥ ७ ॥
पुरुषोत्तमसंज्ञं च कूटस्थातीतमव्ययम् ।
स्वामिनीद्वितीयं तत्तु क्रीडते तत्कलागणैः ॥ ८ ॥
क्रीडायां विरतिर्नास्ति न श्रमो ग्लानिरेव च ।
यथा पक्षी स्वपक्षाभ्यां क्रीडत्येवाभिसञ्चरन् ॥ ९ ॥
संयोगविप्रलम्भाभ्यां रसः क्रीडति वै तथा ।
इदानीं स रसः साक्षात्संयोगाद्विप्रलम्भकम् ॥ १० ॥
गमिष्यति ततः साक्षात्क्रीडाब्रह्माण्डमुत्थितम् ।
अक्षरस्वप्नसंभूते ब्रह्मांडेऽस्मिन्व्रजान्तरे ॥ ११ ॥
यूयं मदाज्ञया सर्वे प्रविशन्तु स्वलीलया ।
पुरुषोत्तमसंज्ञोयं रसस्तत्रागमिष्यति ॥ १२ ॥
तल्लालनार्थं सेवार्थं सर्वे गच्छान्त्विततः पृथक् ।
यशोदानन्दगोपौ च गच्छतामविशङ्कया ॥ १३ ॥
बलभद्रश्च विजयो मण्डलीभद्र एव च ।
सुभद्रो गोमरश्चैव भद्रवर्धन एव च ॥ १४ ॥
यक्षेन्द्रभटभद्राङ्गवीरभद्रमहागुणाः ।
सायुधास्तस्य रक्षार्थं दुष्टेभ्यः कृतरक्षणाः ॥ १५ ॥
गच्छन्तु सुहृदश्चैते व्रजे लीलां वितन्वत ।
एते सवयसो धीराः सुहृदः समबुद्धयः ॥ १६ ॥
अथ यान्तु सखायोऽस्य कनिष्ठाः प्रेमगन्धयः ।
विशालो वृषभश्चैव देवप्रस्थो वरूथपः ॥ १७ ॥
ओजस्वी कुसुमापीडो मरन्दो ( मंदरो ) मणिबन्धकः ।
करन्धमश्च सेवायै सखायो यान्तु तस्य वै ॥ १८ ॥
अथ यान्तु प्रियसखाः सख्यं केवलमाश्रिताः ।
समानवयसः सर्वे सहक्रीडार्थमादृताः ॥ १९ ॥
सुदामा वसुदामा च प्रोद्दामा दामकस्तथा ।

कृष्णोंशुर्भद्रसेनश्च विलासी किंकाणिस्तथा ॥ २० ॥
कलविङ्कस्तथा स्तोकः सखायः प्रेमसंयुताः ।
सहक्रीडासनाहाराः समानवयसोऽपि च ॥ २१ ॥
तमेव पुरुषं व्यक्तं सुखयन्तु सहव्रताः ।
व्रजे रहस्यक्रीडायामुपयुक्तास्तथापरे ॥ २२ ॥
प्रियनर्मवयस्यास्ते यान्तु सर्वे मदाज्ञया ।
वसन्त उज्ज्वलश्चैव गन्धर्वः सुबलस्तथा ॥ २३ ॥
अर्जुनाद्यास्तथान्येपि प्रियनर्मसखा अपि ।
चतुर्विधेषु युष्मासु केचित्तं हासयन्तु वै ॥ २४ ॥
वितण्डावादमनु(मु)ना केचित्कुर्वन्तु सङ्गताः ।
विस्मापयन्तु तं केचिन्मन्त्रिवत्केचिदाश्रिताः ॥ २५ ॥
केचिदार्जवभावेन सरलाः शीलयन्तु तम् ।
कृष्ण धन्योसि धन्योसि तं लीलार्था स्तुवन्तु वै ॥२६॥
अक्षरस्य मनोवृत्तिर्या लीलादर्शनोत्सुका ।
सा विग्रहवती भूत्वा नन्दगेहे भविष्यति ॥ २७ ॥
अहमाविर्भविष्यामि कुर्वल्लीलां व्रजास्थिताम् ।
रहस्य रमणार्थाय स्वरूपं मम वास्तवम् ॥ २८ ॥
अखण्डं पूर्णमेवात्र स्वयं प्रादुर्भविष्यति ।
तदा रासरसक्रीडा भविष्यति महाद्भुता ।
पर्यवस्यति कूटस्थे यथा स्यात्तन्मनोरथः ॥ २९ ॥
तस्मान्नन्दादयो गोपा यशोदाद्या व्रजस्त्रियः ।
भौमं व्रजं विशन्त्वद्य स्वामिकं परमेशितुः ॥ ३० ॥
श्रीदामावचनाद्राधा प्रयातु व्रजमण्डलम् ।
यत्र राधा च तत्राहं नावयोर्विरहः क्वचित् ॥ ३१ ॥
स्वामिनीवासना त्वस्यामेव प्रादुर्भविष्यति ।
तदंशभूतं मद्रूपं कृष्णः सम्पूरयिष्यति ॥ ३२ ॥
अर्कसाहस्रसंख्याताः कृष्णान्तःपुरयोषितः ।

प्रादुर्भावं गमिष्यन्ति गोपा युष्मद्गृहेषु वै ॥ ३३ ॥
तस्माद्यूयं व्रजध्वं वै मदादेशेन हि व्रजम् ।
निशम्य भर्तुर्गदितं सर्वे गोलोकवासिनः ॥ ३४ ॥
अवतीर्णाः क्षितितलं स्वाम्यर्कं परमेष्ठितुः ।
यशोदया ययौ नन्दो भद्रया चोपनन्दनः ॥ ३५ ॥
द्रोणे चान्तर्हितो नन्दो धरायां सा यशोमती ।
गोपेष्वन्तर्हिता गोपा बभूवुः स्वाम्यनुज्ञया ॥ ३६ ॥
गोवर्धनोऽद्रिप्रवरो रत्नसानुः सुधाझरः ।
गोवर्धनाद्रौ स्वप्नोत्थे समाविष्टो बभूव ह ॥ ३७ ॥
यमुनायां च यमुना स्वाम्यिकायां तु केवला ।
विनिद्रपङ्कजवना सुधासलिलसम्भृता ॥ ३८ ॥
तत्तदुद्यानजातेषु सा सा चोद्यानमण्डली ।
आविर्भूता लतास्तास्तास्तासु तासु लतासु च ॥ ३९ ॥
पुष्पेषु पुष्पसुषमा फलशोभा फलेष्वपि ।
गन्धर्वालिष्वलिवृन्दान्याविशन् गीतये विभोः ॥ ४० ॥
खगाः खगेषु संक्रान्ता वातेषु सुखमारुताः ।
हंसपारावतपिककारण्डवरथाङ्गकाः ॥ ४१ ॥
मृगा वराहाः शशकाः स्वासु जातिष्वथाविशन् ।
गोलोकैश्वर्यमखिलं व्रजभूमिं विवेश तत् ॥ ४२ ॥
अथ जातु प्रियाः सख्यः पूर्णस्य परमात्मनः ।
परावृत्तस्य महतो वनाच्चान्द्रमसाद्विभोः ॥ ४३ ॥
आधरभूमिकामध्यमाश्रितस्याभितः स्थिताः ।
पुनः संस्मारयामासुः प्रार्थितं पुनरेव तत् ॥ ४४ ॥
प्राणाधार परानन्द रमणार्तिविनाशन ।
स्वामिनीप्रार्थना चित्ते वर्तते विस्मृताथ वा ॥ ४५ ॥
न च विस्मरणं क्वापि नित्यज्ञानस्य ते भवेत् ।
तत्कथं न करोष्येतत्स्वामिनीप्रार्थने त्वराम् ॥ ४६ ॥

मायामहाह्रदेऽगाधे दुर्विगाहेऽवगाहितुम् ।
इच्छा प्रवर्तिता नाथ कथञ्चिद्विरमेन्नहि ॥ ४७ ॥
त्वत्प्रियाणां च सर्वासामेष एव मनोरथः ।
मुदं शोषयते नाथ ग्रीष्मर्तुः सरसीमिव ॥ ४८ ॥
मनोरथं प्रियाणां वै पूरयेन्न प्रियो यदि ।
का प्रेमगणना तत्र प्रेमाभासस्तु केवलम् ॥ ४९ ॥
त्वदेकशरणानां नः प्रियाणां प्रियकृद्भव ।
अपेक्षितं प्रियं विद्यादप्रियं यदुपेक्षितम् ॥ ५० ॥
न प्रियं प्रियमेवेह प्रियं यन्मनसेप्सितम् ।
मनोरथविघातोयमप्रियोद्य प्रवर्तते ॥ ५१ ॥
तस्मान्मनोरथमिमं पूरयाद्याविचारयन् ।
किं मुहुः प्रार्थ्यते नाथ कामपूरोसि नः सदा ॥ ५२ ॥
इत्युक्त्वा तूष्णीमापन्नास्ताः सर्वाः कृष्णवल्लभाः ।
कृष्णः सिंहासनगतः प्रहसद्वदनः स्थितः ॥ ५३ ॥
तदा सुमङ्गला शक्तिर्ज्ञात्वाङ्गीकृतमिप्सितम् ।
मनांसि तासां न्यरुणन्मोहवृत्त्या दुरन्तया ॥ ५४ ॥
इत्यावरितविज्ञाना मोहमय्यैव निद्रया ।
स्वप्ने स्वप्नान्तरं भेजुर्विच्युतात्मानुसन्धयः ॥ ५५ ॥
पुण्डरीकगृहे चाहं कल्याणीति प्रसिद्धिभाक् ।
अपश्यद्वैद्युती नाम्नी काचित्कृष्णप्रिया सखी ॥ ५६ ॥
काचिद्ददर्श चात्मानं सुरसेति च विश्रुतम् ।
वामनस्य गृहे जातं माधवीत्यभिधाजुषम् ॥ ५७ ॥
अनङ्गमदना काचित्कुरविंदगृहे सखी ।
शुभभेति च विख्याता बभूव वरवर्णिनी ॥ ५८ ॥
काचित्सुकुण्डला नाम्नी सुकुण्डलगृहे सखी ।
सरस्वतीति चात्मानं जातं परमबुध्यत ॥ ५९ ॥
सुतारस्य गृहे तारानाम्नी काचित्प्रिया सखी ।

कावेरीति स्वमात्मानं जातं किल ददर्श ह ॥ ६० ॥
अशावती स्वमात्मानं गोपराजस्य सद्मनि ।
वैणवस्य गृहे जातं वैणवीत्यविदद्द्रुतम् ॥ ६१ ॥
भद्रपीठगृहे जातं सुभद्रानाम विश्रुता ।
स्वात्मानमुपपन्ना सा माधवीत्यपि संज्ञया ॥ ६२ ॥
सुन्दरीति च विख्याता कृष्णाप्राणाधिका प्रिया ।
अजागरगृहे जाता नाम्ना चन्द्रावतीति च ॥ ६३ ॥
इन्दिरापि स्वमात्मानं भद्रमण्डलवेश्मनि ।
मणिका चेत्यभिधया लोके जातमबुध्यत ॥ ६४ ॥
केसराङ्गी कम्बुकण्ठी स्वात्मानं वीरधीरयोः ।
गृहे ददर्शतुर्जातं वल्लवी विरलेति च ॥ ६५ ॥
शितचन्द्रगृहे जाता नाम्ना चन्द्रमुखीति च ।
तेजोवतीति विख्याता या स्वयं कृष्णवल्लभा ॥ ६६ ॥
काचित्कलन्तिका कृष्णवल्लभा लकुटीगृहे ।
अबुध्यत निजं रूपं जातं बिन्दुमुखीति च ॥ ६७ ॥
मद्रिणीति प्रिया काचित्कृष्णस्य व्यञ्जुलगृहे ।
चन्द्रावलीति वै नाम्ना जातमात्मानमैक्षत ॥ ६८ ॥
चन्द्रध्वजस्य सदने महागोपस्य धीमतः ।
सुवर्णमञ्जरी जाता ललितेति च विश्रुता ॥ ६९ ॥
अनङ्गानंगरङ्गा च सुरङ्गा रङ्गमालिनी ।
बहुरङ्गा विश्वरङ्गा नवरङ्गा च रङ्गिणी ॥ ७० ॥
रागिणी रङ्गवदना रतिरङ्गा च हंसिनी ।
मालती मधुरानन्दा सुनन्दा नन्दमालिनी ॥ ७१ ॥
निस्तुला चारुकेशी च विहङ्गी हंसकुण्डला ।
कलावती कामकला कौमुदी चारुहासिनी ॥ ७२ ॥
चन्द्रहासा चन्द्रकला पद्मवृन्दा पयस्विनी ।
ह्लादिनी पद्मवृन्दा च हरिणाक्षी पिकस्वरा ॥ ७३ ॥

चन्द्रघण्टा चारुकक्षा पुष्पिणी मधुमालिनी।
भृङ्गावानन्दवल्ली वृन्दा मन्दारमालिनी॥ ७४॥
पुष्पावती निम्ननाभिर्लावण्यलहरी तथा।
चन्द्रचूडा विधुमुखी विद्युद्वर्णा विहारिणी॥ ७५॥
विलासिनी कामकोशा मधुराङ्गी विलासिका।
रत्नदन्ती चित्रवस्त्रा विचित्रा चित्रमालिका॥ ७६॥
विभावरी वरतनुस्तनुमध्या रतिप्रिया।
लाटिनी चटुलाङ्गी च विपञ्ची चित्तरञ्जिका॥ ७७॥
अनमित्रा कृशाङ्गी च रतिर्मुक्तावतीति च।
कृशोदरी कलानन्दा किशोरी मञ्जुनादिनी॥ ७८॥
स्मेरानना स्मितमुखी मिहिला मदमञ्जुला।
मनस्विनी मानवती रसकूपा प्रमोदिनी॥ ७९॥
इत्याद्याः सूर्यसाहस्रीसङ्ख्याताः कृष्णवल्लभाः।
प्राग्वासनावासितमनोवृत्तयो गोकुलं ययुः॥ ८०॥
ता गोपगेहकृत्यानि कुर्वाणास्तत्र संस्थिताः।
पराध्यासवशं प्राप्ताः स्वानुसंधानवर्जिताः॥ ८१॥
मूलभूमौ तु ताः कृष्णप्रियाः स्वासनसंस्थिताः।
कृष्णस्य पुरतः पङ्क्त्याकारेण स्वप्नमोहिताः॥ ८२॥
काचिन्मृदंगमास्फाल्य तन्मुखात्करपङ्कजम्।
पुनर्गृहीतुं नोशेके पुत्रिकासदृशाकृतिः॥ ८३॥
काचिद्वीणां वादयन्ती वीणाशिखरगङ्करम्।
अपरं प्रांतगं नैव विवेद क्रमयोजने॥ ८४॥
मायूरव्यजनं धृत्वा वामभागे स्थिता सखी।
श्लथद्धस्ता पतन्तं वै कृष्णांसे न विवेद सा॥ ८५॥
चामरग्राहिणी काचित्क्रियारहितपाणिना।
तथैव तस्थौ चित्रश्रीलिखितेव विनिश्चला॥ ८६॥
विभ्रामयन्ती कमलं पाणिभ्यां पुरतः स्थिता।

तद्दण्डमुद्रितकरा स्वममायां प्रपश्यति ॥ ८७ ॥
काचित्ताम्बूलवीटीं च विन्यस्य दशनान्तरे ।
नापनेतुं ततः पाणिं शशाक विवशान्तरा ॥ ८८ ॥
परावृत्य सखी काचित्सखीसम्भाषणोत्सुका ।
स्फुरदोष्ठपुटा तस्थौ यथा प्रतिकृतिः स्थिरा ॥ ८९ ॥
गृहकार्यभरात् खिन्नाः कस्याश्चिद्वासनाभवत् ।
बिम्बास्यकमलग्लानिमपश्यत्पुरुषोत्तमः ॥ ९० ॥
मातृपितृसुखैः काचिद्वासना लालिताभवत् ।
ददर्श तन्मुखं कृष्णः पूर्णशारदचन्द्रवत् ॥ ९१ ॥
कस्याश्चित्कलहायन्त्याः कयाचिद्विस्मृतात्मनः ।
भ्रूभङ्गकुटिलं वक्त्रं शोणाक्षं समपश्यत ॥ ९२ ॥
क्वापि गोष्ठे यदा क्रुद्धा रुष्टा भीता भवेत्प्रिया ।
तद्बिम्बास्यं स्वेदलवाक्रान्तमैक्षत तत्प्रियः ॥ ९३ ॥
रुष्टा क्रुद्धा तु वै काचिद्गोष्ठे निर्विशती प्रिया ।
स्वबिम्बलोचनाम्भोजमश्रुपूर्णमिवातनोत् ॥ ९४ ॥
कस्याश्चिदभवद् ग्लानिर्गोष्ठे श्रमविशेषतः ।
सा बिम्बे जाड्यवैवर्ण्यकम्पकार्श्याद्यहोऽसृजत् ॥ ९५ ॥
एवं नानाविधा स्वप्नदेहजा विकृतिर्मुने ।
प्रियेणावेक्षिता सा सा बिम्बदेहसमुत्थिता ॥ ९६ ॥
एवं विमोहमप्रास्ताः संप्रेक्ष्य पुरतः प्रियाः ।
अनुग्रहपरस्तूर्णं तत्र गन्तुं मनो दधे ॥ ९७ ॥

इति श्रीपुराणसंहितायां सिद्धान्तसारे व्रजलीलाप्रादुर्भावो नाम षड्विंशोऽध्यायः ॥ २६ ॥

॥ आदितः श्लोकानां समष्ट्यङ्काः ॥ २१९४ ॥

## ॥ सप्तविंशोऽध्यायः ॥ २७ ॥

॥ व्यास उवाच ॥

भगवन् भूतभव्येश सर्वज्ञ शरणप्रद ।
अत्यद्भुततरा प्रोक्ता कथेयं संशयच्छिदा ॥ १ ॥
अतः परं वदेशान यथा कृष्णो व्रजं गतः ।
किं चकार व्रजे गत्वा यद्रहस्यं तदादिश ॥ २ ॥

॥ शिव उवाच ॥

शृणु व्यास प्रवक्ष्यामि यथा कृष्णो व्रजं गतः ।
कूटस्थस्येप्सितं कर्तुं तथा सखीगणस्य च ॥ ३ ॥
तदहं ते प्रवक्ष्यामि शृणुष्वैकमना मुने ।
यस्य श्रवणमात्रेण सर्वे नश्यन्ति संशयाः ॥ ४ ॥
वृष्णीनां प्रवरः साक्षाद्वसुदेवो बृहच्छ्रवाः ।
तत्पत्नी देवकी ख्याता देवकस्यात्मजा सती ॥ ५ ॥
कारागृहनिरुद्धौ तु कंसेनैवोग्रसेनिना ।
खवाग्भीतेनाष्टमस्त्वां निहन्ता गर्भ एतयोः ॥ ६ ॥
जातमात्रान् जघानासौ षट् पुत्रान्देवकीभवान् ।
सप्तमस्तु तयोरासीच्छेषस्तल्पं हरेः स्वयम् ॥ ७ ॥
भक्तदुःखासहो विष्णुर्योगमायां समादिशत् ।
देवकीगर्भगं साक्षान्मामकं धाम केवलम् ॥ ८ ॥
आकृष्य रोहिणीनाम्ना वसुदेवप्रिया व्रजे ।
नन्दगृहे प्रतिच्छन्ना वर्तते कंसभीतितः ॥ ९ ॥
तत्र स्थापय देवेशि तत्राहं संविशे (निवसे) यथा ।
एवमुक्त्वा ततो माया गर्भमाकृष्य रोहिणीम् ॥ १० ॥
देवकीजठराद्देवी निनाय निशि निद्रिताम् ।
अथाविवेश देवक्या जठरं भगवान्हरिः ॥ ११ ॥
विश्वात्मा विश्वरूपस्तु त्वरितो भक्तरक्षणे ।

दृष्ट्वा तामथ यथापूर्वं कंसस्त्रासमुपागतः ॥ १२ ॥
उपस्थितोयं मे कालो देवकीगर्भगोचरे ।
कारागृहस्य परितो रक्षणार्थमुदायुधान् ॥ १३ ॥
वीरान्संस्थापयामास नित्यं वीरासनव्रतान् ।
व्याघ्रानाशीविषान् क्रूरान्हिंस्त्रसत्वान्सुदुःसहान् ॥ १४ ॥
गजान्वराहान्दुर्धर्षान्ग्रामसिंहानमर्षणः ।
कारयामास परिखाः परितश्च सुदुस्तराः ॥ १५ ॥
स्वात्मरक्षापरो नित्यं निद्रां स्पृशति नो निशि ।
एवं चिन्तापरे तस्मिन् श्रावणे बहुलाष्टमी ॥ १६ ॥
तस्यां निशीथसमये बालरूपी चतुर्भुजः ।
पीतवासा घनश्यामः किरीटी रत्नकुण्डलः ॥ १७ ॥
कौस्तुभोद्दीप्तहृदयो मणिहारभराङ्कितः ।
वलयाङ्गदकेयूररसनानूपुरोज्वलः ॥ १८ ॥
शङ्खचक्रगदापद्मधरः कमललोचनः ।
कोटिकन्दर्पसुभगो ललिताकृतिरच्युतः ॥ १९ ॥
आविर्बभूव सहसा दंपत्योः पश्यतोः पुरः ।
देवकी वसुदेवश्च ज्ञातवन्तौ हरिं स्वयम् ॥ २० ॥
जातः कृष्णावतारोयमिति सं(वि)भ्रान्तमानसौ ।
हृदि संकल्पयामास गवां दशसहस्रकम् ॥ २१ ॥
निबद्धपाणी तस्याग्रे वसुदेवोथ देवकी ।
हर्षाश्रूणि विमुञ्चन्तौ स्तुत्या तुष्टुवतुर्विभुम् ॥ २२ ॥
प्रसादितः स भगवान्वसुदेवमुवाच ह ।
आराधितोहमुग्रेण तपसा पूर्वजन्मनि ।
तदा प्रसन्नेन मया रूपमेतत्प्रदर्शितम् ॥ २३ ॥
व्रीयतां वर इत्युक्ते पुत्रं मत्सदृशं युवाम् ।
वव्राते तेन जातोहं त्रिजन्मसु च वां सुतः ॥ २४ ॥
आदावहं प्राश्निगर्भो द्वितीये वामनोऽभवम् ।

अधुना वासुदेवोस्मि जातस्त्रिर्भवतो गृहे ॥ २५ ॥
मयि वात्सल्यगन्धेन भावेन कृतिनौ युवाम् ।
मुक्तिमेष्यथ यामन्ये स्पृहयन्त्यपि योगिनः ॥ २६ ॥
न कंसमशकाज्जीतिर्विधेया किंचिदण्वपि ।
अतः परं बालरूपं यद्भविष्यति सुन्दरम् ॥ २७ ॥
तदादाय व्रजे नन्दगहं नय सुसत्वरम् ।
नन्दपत्न्या प्रसूताऽऽस्ते मम माया विमोहिनी ॥ २८ ॥
तामानीय यथापूर्वमत्रैव पुनराविश ।
न निरोधो न प्रत्यूहो यास्यतस्ते भविष्यति ॥ २९ ॥
इत्युक्तवति देवेशे तेजःकूटः समुत्थितः ।
कोटिसूर्यप्रभापूर्णप्रकाशपरमोज्वलः ॥ ३० ॥
लीलावासनया व्याप्ता शुद्धा वृत्तिः परात्मनः ।
तस्यामावेशयामास गोलोकीयं रसं प्रभुः ॥ ३१ ॥
आनन्दव्यापिता शुद्धवृत्तिर्मूर्ताक्षरस्य च ।
तावत्तत्तेजसा मध्यादाविरासीच्छिशुच्छलात् ॥ ३२ ॥
चतुर्भुजं तु यद्रूपमास्मिन्नेव तिरोहितम् ।
क्षणादन्तर्हिते तस्मिन्परमाद्भुततेजसि ॥ ३३ ॥
पुनश्च प्रतिलब्धाक्षौ वसुदेवश्च देवकी ।
स्फुरन्नीलमणिस्वच्छमग्रे शिशुमपश्यताम् ॥ ३४ ॥
तं वेष्टयित्वा वसनैराघ्राय हृदयान्तरे ।
निश्चक्राम ततः शौरिर्गन्तुं नन्दव्रजं जवात् ॥ ३५ ॥
शृङ्खलाग्रङ्कुशचितं यद्यद्द्वारमगादसौ ।
प्रभुबाडवसुदेवस्य प्रभावादस्फुटच्च तत् ॥ ३६ ॥
मायाविमोहितान्कंसस्थापितानूक्षिणो जनान् ।
अतिक्रम्य ययौ शौरिर्यमुनामतिभीषणाम् ॥ ३७ ॥
नन्दगृहं समासाद्य यशोदाशयने शिशुम् ।
संस्थाप्य तत्सुतां मायामादाय निलयं ययौ ॥ ३८ ॥

द्वाराणि पूर्ववच्चासन् निगडं जगृहे पुनः ।
वृत्तान्तं सर्वमाचख्यौ देवक्यै वृष्णिपुङ्गवः ॥ ३९ ॥
अथ तद्रोदनं श्रुत्वा प्रबुद्धा रक्षिणो जनाः ।
देवकीप्रसवं राज्ञे समाचख्युस्त्वरान्विताः ॥ ४० ॥
कंसोपि सहसोत्थाय मृत्युशङ्कातिविह्वलः ।
बन्धनागारमासाद्य क्वास्ते पुत्रो ममान्तकः ॥ ४१ ॥
इति ब्रुवन्तं रक्ताक्षं स्फुरदोष्ठं सवेपथुम् ।
देवकी भ्रातरं प्राह हृद्याधाय सुतां च ताम् ॥ ४२ ॥
कुतः पुनः पुनः पुत्रो दुर्भगाया भवेन्मम ।
पुत्राश्च निहताः सर्वे त्वया मरणभीरुणा ॥ ४३ ॥
इयं पुत्र्यनुकम्प्या ते नैनां हन्तुं त्वमर्हसि ।
अतिदारुणचित्तानामपि शोच्याः स्त्रियोऽबलाः ॥ ४४ ॥
इत्यालपन्तीं निर्भर्त्स्य देवकीमसुरः खलः ।
गृहीत्वा पादयोर्दोर्भ्यां भुवः पृष्ठे व्यपोथयत् ॥ ४५ ॥
हस्तादुत्पत्य सहसा विद्युत्पुञ्जनिभाकृतिः ।
अष्टभिर्बाहुभिर्युक्ता स्फुरद्भूषणभूषिता ॥ ४६ ॥
माणिक्यहीरकोल्लासिकिरीटोत्तुङ्गशेखरा ।
विस्फुरत्कुण्डलोल्लासिगण्डस्थलमनोहरा ॥ ४७ ॥
आकाशेऽवस्थिता देवी पूजिता देवकोटिभिः ।
निर्भर्त्स्य कंसं प्रोवाच चलद्वलयपाणिना ॥ ४८ ॥
किं दैवनिहितैर्मन्द पुनरेव हतैरिह ।
कालग्रस्तं स्वमात्मानं न पश्यसि बहिर्मुख ॥ ४९ ॥
मारयन्तमविज्ञाय कालं योऽन्यत्र वैरकृत् ।
तेन पापेन निर्बन्धं कालोश्नाति तथाविधम् ॥ ५० ॥
तृष्णासूचिविनिर्भिन्नं सिक्तं विषयसर्पिषा ।
रागद्वेषानले पक्वं मृत्युरश्नाति मानवम् ॥ ५१ ॥
तस्मात्त्वामत्तुकामात्मा जातः क्वापि मण्डले ।

तमन्वेषय यत्नेन सावधानतयाऽनिशम् ॥ ५२ ॥
योऽन्वेषितस्तु नितरां न मारयति कश्चन ।
अनन्विष्टः स कालात्मा हन्ति लोकानशेषतः ॥ ५३ ॥
अनन्विष्टः स वै दूरेऽन्वेषितः सम्मुखं व्रजेत् ।
किंचिद्दत्तवंतोऽप्यस्य स्वात्मानमपि सन्दिशेत्[१] ॥ ५४ ॥
प्रतारितं मन्यमानैरप्रतार्यः प्रतार्यते ।
साक्षात्तं पुरुषं कृत्वा यथेच्छा स्यात्तथा कुरु ॥ ५५ ॥
इत्युक्त्वान्तर्दधे देवी कंसो विस्मितमानसः ।
प्रसाद्य देवकीं भामं प्रणिपातपुरःसरम् ॥ ५६ ॥
समागत्य स्वभुवनमाजुहाव हितैषिणः ।
अघमुख्यान्तृणावर्तबकधेनुककेशिनः ॥ ५७ ॥
तैर्मन्त्रितो महीपालः पूतनां बालघातिनीम् ।
प्रेषयामास तन्वङ्गी भूत्वा सा व्रजमाविशत् ॥ ५८ ॥
क्षिपन्ती लोकचेतांसि रूपलावण्यसम्पदा ।
प्रविश्य नन्दसदनं विभावैरनुमापकैः ॥ ५९ ॥
भावमुद्भावयन्ती सा वञ्चयामास मातरम् ।
अङ्कीकृत्य हरिं दुष्टा वृथा लालनतत्परा ॥ ६० ॥
महागरलसंलिप्तमुरोजं वदने ददौ ।
प्राणैः सह पपौ तस्याः स्तन्यमाकृष्य बालकः ॥ ६१ ॥
सा पपात महीपृष्ठे शोषिता राक्षसी मुने ।
रसदानाधिकारार्थमविद्याराक्षसी हता ॥ ६२ ॥
बभञ्ज शकटं पादपद्मोत्क्षेपणलीलया ।
तृणीकृतत्रिभुवनं तृणावर्तमथाहनत् ॥ ६३ ॥
यः पञ्चहायनो भूत्वा वत्सपालनछद्मना ।
नित्यं तद्दर्शनानन्दरसतृषितचेतसाम् ॥ ६४ ॥
अनुभावयितुं तापं विरहोत्थं व्रजस्त्रियाम् ।

---

१ 'किञ्चिद्दत्तवतेऽप्यस्मै स्वात्मानमपि सन्दिशेत्' इत्यपि पाठो भवेत् ।

मलीमसान्दुष्टसत्वान्निहन्तुं वनगोचरान् ॥ ६५ ॥
सुभद्रबलभद्राद्यैः सुहृद्भिर्वनमाविशत् ।
हस्तगृहीतलकुटो नीरदस्निग्धसुन्दरः ॥ ६६ ॥
मयूरपिच्छमुकुटो पिशङ्गाम्बरभूषितः ।
कृष्णस्यानुचरो नित्यं मण्डलीभद्र इत्यसौ ॥ ६७ ॥
तथैव बलभद्रोपि राकापतिरिवोज्ज्वलः ।
नीरदस्निग्धवसनः कस्तूरीतिलकोज्ज्वलः ॥ ६८ ॥
आताम्रनयनः स्रग्वी वनमालाविभूषितः ।
श्रुत्येककुण्डलधरो विशालहृदयान्तरः ॥ ६९ ॥
सुभद्रोपि तथा मेघसान्द्रद्युतिरनुत्तमः ।
गुञ्जामणिप्रविलसत्कुण्डलश्रीविराजितः ॥ ७० ॥
हस्तन्यस्तोच्चलकुटो वंशीवाद्यविचक्षणः ।
अपरस्तु प्रियसखा सुदामा कृष्णवल्लभः ॥ ७१ ॥
नीलोत्पलदलश्यामः पिशङ्गवसनावृतः ।
रक्तोष्णीषी बृहद्बाहुः पृथुवक्षाः स्मितराननः ॥ ७२ ॥
शृङ्गवेत्रधरः सोपि तमनुक्रमते विभुम् ।
एवं गोभटयक्षेन्द्रभद्राङ्गविजयादयः ॥ ७३ ॥
वीरभद्रो विशालश्च देवप्रस्थवरूथपो ।
मन्दरो[१] मणिबन्धश्च कुसुमापीड इत्यपि ॥ ७४ ॥
करन्धमः सुदामा च वसुदामा च किंकणिः ।
अंशुस्तोको भद्रसेनो विलासी कृष्ण एव च ॥ ७५ ॥
विकटाक्षः पुण्डरीकः कलविङ्को विघूर्णकः ।
उद्वर्तनः कुरङ्गाक्षः कुमुदो बन्धुवर्धनः ॥ ७६ ॥
सुवर्धनो बन्धुजीवस्तथाऽन्येपि सहस्रशः ।
एभिः परिवृतो नित्यं कृष्णो यात्युपयाति च ॥
प्रदोषे गृहमायाति प्रातर्याति वनं प्रति ॥ ७७ ॥

---

(१) मरन्दः इत्यपि पाठः ।

बर्हिबर्हमुकुटोत्तमवेषस्तारहारभरभूषितवक्षाः ।
चारुगुञ्जमणिकुण्डलविद्युत्ताण्डवाङ्गणमनोज्ञकपोलः ॥ ७८ ॥
चार्वनङ्गधनुरुज्ज्वलभुग्नभ्रूयुगोत्पतदपाङ्गशरौघैः ।
गोपिकाहृदयमर्मभिदुच्चैरंजनद्युतिविषद्रवलाग्रैः ॥ ७९ ॥
विश्वगुल्लसितकुण्डलवृन्दभृङ्गभूषितसरोरुहवक्त्रः ।
कुञ्चिताधरपुटाहितवेणुध्वंसितात्मविदुदारसमाधिः ॥ ८० ॥
स्वर्णनद्धमणिचित्रयष्टिकाविभ्रमेण कृतहुङ्कृतिस्वनैः ।
गोनिरोधनविधौ विजृंभयन्नेत्रनीलसरसीरुहश्रियम् ॥ ८१ ॥
कण्ठनालनलिनास्यसौरभस्वादमत्तमधुलिड्विलोचनः ।
अद्वितीयनिजभावनामृतोद्वर्तिसुस्मितसुधामहोदधिः ॥ ८२ ॥
नीलकान्तियमुनामिवोद्वहन् गोपिकानयननक्रमण्डलाम् ।
फेनसन्ततिचितामिवस्फुरच्चन्दनद्रवकृताङ्गरागतः ॥ ८३ ॥
अङ्गसङ्गकुसुमावलिच्छलस्पद्धबुद्बुदविराजितान्तराम् ।
वैणवध्वनिगभीरगर्जिनीं लञ्जितेन्दुवदनाम्बुजश्रियम् ॥ ८४ ॥
चारुपीतपटवस्त्रमुद्रितां वल्गलङ्घिभुजवीचिविभ्रमाम् ।
उद्यदुज्ज्वलविवर्तनाभिकां स्वर्णनूपुरमरालकूजिताम् ॥ ८५ ॥
कण्ठलम्बिगुरुमौक्तिकावलिच्छद्मगाङ्गसलिलाश्रितामिव ।
हारनीलमणिमेदुरच्छविच्छायशैवलसमृद्धमध्यमाम् ॥ ८६ ॥
वासरावसितविप्रलम्भतस्तापशान्तिमभिकर्तुमुद्यताः ।
निर्निमेषनयनैर्व्रजस्त्रियः कृष्णकान्तियमुनामुपासिरे ॥ ८७ ॥
स्वर्णनद्धमुखपुच्छगावलं रत्नमौक्तिकरुचानुराञ्जितम् ।
दूरतोपि व्रजभृद्वधूजनान्बोधयन्नुपचुकूज माधवः ॥ ८८ ॥
तन्निशम्य व्रजवल्लवाङ्गनाः कृष्णदर्शनसुधैकजीवनाः ।
तत्क्षणोज्झितगृहक्रियादरा आययुर्विरहवह्नितापिताः ॥ ८९ ॥
को नु वेद भगवानितः क्षणाद्दूरमुच्चलति किं तदा भवेत् ।
इत्यवेत्य हृदि कापि निर्ययावर्धपीतपटहस्तमुत्सुकाः ॥ ९० ॥
अपरापहृत्य निजकृत्यमुत्सुका चिकुरोत्करग्रथनसक्तमानसा ।

तदपास्य तूर्णमवलम्ब्य पाणिनाभिससार सारसविलोचनापि का ९१

अथ कापि धीरमुरलीध्वनिश्रवः कुतुकाकुलेन मनसाभिगच्छती ।
गुरुणागतेन निजदेहलीं सखी समभूद्विनिश्चलतराङ्गयष्टिका ॥९२॥

अथ कापि वामनयनास्य [1]गोचरे कृतवत्ययैकमुतपाणिपङ्कजे ।
कवलं विलम्बमसहिष्णुरायया पुरुषोत्तमातिगतिभीरुमानसा ।९३।

नन्दनन्दनमुखेन्दुमाधुरीमनुरागिहृद्व्रजवधूगणस्तदा ।
सुभृशन्निपीय विनिमेषलोचनैर्विरहानलज्वरभरं व्यपोहयत् ॥९४॥

वामभागनमदाननच्छलाद्वेणुवादनविधौ च कामपि ।
कामिनीमुपदिदेश सस्मितभ्रूविलासमभिसारकेतनम् ॥ ९५ ॥

एवं लीलामनुदिनमसौ गोपवेषानुकारी
कुर्वन्नित्यं व्रजति विपिनं वासरान्तेभियाति ।
वृन्दारण्यस्थितखगमृगास्थावरेभ्योनु(वि)भाव्य
स्वीयं रूपं सपाद विदधे गोपदवीषु दिव्यम् ॥ ९६ ॥

इति श्रीपुराणसंहितायां सिद्धान्तसारे श्रीकृष्णलीलावर्णनं
नाम सप्तविंशोऽध्यायः ॥ २७ ॥

आदितः श्लोकानां समष्टयकाः ॥ २२९० ॥

---

## अष्टाविंशोऽध्यायः ॥ २८ ॥

॥ शिव उवाच ॥

एवं कृष्णः प्रतिदिनं बलदेवादिभिर्वृतः ।
धेनुसंचारणव्याजाद्वनस्थान्वनकण्टकान् ॥ १ ॥

कंसप्रणिहितान्दुष्टान्बकाद्यानघधेनुकान् ।
वत्सव्योमादिकान्हत्वा कालीयमुदवासयत् ॥ २ ॥

दावानलाद्व्रजं त्रात्वा सुप्तं निशि नदीतटे ।
गोपभ्या दर्शयित्वाथ व्यापिवैकुण्ठमुत्तमम् ॥ ३ ॥

---

(१) 'कोचरे' इत्यपि पाठः ।

तदतीतमहालीलां कर्तुकामो व्रजं गतः ।
वयस्यैर्वत्सपैर्वत्सैर्धेनुभिः सह गोपकैः ॥ ४ ॥
सुदामबलभद्राद्यैः कृष्णतुल्यपराक्रमैः ।
तत्र नानाविधा लीलाश्चकार परमाद्भुताः ॥ ५ ॥
उत्पत्य शाखामवलम्ब्य स्थितं केचन कौतुकात् ।
आन्दोलयन्ति च परे बुम्बारावमसुंचत ॥ ६ ॥
उत्फालयन्ति वै केचित्कूपान्गर्तान्महत्तरान् ।
केचिदुल्लिख्य भुव्येव मण्डलानि महान्ति च ॥ ७ ॥
अनुकुर्वन्ति वै केचित्पिकादीन्स्वरभङ्गिभिः ।
वृक्षाद्वृक्षान्तरं केचिदुत्पत्योत्पत्य यान्ति च ॥ ८ ॥
नेत्रबन्धमयीं लीलां चक्रुः कृष्णेन केचन ।
कृष्णे गायति नृत्यन्ति केचित्साध्विति वादिनः ॥ ९ ॥
कृष्णे नृत्यति गायन्ति केचिद्वाद्यान्यकुर्वत ।
राजलीलां च ते चक्रुः कृष्णे नृपवदास्थिते ॥ १० ॥
विशालो वृषभश्चैव देवप्रस्थो वरूथपः ।
ओजस्वी कुसुमापीडो मन्दरो मणिबन्धकः ॥ ११ ॥
करन्धमश्च इत्याद्याः सखायः प्रीतिकारिणः ।
शृङ्गारशय्याकरणे प्रीत्युत्साहसमन्विताः ॥ १२ ॥
लतापुष्पप्रवालानि वनेभ्यः समुपाहरन् ।
तैस्तैर्विरचयामासुरासनं सुखमुच्छ्रितम् ॥ १३ ॥
पौष्पं च मुकुटं दिव्यं कुण्डले मूर्ध्नि पल्लवम् ।
दिव्यपुष्पमयीं मालां कंचुकं कटिबन्धनम् ॥ १४ ॥
केयूराङ्गदकटकरसनामुत्तरीयकम् ।
कृष्णे विरचयामासुर्वत्रं पुष्पमयं करे ॥ १५ ॥
पुष्पसिंहासनवरे कृष्णं नृपमिवादधुः ।
विशालः सरसीजातमादाय नृपदण्डवत् ॥ १६ ॥

१ तदतीता व्यापिवैकुण्ठातीता । २ मरन्दः इत्यपि पाठः ।

वीजयामास सुहृदं कृष्णमानन्दविग्रहम् ।
वरूथपस्तु कृष्णस्य शृङ्गाररचनादिषु[1] ।
विस्रंसितं च्युतं वापि समीकुर्वन्समाश्रितः[2] ॥ १७ ॥
पादसंवाहनं चक्रे वृषभः पादपीठगः ।
मरन्दो बिसिनीपत्रछत्रमुच्छ्रितमादधे ॥ १८ ॥
काशपुष्पमये श्वेतचामरे मणिबन्धकः ।
सिंहासनसमीपस्थश्चालयन्समुपस्थितः ॥ १९ ॥
सु(श्री)दामा वामभागे च देवप्रस्थस्तु दक्षिणे ।
पुष्पयष्टीं समादाय पुरतोऽवस्थितौ करे ॥ २० ॥
करन्धमस्तु तद्वामे ताम्बूलीदलवीटिकाः ।
लवङ्गैलादिसंपृक्ताः समादाय करे स्थितः ॥ २१ ॥
ओजस्वी दिव्यगन्धांश्च मनसो मोदहेतुकान् ।
[3]मन्दरोऽमन्दमतिमान् बन्दीवद्गुणकीर्तनम् ॥ २२ ॥
अंशुःस्तोको भद्रसेनो विकटाक्षो विघूर्णकः ।
उद्वर्तनो मञ्जुनादः स्वर्णरोमा च किङ्किणिः ॥ २३ ॥
बलभद्रः सुभद्रश्च बन्धुजीवो विकत्थनः ।
कल्याणकीर्तिः कुमुदः कुरङ्गाक्षो बृहद्भुजः ॥ २३ ॥
एते चान्ये च शतशो धृतशस्त्रा मदोत्कटाः ।
सैनिका इव तिष्ठन्ति परितो रक्षणार्थिनः ॥ २४ ॥
आस्फोटयन्तो बद्धकच्छाः केचिन्मल्लवदास्थिताः ।
अन्योन्यं मल्लयुद्धेन युध्यन्तस्तानपश्यत ॥ २५ ॥
केचिद्धास्यरसोत्सिक्तैर्वचोभिः सकुतूहलैः ।
हासयन्ति च राजानमिव कृष्णं वनांतरे ॥ २६ ॥
पुरग्रामविभेदेन वनान्युपवनानि च ।
श्रीकृष्णस्याज्ञया केचित्परिकल्प्य व्रजन्ति ते ॥ २७ ॥
गतानाकारयामास नवीनान्प्रेषयत्यपि ।

---

१ स्य स्वरूपरचनादिके । २ उपस्थितः[illegible] । ३ मरंद इत्यपि पाठः ।

सुहृद्भिर्मन्त्रयन्नास्ते संशृणोति वितण्डिकाम् ॥ २८ ॥
एवं वने राजलीलां कुर्वतो दिवसोऽत्यगात् ।
गोष्ठे गन्तुं कृतधियो बभूवुः सर्व एव ते ॥ २९ ॥
तानुवाच ततः कृष्णो गच्छन्तु व्रजबालकाः ।
अहमप्यागमिष्यामि बलदेवेन संयुतः ॥ ३० ॥
मा चिरं गमने कृष्णेत्युक्त्वा सर्वे प्रतस्थिरे ।
बलं प्रस्थापयामास पश्चाद्युक्तिविशारदः ॥ ३१ ॥
एक एव स्वयं कृष्णः स्थितो वृन्दावनान्तरे ।
दृष्ट्वा शरद्वनं रम्यं मत्तालिकुलनादितम् ॥ ३२ ॥
फलप्रवालकुसुमैर्नम्रपादपसंकुलम् ।
विकसत्कुन्दमन्दारामन्दगन्धसुवासितम् ॥ ३३ ॥
वाय्वान्दोलितवल्लीकं लतामण्डपशोभितम् ।
शरत्पूर्णशशाङ्कांशुच्छटाविद्योतितान्तरम् ॥ ३४ ॥
इच्छाशक्तिनियोगेन रन्तुं कृष्णो मनो दधे ।
तदा पूर्णरसाविष्टः कृष्णेऽभूदिति मे मतम् ॥ ३५ ॥
तदा सङ्कोचिताज्ञाना बभूवेच्छा सुमङ्गला ।
चिञ्चित्प्रबुद्धो भगवान्बभूव मुनिसत्तम ॥ ३६ ॥
त्रिभागशेषा निद्रा च भागशेषा च जाग्रतिः ।
योगमायामयीशक्तिः प्रादुरासीत्तदाक्षरे ॥ ३७ ॥
वियोगे योगसामर्थ्यं योगमायेति तां विदुः ।
सा शक्तिः परमाश्चर्यरूपा बलवती शिवा ॥ ३८ ॥
वियोगमध्ये योगं च दर्शयन्ती स्वशक्तितः ।
घटयत्यघटितं चापि अभूतं भावयत्यपि ॥ ३९ ॥
अन्यथाकुरुते सर्वं यथावस्थितमेव हि ।
सृष्टिस्यशेषं ग्रसति सृष्टिस्युत्पादयत्यहो ॥ ४० ॥
रासलीलानाट्यरङ्गप्रकाशायेव दीपिका ।
यस्याः प्रादुर्भावमात्रेण सदानन्दोऽन्यथाभवत् ॥ ४१ ॥

बर्हिबर्हकिरीटस्तु शुद्धकाञ्चनरेखितः ।
माणिक्यहीरमुक्तादिजालैरुज्वालितोऽभवत् ॥ ४२ ॥
गुञ्जावतंसहाराद्याः केयूरवलयादिकाः ।
पादयोः कटके स्वर्णनूपुरे कटिसूत्रकम् ॥ ४३ ॥
एते भावाश्च येऽन्येऽपि लोककल्पितमात्रकाः ।
त एवालौकिकाश्चासन्योगमायाप्रभावतः ॥ ४४ ॥
एकैकस्मिन्मणौ यत्र कोटयस्तिग्मतेजसाम् ।
सायुज्यमिव सम्प्राप्ता लक्ष्यन्ते भूषणादिषु ॥ ४५ ॥
शुक्रवाक्पतयो यत्र मुक्ता मुक्ताफलेष्विव ।
एकैकस्मिन्सूत्रभागे पिशङ्गवसनस्य च ॥ ४६ ॥
पूर्णशारदचन्द्राणां कोटयः किं निमज्जिताः ।
कोटिकन्दर्पलावण्यं किं नु कृष्णे निमज्जितम् ॥ ४७ ॥
उद्घृष्टाञ्जननीलमेघतिमिरभृङ्गेन्द्रनीलप्रभा-
पूरौघेषु च कोटिषु स्थित इति व्यस्तः समस्तोऽपि सः ।
वक्रस्निग्धरसालकेशनिकरे सायुज्यमासादितः,
स्फूर्ज्जद्दिव्यकपोलयोरतितरां वल्गौ मुहुर्भ्राम्यति ॥ ४८ ॥
हस्तद्वयप्रमाणा सा मुरली कृष्णहस्तगा ।
चतुर्भिर्विवरैर्युक्ता मुखरन्ध्रसमन्विता ॥ ४९ ॥
सैवाभूद्वंशिका नाम्नी नवरन्ध्रसमन्विता ।
अङ्गुलैः सप्तदशभिर्मितानन्दप्रवर्षिणी ॥ ५० ॥
तस्यां न्यस्याधरसुधा जगौ किञ्चिन्मनोहरम् ।
नादेष्वनाहते तासां तन्नादेन विभेदिते ॥ ५१ ॥
सुधागन्धविमिश्रेण पूर्वा(र्णा)नन्दः समुत्थितः ।
प्रबुद्धानन्दसन्दोहा बभूवुर्व्रजयोषितः ॥ ५२ ॥
वंशीप्रवृद्धसंमोहा बभूवुस्ताः पुन(र्व्रजे)र्मुने ।
यतो दशाङ्गुला सा हि योगशक्त्या दुरत्यया ।
उद्भाविता महानन्दा तथा संमोहिनीति सा ॥ ५३ ॥

विशुद्धानन्दसंमोहा यदा जाता व्रजाङ्गनाः ।
तदा ह्याकर्षिणीं चक्रे मध्ये सूर्याङ्गुला तथा ॥ ५४ ॥
तद्गीताकर्णनवशात्सहसोत्सृज्य वै गृहान् ।
मातृपितृसुतान्बन्धून् लोकान्वेदान्समाययुः ॥
नाशक्नुवंस्तदा रोद्धुं गोपा लोकपथानुगाः ॥ ५६ ॥
यथा चन्द्रमसो बिम्बात्समुद्भूता च कौमुदी ।
प्रसरन्त्यन्धतमसं ग्रसन्ती स्वेन तेजसा ॥ ५७ ॥
योगशक्तिस्तथोद्भूता भगवत्यखिलात्मनि ।
पिबन्ती विश्वमखिलं मण्डलं समरीरचत् ॥ ५८ ॥
कृष्णेन सङ्गमयितुं योगशक्तिर्महाबला ।
अभ्याययौ सर्वाः सर्वा जवाद्दुच्छलतीरपि ॥ ५९ ॥
मायाकाशचिदाकाशावुभौ भेदयता त्वरा ।
वेणुनादेन नितरां देहगेहादिविस्मृतिम् ॥ ६० ॥
भजन्तीनां तदा देहाः पूर्वजास्तेऽन्यथाभवन् ।
वस्त्रभूषाङ्गरागादि लीलायामुपयोगि यत् ॥ ६१ ॥
तत्सर्वं कल्पयामास योगशक्तिरलौकिकी ।
एवं रचितवेषास्ता मण्डलं समुपाविशन् ॥ ६२ ॥
सात्त्विकी राजसी चैव तामसी चेति वै त्रिधा ।
चत्वारिंशत्तथा तासां यूथानि समुपाविशन् ॥ ६३ ॥
दृष्ट्वा कृष्णं पूर्णकामं कोटिकाममनोहरम् ।
प्रहृष्टवदनाम्भोजा निकटे समुपागताः ॥ ६४ ॥
वीक्ष्य तासां च यूथानि समीपस्थानि वै तदा ।
प्रोवाच कृष्णो मधुरां वाचं गुर्वर्थगह्वराम् ॥ ६५ ॥
अहो सख्यः स्वागतं वः किमर्थं गहने वने ।
निशि प्राप्तास्तदर्थं वो ज्ञातुमिच्छामि तत्वतः ॥ ६६ ॥
लक्षये किञ्चिदुत्पातं व्रज उत्पतितं जवात् ।

१ दुद्रुगच्छतीरपि इ. पा. ।

अन्यथा नरबहुलाद्व्रजादागमनं कुतः ॥ ६७ ॥
अथवा वनमाहर्तुमागता इति सम्मतम् ।
न बुद्धिमारोहति तन्न दिवा दर्शनं यतः ॥ ६८ ॥
तद्वदन्तु महाभागा यदर्थं यूयमागताः ।
नोचितं निशि नारीणां वनभूमौ विसर्पणम् ॥ ६९ ॥
मार्गे हिंस्राणि सत्वानि श्वशिवासर्पवृश्चिकाः ।
मृगा वराहा व्याघ्राश्च भ्रमन्ति वनगोच(राः)रे ॥ ७० ॥
निशायां प्रेतभूताद्याः शाकिन्यो यक्षराक्षसाः ।
असुरास्तामसा जीवा लब्धवीर्या भ्रमन्ति हि ॥ ७१ ॥
स्वभावभीरवो नार्यः शौचहीना असंस्कृताः ।
अमन्त्रजापकाः सद्यः क्षोभमायान्ति सर्वतः ॥ ७२ ॥
लोकधिक्करणं लज्जां कुलस्य विशदस्य च ।
दुर्लङ्घ्यमपि वेदानामादेशं किं न पश्यत ॥ ७३ ॥
यमकृत्वा तमस्यन्धे भ्रष्टधर्माः पतन्ति च ।
मातृपितृपतीनां च बन्धूनां स्वजनस्य च ॥ ७४ ॥
सेवैव परमो धर्मः कुलस्त्रीणां पुरातनः ।
तमुत्सृज्य समायाता यूयं साहसिकाः स्त्रियः ॥ ७५ ॥
निरङ्कुशा इव गजा न तच्छोभनमङ्गनाः ।
तस्माद्यूयं व्रजं सर्वाः प्रतियान्तु त्वरान्विताः ॥ ७६ ॥
अमायया भर्तृसेवां चरध्वं धर्महेतवे ।
प्रसीदति यतो धर्मी धर्ममूलं महेश्वरः ॥ ७७ ॥
धर्मस्तु निहतो हन्ति रक्षितो रक्षति प्रियाः ।
न गन्तव्यं स्त्रिया क्वापि रहः पुरुषसन्निधौ ॥ ७८ ॥
अरण्ये तु विशेषेण किं पुनर्गहने वने ।
बालोऽहं ब्रह्मचारीति नाहं स्त्रीकामुकः क्वचित् ॥

---

१ तन्न दिवा दर्शनं इति स्थले तद्दिवा वनदर्शनं यतः इत्यपि ।

अकामं कामयन्तीनां किं सुखं हृदि विस्फुरेत् ॥ ७९ ॥
गृहस्थः पाकभेदेन पात्रभेदेन वै यतिः।
नारी पुरुषभेदेन रौरवं नरकं व्रजेत् ॥ ८० ॥
बन्धवः पितरः पुत्राः सन्ति युष्मद्गृहान्तरे।
तान्परित्यज्य सहसा प्राप्तानां किं फलं प्रियाः ॥ ८१ ॥
स्त्रीणां हि समयः पद्मनालतन्तुनिभस्तनुः।
किञ्चित्प्रमादात्त्रुटितो न पुनः सन्धिमर्हति ॥ ८२ ॥
यथा लोकस्तथा वेदो दुर्लङ्घ्यमुभयं स्मृतम्।
तावुल्लंघ्य कृतस्नेहा विषयेषु पतन्त्यधः ॥ ८३ ॥
त्यक्त्वा स्वपुरुषं नार्यः सेवन्ते पुरुषान्तरम्।
अनङ्गीकृतवेदाज्ञास्तासां प्रायो गतिर्हि का ॥ ८४ ॥
मत्वा ह्यवितथां वाचं मदीयामविशाङ्किताः।
व्रजं यान्तु कृतस्नेहा मयि सुखमवाप्स्यथ ॥ ८५ ॥
इत्युक्तवति वै कृष्णे प्रकटं प्रमदोत्तमाः।
तीव्रानिलरयोद्धूता रम्भास्तम्भा इवापतन् ॥ ८६ ॥
विगलद्बाष्पनयना रुद्धकण्ठ्यः शुचार्पिताः।
विनमद्वदनाम्भोजास्तापसंशोषिताधराः ॥ ८७ ॥
प्रियत्यागभयावेशाज्जाड्यदैन्यातिविप्लुताः।
निकृष्टं मन्यमानाः स्वं कृष्णसेवाबहिर्गतम् ॥ ८८ ॥
विवर्णवदनाम्भोजाः पृथुवेपथुपीडिताः।
विशुष्यत्तालुकण्ठाद्या गतप्राणा इवाभवन् ॥ ८९ ॥
चित्रन्यस्ता इवातस्थू रुद्धवाचो व्रजाङ्गनाः।
राजसीनां सात्त्विकीनां तामस्यो वीक्ष्य तां दशाम् ॥ ९० ॥
विमृज्याश्रूणि नेत्रेभ्यो धैर्यमालम्ब्य यत्नतः।
स्वेदक्लिन्नाङ्गलतिका अनुमार्ज्य स्ववाससा ॥ ९१ ॥
समुद्य कुटिलान्केशान्विप्रकीर्णानाननोपरि।
समुद्गीर्गद्गदागिरः प्रियं च पुरतः स्थितम् ॥ ९२ ॥

॥ गोप्य ऊचुः ॥

यथा लोके च भूताद्यैराविष्टः पुरुषो महान् ।
असम्भाव्यमलीकं च ब्रूते नात्र प्रमाणता ॥ ९३ ॥
केनाविष्टस्तथा नाथ वग्धि न्यायविवर्जितम् ।
अस्मद्राद्धान्तराजन्ये न प्रामाण्येन युज्यते ॥ ९४ ॥
सिद्धान्तास्तु त्रयो नाथ विश्रुता विदितं तथव ।
लौकिको वैदिकश्चैव रसिकश्च तृतीयकः ॥ ९५ ॥
त्वत्सङ्गसुखसं(पत्या)सक्त्या लोकलज्जाप्रहाणतः ।
लौकिकस्तु परित्यक्तो नाधिकार इति प्रभो ॥ ९६ ॥
वैदिको रूक्ष एवेति वर्णाश्रमनिबन्धनः ।
ज्ञानक्रियाप्रधानश्च निषेधविधिसंयुतः ॥ ९७ ॥
यदृच्छाका(चा)रसङ्कोचान्मर्यादादर्शकस्तथा ।
अनेकजन्मसंसिद्धज्ञानमोक्षोपदेशकृत् ॥ ९८ ॥
न चैतत्सम्भवत्येष कामिनीनां विशेषतः ।
सोऽप्यस्माभिः परित्यक्तः स्वाधिकारान्यथास्थितेः ॥९९॥
वैदिकोल्लङ्घने चापि भवानेव हि कारणम् ।
दृष्ट्वा त्वां परमानन्दविग्रहं का सती सती ॥ १०० ॥
त्वदन्यस्तभावा विमुखास्त्वयि प्रेमविवर्ज्जिताः ।
त एव वैदिके योग्या नास्मांस्तत्रनियोजय ॥१०१॥
वैदिकेऽपि यथा कश्चित्संसारात्प्रविरज्य च ।
पुत्रपौत्रादिषु त्यक्त्वा निरूढां ममतां किल ॥ १०२ ॥
यतन्ते वनमाविश्य स्वात्मलाभाय केवलम् ।
वयं चापि तथा सर्वा लौकिके रागवर्जिताः ॥ १०३ ॥
पुत्रादिममताशून्याः प्रविष्टाव वनामित्युत ।
आत्मनस्तव लाभाय कथं त्यजति नो भवान् ॥ १०४ ॥
तस्माद्वयं लौकिकं च वैदिकं चातिवर्त्तिताः ।
तदुल्लङ्घनजं पापं कस्मादस्मासु युञ्जसि ॥ १०५ ॥

बालोहं ब्रह्मचारीति न तत्सत्यं प्रयुज्यते ।
अनुभूतवन्तयो हि वयं जातमात्रोपमूढने ॥ १०६ ॥
सकामं कामयन्त्येव कामिन्यो न त्वकामिनम् ।
अकामिन्यः सकामं च नैवेच्छन्ति कदाचन ॥१०७॥
अकामास्तु वयं नाथ कामान्हस्तगतानपि ।
त्वत्प्राप्तये परित्यज्य त्वामेव शरणं गताः ॥ १०८ ॥
तादृशीनां प्रियास्माकं त्वमेव परमं फलम् ।
विना त्वद्वरणं नाथ साधनं नास्य विद्यते ॥ १०९ ॥
अतः फलान्तरे श्रद्धा नास्माकं नाथ विद्यते ।
तस्मान्मा सन्धिमायातु स्त्रीणां हि समयोपि नः ॥११०॥
अनङ्गीकृतवेदाज्ञास्त्यक्त्वा तत्कल्पितं पतिम् ।
भवन्तं सेवमानाश्च तासां प्रायो गतिः शुभा ॥ १११ ॥
यद्यपि स्त्री वनं नेयान्निशि निश्चितमेव तत् ।
अरण्यसदृशं गेहं त्वदृते पुरुषोत्तम ॥ ११२ ॥
त्वयाधिष्ठितमात्रं यद्वनं गेहाय कल्पते ।
लोकवेदविन(नि)ष्ठानां को निषेधो विधिश्च कः ॥११३॥
रसमार्गाधिकारिण्यो वयं गोप्यो भवत्प्रियाः ।
नाधर्मेण विलिप्येत तद्धर्माधिकृतो न चेत् ॥ ११४ ॥
तावद्धर्मा अनुष्ठेया यावद्धर्मी न सङ्गतः ।
पलालमिव धान्यार्थी प्राप्तधर्मी तथा च तान् ॥ ११५ ॥
न कश्चिद्रसमार्गेऽस्मिन्प्रयाति पुरुषः क्वचित् ।
निरालम्बे च नभसि चरन्त्यन्येन पक्षिणः ॥ ११६ ॥
तस्मादेतानि वाक्यानि त्वयैवोक्तानि मानद ।
विपरीतानि नो भान्ति युक्तिन्यायोज्झितानि च ॥११७॥
अतो दुराग्रहं त्यक्त्वा भजतीर्नो भज प्रिय ।
त्वद्वियोगाग्निना तप्ताः प्राणा यास्यन्ति चान्यथा ॥११८॥
यथा तापयसे नस्त्वं वने निशि समागताः ।

मुक्तप्राणास्तथा च त्वां तापयिष्याम एव हि ॥११९॥
अतो यावच्छरीराणि त्यक्त्वा नो यान्ति चासवः।
अधरामृतमेवैकं तावदौषधमर्पय ॥ १२० ॥

॥ इति श्रीपुराणसंहितायां सिद्धान्तसारे योगमायोद्भावितवृन्दावने श्रीकृष्णगोपीसमागमो नाम अष्टाविंशोऽध्यायः ॥ २८ ॥

॥ आदितः श्लोकानां समष्ट्यङ्काः ॥ २४१० ॥

## ॥ एकोनत्रिंशोऽध्यायः ॥ २९ ॥

॥ शिव उवाच ॥

इति तासां वचः श्रुत्वा भगवान्पुरुषोत्तमः।
स्मितपूर्वमुवाचेदं तच्छृणुष्व महामुने ॥ १ ॥

॥ श्रीकृष्ण उवाच ॥

अहो सिद्धान्तमार्गीयो न्यायः समनुवर्णितः।
कोऽन्यो ज्ञातुं प्रवक्तुं च प्रभुः स्याद्भवतीर्विना ॥ २ ॥
न दोषदृष्टिः कर्तव्या मय्यनिष्टप्रलापिनि।
प्रमाणभूतः शब्दस्तु स्वातीतं नाभिभाषते ॥ ३ ॥
शब्दातीतं मत्स्वरूपमानन्दरससुन्दरम्।
कथं तद्भवतीनां च प्रातिकूल्येन वर्तते ॥ ४ ॥
केनाविष्टः प्रिय ब्रूषे इति वो यदुदीरितम्।
तत्सत्यमेव प्रमदा न मृषा चोपलम्भनम् ॥ ५ ॥
रसात्मके मयि परे शब्दोऽध्यस्तः सनातनः।
अहं शब्दे तथाध्यस्तः सामरस्यमुपागतौ ॥ ६ ॥
शब्दमात्रापराधोऽयं मयि तेन प्रतीयते।
विचार्य निर्णयं बुध्या सा प्रतीतिर्निवार्यताम् ॥ ७ ॥
मदर्थं लौकिकं सर्वं वैदिकं त्यज्य सत्वरम्।
मातृपितृपतीन्पुत्रान् गृहक्षेत्रवसूनि च ॥ ८ ॥

धर्माधर्मौ तथा स्वर्गनरकाद्यनपेक्ष्य च ।
प्रेमवेगेन चाकृष्टाः सम्प्राप्ता निकटं मम ॥ ९ ॥
कथं तास्त्यक्तुमिच्छामि जितोऽहं वः सुमध्यमाः ।
नाहं योगेन तपसा नेज्यया नापि संविदा ॥ १० ॥
व्रततीर्थावगाहैश्च साधनैर्बलवत्तरैः ।
अजितो न जितः क्वापि प्रेम्णैकेन तथा च वः ॥ ११ ॥
मत्प्राप्तिसाधनं प्रेम प्रेममद्रूपमेव यत् ।
साधनं च फलं तस्मादहमेव न च पृथक् ॥ १२ ॥
मायासृष्टयुद्भूतैर्जीवैर्नाप्यते प्रेम सुस्थिरम् ।
मत्स्वरूपात्मिका सृष्टिः सैव तत्राधिकारिणी ॥ १३ ॥
भवन्त्यो रसपात्राणि रसोऽहं केवलोऽबलाः ।
युष्मदालम्बनेनैव साङ्गस्थितिमवाप्नुयाम् ॥ १४ ॥
अन्यथा को रसः कोऽहं सच्चिन्मात्राक्षरं तदा ।
भवतीष्वेव मद्रूपमव्यक्तं व्यक्तिमावहेत् ॥ १५ ॥
यद्यप्यनेकरत्नानि सन्त्यनर्घतराण्यपि ।
तथापि शशिकान्तस्था जलायन्ते शशिप्रभाः ॥ १६ ॥
तस्मात्प्रसादपरमा भूत्वा सम्भूय यूथशः ।
विलसध्वं मया रासक्रीडालीलारसोदधौ ॥ १७ ॥
इत्युक्त्वा सस्मितमुखो मलिनान्यश्रुबिन्दुभिः ।
तासां वक्त्रसरोजानि मार्जयामास पाणिना ॥ १८ ॥
कृष्णाभिमुख्यमुदिता गतत्यागभयाः प्रियाः ।
विकसन्नेत्रवदनाऽव्रीडामर्षस्मिताननाः ॥ १९ ॥
नानाभावानुविद्धैरङ्गैर्नेत्रप्रान्तैर्मनोहरैः ।
तीर्यग्विनिहितैः कृष्णं तर्जयन्त्य इव स्थिताः ॥ २० ॥
उन्नमय्य ततस्तासामास्यानि चिबुकग्रहैः ।
पिबन्निव रसं ताभ्यः पाययन्नधरामृतम् ॥ २१ ॥
आलिलिङ्ग ततो गाढं स्तनापीडं प्रियः प्रियाः ।

रसचेष्टाभिरुद्बोध्य कामं कञ्जविलोचनः ॥ २२ ॥
आविर्भूतं चकाराशु रसमुद्दीपयन्नयैः।
प्रोत्साहयित्वा विविधैर्वाक्यैश्च प्रेमगर्भितैः ॥ २३ ॥
ततो नानाविधाः क्रीडाश्चक्रे कृष्णः प्रियाजनैः।
काममुद्दीपयंस्तासां नखदन्तक्षतादिभिः ॥ २४ ॥
योगमायाप्रयुक्तानां भूषागन्धाम्बरस्रजाम्।
कापि दीप्तिर्वनलतापत्रेषु प्रतिबिम्बिता ॥ २५ ॥
प्रभापुञ्जोद्गारवन्ति कुञ्जान्यासन्समन्ततः।
न काप्यभूद्वने छाया तिमिरं वापि कुत्रचित् ॥ २६ ॥
योगशक्तिसमुल्लासितुहिनद्युतिमण्डलम्।
कुङ्कुमारक्तकिरणै रञ्जयामास काननम् ॥ २७ ॥
वनोपवनकुञ्जेषु दीप्यमानेषु सर्वतः।
नूपुरध्वनयः स्त्रीणामश्रूयन्त समन्ततः ॥ २८ ॥
काश्चिन्नृत्यन्ति सम्पृक्ताः कृष्णेनानन्दमूर्तिना।
काश्चिद्गायन्ति संहृष्टाः प्रियकण्ठार्पितैर्भुजैः ॥ २९ ॥
कृष्णः प्रियाणामलकावलिं नृत्यक्रियाश्लथाम्।
इतस्ततो विकीर्णां ता पाणिना प्रतिसम्बंधे[1] ॥ ३० ॥
नृत्यवेगविशीर्णानि पुष्पाणि विविधानि च।
तान्यपास्य नवीनानि तदङ्गेष्वन्वकल्पयत् ॥ ३१ ॥
श्रमघर्मकणव्याप्तमुखान्यासां प्रियः स्वयम्।
प्रामृजत्पाणिना प्रेम्णा स्वाञ्चलेन पुनः पुनः ॥ ३२ ॥
कासाञ्चिन्नूपुराण्यङ्गवलयोर्म्यङ्गदादिकम्।
नृत्यच्युतं पुनः प्रेम्णा तत्र तत्रान्वरोपयत् ॥ ३३ ॥
अथापि योगमायायाः प्रभावेण बलीयसा।
अदृश्यन्त वने कृष्णाः प्रतिगोपि सहस्रशः ॥ ३४ ॥
रममाणासु गोपीषु मध्ये कृष्णो घनच्छविः।

---

१ प्रतिसन्दधे इत्यपि पाठः।

स्वपार्श्वस्थितयोः सख्योः कण्ठार्पितबृहद्भुजः ॥ ३५ ॥
एवं द्विषट्सहस्राणि सखीनां विद्युतामिव ।
घनानामिव कृष्णानां षट्सहस्राणि मण्डले ॥ ३६ ॥
रासाख्ये रसमत्तानि विरेजुः परितो भृशम् ।
मध्ये कृष्णः स्वयं तस्थौ स्वामिन्या रमणोत्सुकः ॥३७॥
योगशक्त्युज्जृम्भितानि कृष्णरूपाणि सर्वतः ।
क्रीडन्ति स्म सखीवृन्दैर्विद्युदुल्लासभास्वरैः ॥ ३८ ॥
विबुधास्तत्र वर्षन्ति पुष्पवर्षाणि भूरिशः ।
योगशक्तिसमुद्भूता गन्धर्वाश्च सहस्रशः ३९ ॥
वीणामृदङ्गतालाद्यैः खेऽभूवन्गीतिकोविदाः ।
नृत्यगानानुकूल्येन तासां ते तालपूर्तिदाः ॥ ४० ॥
मामेव रमयत्येषः प्रायो मन्निकटे स्थितः ।
उद्बोधयन्निति ज्ञानं प्रतिगोपि बभूव ह ॥ ४१ ॥
द्विषट्सहस्राणि यथा प्रियाणां रासमण्डले ।
तावत्संख्यान्विता आसन् कृष्णा अपि वनान्तरे ॥४२॥
ते ते विचेरुर्विपिने प्रियाभिः सह सङ्गताः ।
प्रतिवृक्षं प्रतिलतं प्रतिकुञ्जमनेकधा ॥ ४३ ॥
वृत्तयो मनसस्तासां योगशक्तिप्रभावतः ।
गोपीकृष्णविभेदांश्च न लक्षीचक्रुरुन्मदाः ॥ ४४ ॥
ग्रस्तः प्रपञ्चो निःशेषः कालशक्तिविनिर्मितः ।
योगशक्त्या तदा मोहमृते शिष्टं न किञ्चन ॥ ४५ ॥
तस्मिन्नेव महामोहे निर्मितो योगमायया ।
प्रपञ्चः पुनरेवायमुत्थितः सहसा महान् ॥ ४६ ॥
तत्र रासमहालीला वाङ्मनोगोचराभवत् ।
यत्र कृष्णः परानन्द आनन्दप्राप्त्य ईहते ॥ ४७ ॥
रसाकुलत्वादौत्सुक्यादातुरं वीक्ष्य ताः प्रियम् ।
गौरवाभिनिवेशेन रमणान्निस्पृहा इव ॥ ४८ ॥

विपरीतार्थदर्शिन्यो योगशक्तिप्रभावतः।
सर्वास्तास्तर्कयामासुर्मनस्येवं प्रियंवदाः॥ ४९॥
मातरं पितरं पुत्रान् ज्ञातीन् लोकान्गृहाण्यपि।
धर्मं च वेदसंसिद्धमपि त्यक्त्वा समागताः॥ ५०॥
जानन्नप्यप्रिय इव प्रियोऽप्यस्मान्न्यषेधयत्।
तच्छ्रुत्वा वयं सर्वा दुःखमात्यन्तिकं गताः॥ ५१॥
वायुवेगसमाक्षिप्तरम्भास्तम्भा इवावनौ।
पतिता नेत्रसलिलं विमुञ्चन्त्योऽञ्जनाविलम्॥ ५२॥
उभयोर्भ्रंशजोद्भूतचिन्ताब्धौ मज्जनोद्भवम्।
दुःखं तत्तादृगिति वा कथं वक्तुं च शक्यते॥ ५३॥
उदासीन इवात्यन्तमीक्षमाणोऽपि संस्थितः।
नाश्वासनं समाधानमस्माकं कृतवानयम्॥ ५४॥
अस्माभिरेव हि तदा वाक्प्रयोगैर्निराकृतः।
अतः परमयं कृष्णः अस्माकं वशमागतः॥ ५५॥
वयं चापि न दास्यामो रसमस्मै कृतागसे।
कृतघ्नं मानिनं धूर्तं वर्गद्रुहमसज्जनम्॥ ५६॥
प्रतिकारं प्रकुर्वाणा नैव दोषमवाप्नुयात्।
इति तर्कं पुरस्कृत्य मानिन्यो रसनिस्पृहाः॥ ५७॥
बभूवुर्युगपत्सर्वा रसस्तादृग्विधः स्मृतः।
रसोऽयमिन्द्रियप्राणमनोवागात्मनः पृथक्॥ ५८॥
प्रबुध्वोद्भूय नितरामगमन्मानरूपताम्।
तदा साक्षात्प्रसिध्यर्थमक्षरस्य निजाशिषः॥ ५९॥
उज्जहार निजावेशं येन वृत्तिः शरीरिणी।
सखीनामात्मरक्षार्थं तथा मण्डलगुप्तये॥
तासामन्तर्ययौ तस्थौ बहिर्गोलोकसंस्थितः॥ ६१॥
अथ प्रबुद्धो भगवान्परमात्मा निजान्तरे।
तर्कयामास किमिदं मण्डलं शून्यमध्यगम्॥ ६२॥

का इमाः परमोदाराः स्त्रियः परमशोभनाः।
यासामेकाङ्गसौन्दर्यप्रवाहपतितं मनः ॥ ६३ ॥
स्वयमुन्मज्जितं नैव बहिर्भवितुमुत्सहेत्।
यासां पदनखज्योत्स्ना कोटिचन्द्रायते भुवि ॥ ६४ ॥
यासां तनुरुहाग्राणि विद्युत्पुञ्जा इव स्थिराः।
यन्नेत्रराजिर्विपिनं कुर्वतीवाब्जसङ्कुलम्।
यत्ताटङ्कमणिव्राता ह्रेपयन्त्यर्कमण्डलीः ॥ ६५ ॥
यासां लावण्यजलधावगाधे विचरन्नपि।
मच्चित्तमकरः सोऽयमद्यापि तृट्परिप्लुतः ॥ ६६ ॥
यासामुद्दामसौन्दर्यविपिने मे मनो मृगः।
आनन्दशष्पकवलान्यचरत्तेन तुन्दिलः ॥ ६७ ॥
यासां पाणिनखज्योत्स्नापद्मरागावदातताम्।
ह्रेपयित्वेन्दुसाम्राज्यपदवीमधिरोहति ॥ ६८ ॥
यासां च नृत्यतरलाश्चरणाः स्निग्धलोहिताः।
जङ्गमस्थलपद्मानामप्यधिक्षिपति श्रियम् ॥ ६९ ॥
यासां काञ्चीक्वणत्कारः सुप्तमुन्निद्रयेत्स्मरम्।
यासां केशकलापान्धतमस्तोमविनिर्गतम् ॥ ७० ॥
वदनेन्दुं परिवव्रुर्दामर्मौक्तिकतारकाः।
क एते कुञ्जनिवहा गुञ्जन्मत्तमधुव्रताः ॥ ७१ ॥
आमोदितदिगन्तानि येषां पुष्पाणि सन्ततम्।
एता वनलताः सम्यक् मोहयन्त्यपि मे मनः ॥ ७२ ॥
यासामेकैकपत्रं च कोटिचन्द्रप्रभोद्धुरम्।
एते खगमृगव्राता अपूर्वा बुद्धिमोहनाः ॥ ७३ ॥
न दृष्टिपथमापन्नाः कदाचिदपि मे पुरा।
कोऽसौ नवीनः सर्गोऽसौ स्रष्टा कोऽस्त्यपरोऽस्य वै ॥ ७४ ॥
क्व गतः पुरुषः सासारकोटिकामकलानिधिः।
वैजयन्तिश्रिया जुष्टः पिशङ्गवसनावृतः ॥ ७५ ॥

नवरत्नकसत्तारहारभारविराजितः ।
माणिक्यमुकुटोत्सर्पत्प्रभारञ्जितकाननः ॥ ७६ ॥
अनर्घ्यहीरकोद्भासिस्फुरत्कुण्डलताण्डवः ।
आकुञ्चिताधरन्यस्तदिव्यवेणुमुदीरयन् ॥ ७७ ॥
उत्तम्भितभ्रुत्रिवलीवल्लीमण्डितभालभूः ।
उत्फुल्लगल्लवदनो मेखलाविलसत्कटिः ॥ ७८ ॥
वलयाङ्गदकेयूरकङ्कणादिलसद्भुजः ।
पदविन्यस्तमाणिक्यमञ्जीरध्वनिसुन्दरः ॥ ७९ ॥
त्रिभङ्गललिताकारः किशोराकृतिसुन्दरः ।
तमालनवपाथोदगर्वसर्वस्वहारकः ॥ ८० ॥
अयस्कान्त इवात्यन्तं नारीचित्तापकर्षणे ।
केदानीं स गतो नूनं माधुर्यरससागरः ॥ ८१ ॥
प्रायः स एष पुरुषो यो मया चिन्त्यतेऽनिशम् ।
एतस्यैव प्रियाः सर्वाः सौन्दर्यावधिवर्जिताः ॥
विहरन्ति प्रियेणैताः कृष्णेनानन्दमूर्तिना ॥ ८२ ॥
रहो रमणमाधुर्यरससागरमज्जितः ।
धन्योऽहमद्य नितरां प्रार्थितं मेऽवधारितम् ॥ ८३ ॥
यदा यदा तु जायेत मनस्येवं मनोरथः ।
कृपार्द्रहृदयः सोऽयं कृष्णः सम्पादयेत्तथा ॥ ८४ ॥
परात्मनि प्रिये कृष्णे प्रियाणां प्रेमकौशलम् ।
प्रियस्यापि च कृष्णस्य तासु सम्यक् निरीक्षितम् ॥८५॥
तत्प्रेममाधुरीं वक्तुं कथं शक्येत यत्नतः ॥
नोपमानं न दृष्टान्तं यत्र गाहेत किंचन ॥ ८६ ॥
मनोवेद्योऽयमानन्दः कृष्णक्रीडावलोकजः ।
केनोपमीयेत सदा विचारेण गरीयसा ॥ ८७ ॥
कोटिब्रह्माण्डलक्षाणामहमेवेश्वरः प्रभुः ।
तस्यापि मम सायुज्यं कोट्यंशेनापि नो समम् ॥ ८८ ॥

एतदेव परं श्रेयो मम चेतोनुधावति ।
यत्कृष्णतत्प्रियाक्रीडारसश्रवणकीर्तनम् ॥ ८९ ॥
एतदेव परं श्रेयः सौभाग्यमिदमेव हि ।
एतत्परममाङ्गल्यमेतदेव परं फलम् ॥ ९० ॥
एवं विचारनिर्मग्नो भगवानक्षरः स्वयम् ।
स्वचित्तवृत्त्या तल्लीलागन्धवासितया भृशम् ॥ ९१ ॥
चिदाकारमयं ज्योतिरनुभूयोत्थितोऽपि सन् ।
योगीव तन्मयप्राणमनोबुद्धीन्द्रियोऽभवत् ॥ ९२ ॥

॥ इति श्रीपुराणसंहितायां सिद्धान्तसारे अक्षररासदर्शनं नाम एकोनत्रिंशोऽध्यायः ॥ २९ ॥
आदितः श्लोकानां समष्टयङ्काः ॥ २५०२ ॥

## ॥ त्रिंशोऽध्यायः ॥ ॥ ३० ॥

॥ व्यास उवाच ॥

देवेश धूर्जटे ब्रूहि कृष्णे चान्तर्हिते ततः ।
दीनाः कष्टेन किं चक्रुः श्रीकृष्णप्राणजीवनाः ॥ १ ॥

॥ शिव उवाच ॥

कृष्णे चान्तर्हिते दीनाः कृष्णपत्न्योऽपि वेपिताः ।
विरहज्वरसंतप्ता बभूवुस्तत्क्षणान्मुने ॥ २ ॥
यावदन्तर्विशेत्तापस्तावदन्तर्गतो रसः ।
आविष्टो जीवयामास तप्यतीः कृष्णवल्लभाः ॥ ३ ॥
प्रथमे च क्षणेन्तस्थो जात आवेशजो रसः ।
तदनु द्वितीये तापो यावदन्तर्गतोऽभवत् ॥ ४ ॥
न च दग्धुं समर्थोऽभूत् प्रभावेणैव तस्य च ।
रसावेशः स्वयं कृष्णस्तापस्तस्य वियोगजः ॥ ५ ॥
समानबलवत्त्वाच्च न शेकाते व्यपोहितुम् ।
जातः परस्पराध्यासस्तापस्य च रसस्य च ॥ ६ ॥

तापो रसाध्यासवशाद्रसकल्पो न दाहकृत् ।
तापाध्यस्तो रसः साक्षात्स्वयं तप्तो बभूव ह ॥ ७ ॥
अङ्गेषु खिन्नतां नेत्रेष्वासां चाश्रूण्यवासृजत् ।
मनोवृत्तिषु सञ्चारी गतिहासेक्षणादिषु ॥ ८ ॥
आविर्भूतश्चकारेमाः प्रमत्ता इव योषितः ।
तदा कृष्णैकताभावमातेने तासु निर्भरम् ॥ ९ ॥
तदा परस्परमिति प्रोचुः कृष्णोहमीक्षताम् ।
कीदृशी मे गतिरिति कीदृशं हसितं मम ॥ १० ॥
कीदृशं भाषणमहो वीक्षणं चापि कीदृशम् ।
एवं कृष्णं मन्यमानाः स्वात्मान(मिह)मुत योषितः ॥११॥
स आत्मा नः कुतो नष्टो वने वा विपिनान्तरे ।
इति तं मृगयन्त्यस्ताः पप्रच्छुस्तरुवीरुधः ॥ १२ ॥
अन्तरात्मानुसन्धानरहितास्ता रसोन्मदाः ।
वटाश्वत्थकदम्बाम्रकिंशुकाशोकचन्दनान् ॥ १३ ॥
शाखोटकांश्च मधुकान्बिल्वतालतमालकान् ।
पनसोदुम्बरमुखान्पृच्छन्ति स्मात्मनो गतिम् ॥ १४ ॥
अहो धन्यतमा यूयं वृक्षभावेपि संस्थिताः ।
हिमवर्षातपसहाः परार्थैकान्तजीविनः ॥ १५ ॥
स्वानर्थमप्युरीकृत्य परेभ्यः सुखदायकाः ।
पत्रैः पुष्पैः फलैस्त्वग्भिः छाययातिथिका अपि ॥१६॥
तपस्विन इवात्यन्तं दयापूरार्द्रचेतसः ।
यूयं दुःखस्य मर्यादामतिक्रान्ता गरीयसीम् ॥ १७ ॥
आत्मा नष्टो यदस्माकं तमेव मृगयामहे ।
यदि दृष्टो भवद्भिश्चेत्सर्वथैवोपदिश्यताम् ॥ १८ ॥
किरीटी कुण्डलधरो वनमालाविभूषितः ।
नवीनाम्भोदसुभगस्तडित्पुञ्जनिभाम्बरः ॥ १९ ॥
विशालवक्षा मधुरो मितमध्यः शुचिस्मितः ।

सरोजनयनः स्रग्वी मोहनो मधुराकृतिः ॥ २० ॥
एतैरन्यैश्च बहुभिर्ललितैर्लक्षणैर्युतः ।
सा आत्मा वश्यमेवायमेक एवाखिलश्रियाम् ॥ २१ ॥
खोल्लेखिशिखरैर्दीर्घैः सालिस्तबकलोचनैः ।
दृष्टो भविष्यति ततो वेदयन्तु दयापराः ॥ २२ ॥
परानन्देन सुखिनः परदुःखेन दुःखिताः ।
यतन्तस्तत्प्रतीकारे तैः स्तम्भैरिव भूर्धृता ॥ २३ ॥
पृच्छन्त्य एवं विपिने बभ्रमुः कृष्णवल्लभाः ।
वनाद्वनान्तरगताः स्वानुसन्धानवर्जिताः ॥ २४ ॥
अलब्ध्वा कृष्णपदवीं निराशाः पुलिनं गताः ।
कृष्णप्राप्त्येकमनसस्तल्लीलामनुचक्रिरे ॥ २५ ॥
पूतनैका सखी जाता कृष्णमाजानती पराम् ।
ददौ स्तन्यं पपौ सापि तत्तद्भावसमाश्रया ॥ २६ ॥
एका बकवदात्मानं जानन्ती कृष्णभावुकाम् ।
विकासयामास मुखं तस्य ग्रसनलोलुपा ॥ २७ ॥
जानन्ती ह्यघमात्मानमेका कृष्णत्वभावनाम् ।
प्रसार्य हस्तौ पादौ च पथ्यशेत जिघांसया ॥ २८ ॥
एका शकटभावस्था कृष्णभावायितां सखीम् ।
शाखाग्रलम्बिनीं जघ्ने पदा नखमणिश्रिया ॥ २९ ॥
तृणावर्तं भावयन्ती स्वात्मानमथ चापरा ।
गलग्रहणपातेन कृष्णभावनचेतसः ॥ ३० ॥
इतरा कृष्णमात्मानं ध्यायन्ती सर्पभावुकाम् ।
आरुह्य मूर्ध्नि नृत्यन्ती प्राहाहे गच्छ माचिरम् ॥ ३१ ॥
जान्वाकृष्य चलन्त्येका कृष्णबाल्यानुकारिणी ।
कण्टकादिभयेनैव जग्रहे सा यशोदया ॥ ३२ ॥
एकां कृष्णायतीं चान्याः परितो गोपवदास्थिताः ।
सापि सम्भावयामास कण्डूयपाकरणादिभिः ॥ ३३ ॥

एवं नानाविधा लीला व्रजे कृष्णानुभाविताः ।
ता एव गोप्योनुदधुर्बलवद्भावभाविताः ॥ ३४ ॥
पूतनादिस्वभावेन या या लीला वितेनि(प्रचक्रि)रे ।
तासामेवोत्कटतरो भावो विरहवर्धितः ॥ ३५ ॥
पूतनादिस्वभावस्था अस्मानेवं कदापि चेत् ।
आगत्य कृष्णोनुसरेदिति ज्ञात्वा तथाविधाः ॥ ३६ ॥
एवं व्रजस्यानुकृतिः सापि कूटस्थचेतसि ।
प्रतिबिम्बवदध्यस्ता स्वकालानुभवोज्झिता ॥ ३७ ॥
अथ ताः पूर्वभावस्थास्तास्ता लीला विहाय च ।
अन्वेषमाणाः परितः पप्रच्छुः पुनरेव तान् ॥ ३८ ॥
यावत्तन्मण्डलं दिव्यं योगशक्तिप्रकल्पितम् ।
यावच्चन्द्रस्य किरणाः प्रसर्पन्ति च सर्वतः ॥ ३९ ॥
तावत्सर्वं प्रयत्नेन ताभिरन्वेषितं तदा ।
अलब्ध्वा निजनाथं ताः प्रत्याजग्मुर्विचेतसः ॥ ४० ॥
निःसाधना निराशास्ता विरहज्वरकर्षिताः ।
अश्रुधारामविच्छिन्नां ससृजुस्तोयदा इव ॥ ४१ ॥
तदा तद्व्यसनं वीक्ष्य सिंहासनगतः प्रभुः ।
स्वप्नदुःखावधूतानां स्थितानां निजधामनि ॥ ४२ ॥
कृपया परयाविष्टश्चित्तवृत्तौ परात्मनः ।
आदधे पुनरावेशं प्रियाहितकृते तदा ॥ ४३ ॥
निराकारा चित्तवृत्तिरानन्दावेशमाश्रितः ।
पुनराविर्बभौ यत्र रुदन्ति करुणं प्रियाः ॥ ४४ ॥
किरीटी कुण्डली स्रग्वी वेणुपाणिः स्मिताननः ।
विकसन्नयनाम्भोजः पिशङ्गवसनच्छविः ॥ ४५ ॥
सखीनां मण्डलान्येव परितः प्रविलोकयन् ।
मुक्तकण्ठं रुदन्तीनामश्रुव्याकुलचेतसाम् ॥ ४६ ॥
तदा तद्दर्शनादेव तापानुभववर्जिताः ।

प्रियाः प्रसन्नहृदयाः प्राप्तप्राणा इवाभवन् ॥ ४७ ॥
प्रियाः प्रसादयामास प्रत्येकं सामभिर्विभुः ।
अश्रूण्यलुञ्छयन्प्रेम्णा समीकुर्वन्नलंक्रियाः ॥ ४८ ॥
समूहयन्केशपाशान्विकीर्णानाननोपरि ।
चुचुम्ब मुखपद्मानि ससीत्कारार्द्धलोचनम् ॥ ४९ ॥
उपगूह्य चिरं दोर्भ्यां तासां तापमपानुदत् ।
ऊचुरंतः प्रसन्नाश्च बहिरीषदमर्षिताः ॥ ५० ॥
एतावदप्रियं कृत्वा किमित्येवं प्रियायसे ।
ज्ञातमस्माभिरखिलं प्रेयसः प्रेमलक्षणम् ॥ ५१ ॥
अभिमानिनि धूर्ते च खले द्रोहिणि लोलुपे ।
बहुस्त्रीवल्लभे चापि स्थिरं प्रेम न तिष्ठति ॥ ५२ ॥
उपकुर्वत्सु बहव उपकारकृतो जनाः ।
अनिच्छन्तः प्रकुर्वन्ति तेभ्योऽर्थं ते तु साधवः ॥ ५३ ॥
उपकर्तरि ये केचिन्नोपकुर्वन्त्यसाधवः ।
प्रत्युताधं च कुर्वन्ति तेषां का निष्कृतिः स्मृता ॥ ५४ ॥
अहो धूर्त भवानद्य सम्यक् ज्ञातोसि निर्दय ।
वने स्त्रीणां परित्यागं रात्रौ कः कर्तुमिच्छति ॥ ५५ ॥
वनं स्वभावभयदं रात्रिर्दुष्टैरधिष्ठिता ।
स्वभावभीरवो नार्य इत्येवं जानता त्वया ॥ ५६ ॥
परित्यक्ता यदि वयं स्फारितं प्रेमलक्षणम् ।
अहो नैवास्ति पुरुषे प्रेमलक्षणमण्वपि ॥ ५७ ॥
वयमेव हि पात्राणि स्त्रियः प्रेमरसस्य च ।
या आत्मानं सानुबन्धं दास्यो भूत्वार्थयामहे ॥ ५८ ॥

॥ श्रीकृष्ण उवाच ॥

सख्यः किमर्थं खिद्यन्ते निरागसि मयि भृशम् ।
नैव त्यक्तास्त्यजिष्यामि न च त्यक्ताः कदाचन ॥५९॥

न विश्लेषो यथा द्रव्यगुणयोर्भवति प्रियाः ।
भवतीनां तथा नास्तिं विश्लेषो मे कदाचन ॥ ६० ॥
भवतीभिर्न दृष्टोऽहं तेन व्याकुलिता भृशम् ।
यद्यदाचरितं बाला भवतीभिर्वने वने ॥ ६१ ॥
मयाप्याचरितं तद्धि यस्मान्ना(स्त्याव)त्मावयोः पृथक् ।
रोदमानासु रुदितो मुदितासु मुदान्वितः ॥ ६२ ॥
पृच्छमानासु च तरून् पृच्छमानोऽहमप्युत ।
विलसामि कदाप्यन्तर्भवतीनां बहिः कदा ॥ ६३ ॥
बहिर्विलासे न तथा यथान्तर्मुदमाप्नुयाम् ।
अन्तर्विलासे विविधा भावाः स्फूर्जन्ति नान्यदा ॥६४॥
यथा तरङ्गा जलधौ तेषामन्तो न विद्यते ।
मत्स्वरूपं तदा सम्यक् ज्ञायते न बहिःस्थितौ ॥ ६५ ॥
अनुभावयितुं सम्यग्रूपं मे प्रेमलक्षणम् ।
भवतीषु तिरोभूय स्थितोऽहमिति मन्यताम् ॥ ६६ ॥
तस्मादेवं न कर्तव्या मय्यसूया निरागसि ।
प्रेमद्रव्येण च क्रीते दासे रागवति प्रियाः ॥ ६७ ॥
इति प्रियस्य वचनामृतमापीय योषि(यत्न)तः ।
बहिरन्तःस्थितं तापमपारं त्वरया जहुः ॥ ६८ ॥
ततो नानाविधाः क्रीडाः कामशास्त्रोपदेशतः ।
प्रियश्चकार परमानन्दमन्तरुदीर(रुदंच)यन् ॥ ६९ ॥
चन्द्रांशुधवलायां च निशायां विपिनान्तरे ।
रममाणः प्रियायूथैर्निरङ्कुश इवेभराट् ॥ ७० ॥
चचार गीयमानोऽसौ रतिरासमहोत्सवे ।
स्वरूपभूतं परमानन्दमन्तः प्रियासु च ॥ ७१ ॥
चन्द्रांशुधीरपवनोद्यानैरुद्दीपयन्स्मरम् ।
अदधादेवमकरोत्पूर्णाः पूर्णतरः प्रभुः ॥ ७२ ॥
इतीयं ते समाख्याता रासलीला महाद्भुता ।

संक्षेपतो मुने व्यास नान्यथा कल्पकोटिभिः ॥ ७३ ॥

॥ इति श्रीपुराणसंहितायां सिद्धान्तसारे शिवव्याससंवादे रासलीलावर्णनं नाम त्रिंशोऽध्यायः ॥ ३० ॥

॥ आदितः श्लोकानां समष्ट्यङ्काः ॥ २५७५ ॥

## ॥ एकत्रिंशोऽध्यायः ॥ ३१ ॥

॥ व्यास उवाच ॥

भगवन्महदाश्चर्यकरीयं महती कथा ।
त्वत्प्रसादेन देवेश जाता मे श्रुतिगोचरा ॥ १ ॥
नाल्पपुण्यैरवाप्येत कथेयं चित्तशोधिनी ।
श्रुतैवाज्ञानतिमिरं निरस्यात्मप्रकाशिनी ॥ २ ॥
तस्माद्धन्यतरो नाथ भवता करुणानिधे ।
कृतोऽहममलं ज्ञानं निधानमिव दर्शितम् ॥ ३ ॥
नातः परतरं किञ्चिन्निगमागमयोरपि ।
पुराणेष्वितिहासेषु ज्ञातव्यमवशेषितम् ॥ ४ ॥
तथापि श्रोतुमिच्छामि नीललोहितधूर्जटे ।
कृपया तत्समाचक्ष्व रहस्यमपि यद्भवेत् ॥ ५ ॥
उपक्रम्येत्युपन्यस्तं सखीभिः प्रार्थितं पुरा ।
कूटस्थस्य च लीलाया गुणमय्या निदर्शनम् ॥ ६ ॥
सखीपदनखज्योत्स्नादर्शनातुरचेतसा ।
रहस्यभूतलीलायाः कूटस्थेनापि तत्तथा ॥ ७ ॥
गुणलीलाप्रवेशं तु नार्हन्त्यानन्दविग्रहाः ।
सच्चिन्मात्रोऽक्षरः शुद्धो रहोलीलां च नार्हति ॥ ८ ॥
एवं विरोधसद्भावे शक्तिः कापि बलीयसी ।
चिदानन्दमयी शुद्धा प्रोद्भूताक्षरचेतसि ॥ ९ ॥
तया निरस्तविज्ञानो निद्रया मोहितोऽक्षरः ।
जाग्रत्स्वप्नसदृशं स्वाप्निकं जगदैक्षत ॥ १० ॥

स्वप्नब्रह्माण्डमध्ये तु जम्बूद्वीपे महेश्वर ।
अजनाभे महावर्षे मथुरामण्डले स्थिते ॥ ११ ॥
अवतीर्णा व्रजभुवि वासनाः कृष्णयोषिताम् ।
प्रादुर्भूतस्तत्र नन्दगृहेऽपि पुरुषोत्तमः ॥ १२ ॥
कूटस्थचित्तवृत्तौ तु निजावेशं निधारयन् ।
तत्र नानाविलासेन बालक्रीडाकुतूहलैः ॥ १३ ॥
तथा पौगण्डलीलाभिः कैशोरीभिर्महाप्रभुः ।
व्रजमानन्दयामास निखिलं चरितैर्निजैः ॥ १४ ॥
गोपगोपीगणानां च यशोदानन्दयोस्तथा ।
पशूनां पक्षिणां चैव जाता संसारविस्मृतिः ॥ १५ ॥
कृष्णासक्तिवशादेव तस्मात्सानर्थकृद्भवः ।
ततो रासप्रसङ्गेन सर्वेषामविशेषतः ॥ १६ ॥
कालमायानिरासेन महामुक्तिरवर्तत ।
तदानीमवशिष्टोऽभून्मोहः कारणमात्रकः ॥ १७ ॥
तस्मिन्विरचितं शक्त्या योगमय्याखिलं जगत् ।
तन्मध्ये जायमाने च महारासोत्सवे तदा ॥ १८ ॥
योगशक्तिप्रभावेण प्राप्तालौकिकविग्रहाः ।
महानन्दरसाम्भोधौ प्रियेण सह रेमिरे ॥ १९ ॥
अक्षरः सर्वमेतद्धि भूत्वा नारायणः स्वयम् ।
स्वप्नसाक्षितया जातो ददर्शाभूत्कृती तदा ॥ २० ॥
मनोरथः प्रियाणां तु न सिद्ध इति मे मतिः ।
यतः प्रियेण सम्बन्धादभूत्संसारविस्मृतिः ॥ २१ ॥
पशूनां पक्षिणां चापि किं पुनः स्वस्य योषिताम् ।
अतो मनोरथपथं नीतां[1] दुःखमयं हिताः ॥ २२ ॥
नानुभूय कथं सख्यः पूर्णकामा भवन्ति हि ।
एतद्वेदितुमिच्छामि याथातथ्येन तद्वद ॥ २३ ॥

---

१ 'नीतां दुःखमयीं हि ताम्' इत्यपि पाठः ।

अन्यथा मे मनस्तृप्तिर्न भविष्यति कर्हिचित्।
॥ श्रीशिव उवाच ॥
साधु पृष्टं त्वया व्यास तच्छृणुष्वावधानतः ॥ २४ ॥
दुःखलीलावलोकाय योऽभूत्पूर्वं मनोरथः।
प्रियस्य साहचर्येण न सिद्धोऽभूत्स्वभावतः ॥ २५ ॥
स एव बीजरूपेण तस्थौ शिष्टो मुनीश्वर।
वासनालिङ्गसम्बद्धा जीवाः संसारमाप्नुयुः ॥ २६ ॥
सर्वथा न विमुच्यन्ते जन्मभाजो भवन्ति हि।
तथा कृष्णप्रियाः सर्वाः पूर्ववासनयान्विताः ॥ २७ ॥
तदपूर्त्या निजे धाम्नि न प्रबुद्धा मुनीश्वर।
ततः प्रादुरभूत्कालमाया पूर्ववदेव सा ॥ २८ ॥
तिरोहिता योगशक्तिः प्रपञ्चः पुनरुत्थितः।
तत्स्वभावस्तदाकारस्तद्गुणस्तद्विधो महान् ॥ २९ ॥
तत्रावतीर्णाः कृष्णस्य प्रियास्ता वासनाबलात्।
किञ्चित्कालं निजपदे सुषुप्ताविव संस्थिताः ॥ ३० ॥
कालमायामये स्वप्ने पुनरासन्निमज्जिताः।
परार्द्धद्वितये व्यास कल्पे वाराहसंज्ञके ॥ ३१ ॥
स्वारोचिषादिषु मनूष्वतीतेषु च षट्सु च।
वैवस्वतस्य च मनोरन्तरे सप्तमे तथा ॥ ३२ ॥
अष्टाविंशतिमे तस्य कलौ तच्चरणादिमे।
मनोरथावशेषस्य भोगमाप्स्यन्ति दुःसहम् ॥ ३३ ॥
देशे देशे भविष्यन्ति ब्राह्मणादिकुलेष्वपि।
काश्चित्स्त्रीरूपधारिण्यः पुंरूपा अपि काश्चन ॥ ३४ ॥
रासे कृष्णाभिमानिन्यः पुरुषाकृतयश्च ताः।
आविष्कृतस्त्रीस्वभावास्ता भविष्यन्ति योषितः ॥ ३५ ॥
उदासीनाश्च रमणे न स्त्रियः पुरुषा अपि।
क्लीबभावं गमिष्यन्ति स्वापराधेन वै तदा ॥ ३६ ॥

एवं स्वरूपमुत्सृज्य तत्तद्देहाभिमानतः।
तत्तद्देहाद(हृ)तास्तत्तच्चेष्टास्तत्तत्स्वभावकाः॥ ३७॥
तत्तत्कर्मणि सन्तोषानन्दवन्त्यो विमोहिताः।
अक्षरस्वप्नविषये विभ्रमिष्यन्त्यनेकधा॥ ३८॥
काश्चिद्गृहाश्रमे स्थित्वा पुत्रपौत्रकलत्रजम्।
दुःखं प्राप्ताः प्रतप्यन्ते हा दैव किमिदं त्विति॥ ३९॥
दारिद्र्यानलसन्तप्ताः परार्थग्रहलोलुपाः।
परसेवादिना क्वापि वृत्तिसम्पादने रताः॥ ४०॥
पुरुषत्वे च मरणं कलत्रस्य यदा भवेत्।
रुदन्त्योनुवदिष्यन्ति हा हा धिग्जीवितं मम॥ ४१॥
नष्टं सुखं मे शिशवो निःसहाया लघीयसः।
कथं तान्पालयिष्यामि मग्नोहं दुःखसागरे॥ ४२॥
स्त्रीत्वेपि पतिनाशोत्थ दुःखेन परितापभाक्।
एवं पराभिध्यानेन स्वरूपानन्दहानितः॥ ४३॥
स्वप्नं प्रविश्य क्लिष्यन्ति वासनाः कृष्णयोषिताम्।
काश्चिन्मायानन्दमग्ना गृहे पुत्रादिसङ्कुले॥ ४४॥
अत्यन्तमधुरालापान् शिशूनां कलभाषिणाम्।
शृण्वन्त्यो मोदमापन्नाः पशुद्रविणधामाभिः॥ ४५॥
विचारयति मनसि धन्योहं जगतीतले।
प्रभूतमस्ति मे द्रव्यमीश्वरेणोपपादितम्॥ ४६॥
सन्ति पुत्राश्च पौत्राश्च मदाज्ञावशवर्तिनः।
पतिव्रता च गृहिणी मधुरस्मितभाषिणी॥ ४७॥
ज्ञातिष्वहं वरिष्ठोस्मि बलवान्धनवान्सुखी।
कोऽन्योऽस्ति सदृशो लोके तुलनां मेऽधिरोहति॥ ४८॥
स्वप्नोपदर्शित शरीरमनर्थमूलं तापानुतापगददैन्यभयादिमूलम्।
आसाद्य कृष्णवनिता विपरीतरूपभावभ्रमेण गुणवृत्तिमुपांति लीलाम्॥
अगाधाज्ञानजलधौ पतितासु प्रियासु च।

स्वयं कृपामहाम्भोधौ ममज्ज पुरुषोत्तमः ॥ ५० ॥
यदा तदा यन्त्रविन्यस्तत्ते वक्ष्यामि संश्रृणु ।
गोप्यत्वान्न स्फुटं वक्ष्ये सङ्केतमवधार्यताम् ॥ ५१ ॥
प्रतिलोमं [१]स्मयं कृत्वा सप्तसंख्यान्विताच्चतः ।
तृतीयं च चतुर्थस्य तृतीयं तदनन्तरम् ॥ ५२ ॥
षष्ठाद्द्वितीयमुद्धृत्य द्वितीयस्यादिमं ततः ।
चतुर्थाच्च तृतीयं वै षष्ठाच्च द्वितीयं तथा ॥ ५३ ॥
सप्तमाच्च तृतीयं तु प्रथमस्य द्वितीयकम् ।
[२]षष्ठस्यादिममारूढं चतुर्थस्यान्तिमं तथा ॥ ५४ ॥
[३]चरमं पञ्चमस्यापि चतुर्थं[४] पञ्चमस्य च ।
षष्ठादिमारूढमिदं[५] द्वितीयाद्यं ततः परम् ॥ ५५ ॥
चतुर्थतृतीयारूढं षष्ठस्य द्वितीयं लिखेत् ।
सप्तमाच्च तृतीयं वै षष्ठाद्यं वह्नि[६]मस्तकम् ॥ ५६ ॥
पुनः षष्ठाद्यमुद्धृत्य पञ्चमस्यान्तिमं ततः ।
षष्ठाद्यं निगमाद्वेदं प्रथमात्प्रथमं तथा ॥ ५७ ॥
रसाद्द्वितीयं चरमं वेदा[७]दम्भो[८]निधेर्मुखम् ।
[९]रसाद्यं [१०]तद्द्वितीयाक्तं पञ्चमस्याननं तथा ॥ ५८ ॥
वेदाद्यं तृतीयं बाणाच्चतुर्थाच्च चतुर्थकम् ।

---

१ स्मयः गर्वः तस्य प्रतिलोमे व्युत्क्रमे कृते वर्गः इति भवति । स तु सप्तसंख्याको ग्राह्यः । कु चु टु तु पु इति पञ्च वर्गाः। षष्ठे वर्गे य् र् ल् व इति चत्वारो वर्णाः । श् ष् स् ह् ळ क्ष् एते षट् सप्तमे वर्गे ज्ञेयाः । २ षष्ठादिमो यकारः प्रथमस्य द्वितीयं खकारमारूढो ज्ञेयः । तथा कृते 'ख्य' इति जातम् । ३ पञ्चमस्य चरमो मकारः । ४ इदं पञ्चमस्य चतुर्थो भकारः । षष्ठादिमो यकारः । अस्य भकारारूढत्वे "भ्य्" जातम् । ५ चतुर्थवर्गस्य तृतीयेन दकारेण युक्तः षष्ठस्य द्वितीयो रकारः तथा कृते द्र् इति जातम् । ६ वह्निः रेफः मस्तके यस्यैतादृशः षष्ठाद्यो यकारः तथा कृते 'र्य' इति जातम् । ७ वेदात्तवर्गादित्यर्थः । ८ अम्भोनिधेः सप्तमवर्गस्य मुखं शकारः । ९ रसाद्यो यकारः । १० तद्द्वितीयः षष्ठस्य द्वितीयो रकारस्तेन युक्तं पञ्चमस्याननं पकारस्तथा च 'प्र' जातम् ।

पुनर्बाणाच्चतुर्थं च रसादपि चतुर्थकम् ॥ ५९ ॥
द्वितीयं च समुद्रस्य[1] रसाद्यारूढमेव च ।
चतुर्थाद्यं ततो ज्ञेयं शक्तिभिः[2] सह योजयेत् ॥ ६० ॥
प्रथमं पञ्चदश्या च पञ्चम्यालिङ्गितं मुने ।
द्वितीयं प्रथमाविद्धं तृतीयं तूर्यया युतम् ॥ ६१ ॥
चतुर्थं रुद्रशक्त्या च पञ्चदश्या च सङ्गतम् ।
पञ्चमं गुणशक्त्या च षष्ठं विद्धं द्वितीयया ॥ ६२ ॥
सप्तमं प्रथमाविद्धं मनुविद्धं[3] तथाष्टमम् ।
नवमं नेत्रशक्त्या च दशमं प्रथमायुतम् ॥ ६३ ॥
द्वितीयया च रुद्रार्णं[4] पञ्चदश्या च मूर्द्धनि ।
तथैव पञ्चदश्या च द्वादशं मूर्ध्नि भूषितम् ॥ ६४ ॥
त्रयोदशं प्रथमया मनुसंख्यं च षष्ठया ।
आद्यशक्तियुतं ध्यायेत्तथा पञ्चदशं मुने ॥ ६५ ॥
षोडशं च त्रयोदश्या तदग्र्यं नेत्रसंख्यया ।
अष्टादशं पञ्चदश्या द्वितीयानुगतं स्मरेत् ॥ ६६ ॥
आद्यशक्त्यैकोनविंशं विंशं विद्धं द्वितीयया ।
एकविंशं प्रथमया द्वाविंशं नेत्रसंख्य(ख्य)या ॥ ६७ ॥
त्रयोविंशं नेत्रशक्त्या चतुर्विंशं तथाद्यया ।
तथैव पञ्चविंशं च षड्विंशं गुणसंख्यया ॥ ६८ ॥
पञ्चम्या सप्तविंशं च तदग्र्यं रुद्रसंख्यया ।
आद्यशक्तिविनिर्भिन्नमेकोनात्रिंशमुच्यते ॥ ६९ ॥
गुणशक्तियुतं त्रिंशमेकत्रिंशं तथाद्यया ।

---

१ समुद्रस्य द्वितीयः षकारः । स तु रसाद्यारूढा यकारयुक्तः । २ शक्तयः स्वराः, उक्तं च तंत्रांतरे—ककारादिक्षकारान्ता वर्णास्ते शिवरूपिणः । अकारादिविसर्गान्ताः स्वराः षोडशशक्तयः ॥ ३ मनुः चतुर्दशशक्तिः 'औ' तया विद्धः अष्टमः तथा 'ख्यौं' इति जातम् । ४ रुद्रार्णं एकादशाक्षरम् ।

षोडशाद्यसमेतं च द्वात्रिंशं चेति संग्रहः[1] ॥ ७० ॥
तद्द्वारा[2] बोधमाप्स्यन्ति सर्वाः श्रीकृष्णवल्लभाः ।
स्वात्मस्वरूपलाभेन किञ्चिदुच्छ्वसिता इव ॥ ७१ ॥
गुर्जरे बोधमाप्स्यन्ति प्रियाणां वासनाः शुभाः ।
चत्वार्येव सहस्राणि सौराष्ट्रे च शतत्रयम् ॥ ७२ ॥
माथुरेऽष्टशतान्येव ह्यानर्ते च सहस्रकम् ।
कौंकणे च सहस्रार्धं सम्भविष्यन्ति वासनाः ॥ ७३ ॥
मरुदेशे सहस्राणि त्रीणि चैव शतद्वयम् ।
मागधे द्वे शते विंद्यादवन्तीविषये शतम् ॥ ७४ ॥
शतमाभीरदेशे तु पाञ्चालेऽष्टाधिकं शतम् ।
नैकत्रस्थितयः शेषा नानादेशेषु सङ्ग(म)ताः ॥ ७५ ॥
एवमर्कसहस्राणि वासनाः कृष्णयोषिताम् ।
नानादेशविशेषेषु सम्भविष्यन्ति वै कलौ ॥ ७६ ॥

॥ व्यास उवाच ॥

शुद्धाः कृष्णप्रिया देव केवलानन्दमूर्तयः ।
यासां संस्मरणादेव शुद्धाः स्युः पञ्च पापिनः ॥ ७७ ॥
सार्धत्रिकोटितीर्थेषु स्नात्वा यच्छुद्धिमाप्नुयात् ।
वासनास्पर्शमात्रेण न सा साम्यमवाप्नुयात् ॥ ७८ ॥
साङ्गमध्ययनं कृत्वा वेदानां शुद्धिमाप्नुयात् ।

---

१ द्वात्रिंशद्वर्णानां संग्रहस्त्वीत्थम्—
सुंदरी चेंदिरा सख्यौ नामभ्यां चंद्रसूर्ययोः ।
मायांधकारनाशाय प्रतिबुद्धे भविष्यतः ॥ इति ॥

२ तत्द्वारा सुंदरींदिराद्वारा । इमे सख्यौ तु कदा भूत्वा चंद्रसूर्यनाम्ना प्रसिद्धिं गत्वात्मनां मायांधकारनाशं करिष्यत इति समयस्तु न निर्धारितोऽत्र ग्रंथे कुत्रापि, गोप्यत्वादिति ५१ एकपंचाशत्तमे श्लोके उपक्रम एवोक्तस्तथापि गवेषणातिशयेन तंत्रान्तरादयमप्यवगन्तुं शक्यते । इमे सख्यौ कलावेव भविष्यतः इति सुन्दरीतन्त्रे शिवेनोक्तम्—केनपद्मावतीनद्योरन्तिके विन्ध्यपर्वते । इन्दिरा नाम सा देवी भविष्यति कलौ युगे ॥ एनयोः साहचर्यम् । कदाविर्भाव इति गूढम् । इंदिरेत्यत्र 'इंद्राक्षी'त्यपि क्वचित्पाठः ।

यत्सम्भाषणमात्रस्य कलां नार्हति सा सकृत् ॥ ७९ ॥
सप्तकोटिमहामन्त्रजपोत्थं यत्फलं महत् ।
न तत्साम्यमवाप्नोति वासनास्मरणेन हि ॥ ८० ॥
कथं ताः सम्भविष्यन्ति कलौ पापयुतेऽनृते ।
सीदन्ति साधवो यत्र दुर्जनाः प्रभवन्ति हि ॥ ८१ ॥
यत्र पाखण्डनिरता जनाः सङ्करदूषिताः ।
वेदाचारपरिभ्रष्टा द्विजा यत्र मलिम्लुचाः ॥ ८२ ॥
उदरम्भरिणो लोकाः स्वधास्वाहाविवर्जिताः ।
शिश्नोदरपरा दुष्टाः स्वस्वधर्मबहिर्मुखाः ॥ ८३ ॥
अवेदधर्मनिरताः शौचशीलविवर्जिताः ।
असत्यवादिनो मन्दा अकृतज्ञा गुरुद्रुहः ॥ ८४ ॥
अनावृष्टिमहावृष्टिभयत्रस्ता विचेतसः ।
नास्तिका निन्दका मूर्खाः परोपद्रवकारिणः ॥ ८५ ॥
अदातारो गदग्रस्ता देहमात्रैकपोषकाः ।
लोभग्रस्ताः कर्महीनाः परस्परविरोधिनः ॥ ८६ ॥
एवं कलियुगे घोरे वासनाः कृष्णयोषिताम् ।
प्रादुर्भूता भविष्यंतीत्यत्र मे संशयो महान् ॥ ८७ ॥
तमपानुद देवेश सर्वज्ञोसि यतः स्वयम् ।
भवदन्यं न पश्यामि वासनानिर्णये प्रभुम् ॥ ८८ ॥

॥ शिव उवाच ॥

साधु साधु महाप्राज्ञ पाराशर्य महामुने ।
त्वत्प्रश्नमात्रमुद्दिश्य वासनाकीर्तनं भवेत् ॥ ८९ ॥
कलौ तत्सम्भवे हेतुं शृणु वक्ष्यामि सादरम् ।
वैवस्वतस्य च मनोर्युगेऽष्टाविंशतिके मुने ॥ ९० ॥
द्वापरे समभूल्लीला कृष्णस्त्रीरासमण्डले ।
योगशक्तितिरोधाने कालशक्त्युदये पुनः ॥ ९१ ॥

अपश्यदक्षरः स्वप्नं कालमायाविजृम्भितम् ।
तत्र लोकाः समभवन् भूराद्याः सचराचराः ॥ ९२ ॥
पुनर्नंदादयो गोपा गोप्यो गावः खगा मृगाः ।
वसुदेवोग्रसेनाद्याः कंसाद्या दुष्टभूभृतः ॥ ९३ ॥
यथापूर्वस्वभावाश्च रूपशीलगुणान्विताः ।
कृष्णोऽभून्नंदसदने गोपगेहेषु गोपिकाः ॥ ९४ ॥
पूर्ववासनया युक्तास्तथापि स्वात्मिकं जगत् ।
न पूर्वसिद्धं किमपि जृम्भिताक्षरवासना ॥ ९५ ॥
मूलभूताः स्त्रियः प्राप्ताः स्वस्वाबिम्बानि वै मुने ।
तेष्वेव लीना ह्यभवन्कियत्कालं सुषुप्तिवत् ॥ ९६ ॥
स्वदुक्तदोषबहुले जाते कलियुगे पुनः ।
अवतीर्णाः क्षितितलं प्रियाणां वासनाश्च ताः ॥ ९७ ॥
तद्युगस्यैव संशुद्धिर्निखिलस्य यथा भवेत् ।
एवं कृतवती साक्षादिच्छाशक्तिः सुमङ्गला ॥ ९८ ॥
कृष्णकृष्णप्रियाणां च यत्र प्रादुर्भवोऽभवत् ।
तद्युगस्यैव संशुद्धि[1]र्निखिलस्य यथा भवेत् ॥ ९९ ॥
मुक्तिर्निःसाधना यत्र स्त्रीशूद्राणां विशेषतः ।
कृष्णक्रीडारसाह्लादपरिपूरितचेतसाम् ॥ १०० ॥
तत्कथाश्रवणाह्लादचमत्कारजुषां नृणाम् ।
सद्यः कलिमलं हन्ति नात्र कार्या विचारणा ॥ १०१ ॥
प्रादुर्भावो वासनानां यदि चान्ययुगे भवेत् ।
तदा न गौरवं किंचित्कलेर्दोषनिधेरिह ॥ १०२ ॥
तस्मादिच्छा कृतवती प्रादुर्भावं कलौ युगे ।
धन्याः कलियुगे जाताः स्त्रीशूद्रा नीचजातयः ॥ १०३ ॥
वासनासङ्गमात्रेण कृष्णप्रेमोदयादिह ।
कृतकृत्या भविष्यन्ति नास्ति तेषां गतिः क्वचित् ॥ १०४ ॥

---

१ संशुद्धिर्जाता तासां प्रभावतः ॥ इत्यपि पाठः ।

इति ते कथितं व्यास यत्त्वया प्रष्टुमुत्तमम् ।
अन्यत्प्रष्टव्यमपि चेत्प्रष्टव्यं तदशङ्कया ॥ १०५ ॥

॥ इति श्रीपुराणसंहितायां सिद्धांतसारे पुनर्व्यासनावतरणं नामैकत्रिंशोऽध्यायः ॥ ३१ ॥

॥ आदितः श्लोकानां समष्टयङ्काः ॥ २९८२ ॥

## ॥ द्वात्रिंशोऽध्यायः ॥ ३२ ॥

॥ व्यास उवाच ॥

कलिर्धन्यः कलिर्धन्यः कलिर्धन्यो महेश्वर ।
यत्र कृष्णप्रियाणां च वासनाः समुपाविशन् ॥ १ ॥
यत्र शौ[1]चं तपः सत्यं किं तैः मत्यादिभिर्गुणैः ।
यत्र नैवोप[2]लभ्येत कृष्णलीलाभवौषधम् ॥ २ ॥
किं विप्रकुलजातेन जन्मना तपसापि वा ।
विद्यया विनयेनापि किं शीलगुणकर्मभिः ॥ ३ ॥
कृष्णप्रेमांकुरो येषां न जातो हृदये यदि ।
कृष्णलीलैकवृत्तीनां तल्लीलामग्नचेतसाम् ॥ ४ ॥
तत्कथाकीर्तनजुषां तदर्थं त्यक्तकर्मणाम् ।
किमवद्यं भवेत्तेषां यदि स्युर्नीचयोनयः ॥ ५ ॥
तस्माद्धन्याः कलियुगे ये जाता भारते जनाः ।
एतदर्थश्रवणतः प्रसन्नं मे मनः प्रभो ॥ ६ ॥
अथाहं श्रोतुमिच्छामि यत्रास्ते पुरुषोत्तमः ।
निजंधामेति विख्यातं स्वप्रकाशगुणात्मकम् ॥ ७ ॥
कीदृग्विधं च कुत्रास्ति तद्ब्रूहि परमार्थतः ।

॥ शिव उवाच ॥

शृणु व्यास मुने सत्यं प्रवक्ष्यामि तवाग्रतः ॥ ८ ॥

---

१ 'यत्र सत्यं तपः शौचं' इत्यपि पाठः । २ नवोपपद्येत इ.पा. ।

अवर्णनीयं तद्धाम यन्न शब्दस्य गोचरः ।
वेदा अप्यत्र चकितं दधते किमुतापरे ॥ ९ ॥
स्वस्वमत्यनुसारेण वर्णयंत्यपि केचन ।
तदुद्यानलतापत्रमेकं वर्णयितुं मुने ॥ १० ॥
न कल्पेनापि कल्पोऽहं किमुताखिलधाम तत् ।
तस्मात्सङ्क्षेपतो वक्ष्ये नामनिर्देशमात्रतः ॥ ११ ॥
अनेककोटिब्रह्माण्डप्रपंचाद्बहिरुद्गतः ।
चिदाकाशो महानास्ते लीलाधिष्ठानमद्भुतम् ॥ १२ ॥
यत्र दिव्यः सुधासिन्धुः कोटियोजनविस्तृतः ।
रत्नराजिविचित्रोर्मिकर्बुरीकृतसज्जलः ॥ १३ ॥
उत्पतन्मीनचक्रेण समन्तात्परिशोभितः ।
पतङ्गरङ्गसङ्काशसुधासम्पूरितोदरः ॥ १४ ॥
तटस्थोद्यानमालाभिः समन्तात्परिशोभितः ।
कोटयर्धमानतस्तस्मिन्मणिद्वीपो मनोहरः ॥ १५ ॥
नवखण्डात्मकः श्रीमान्नवरत्नविभूषितः ।
कोटयर्केन्दुस्फुरद्रत्नप्रभापूरसुपूरितः ॥ १६ ॥
पद्मरागमयी यस्य मध्ये(ध्य)भूमिः सुखात्मिका ।
तत्पूर्वे पुष्परागोत्था चिदानन्दमयी क्षितिः ॥ १७ ॥
आग्नेय्यां हीरकोद्भिन्ना भूमिर्वैराग्यसंज्ञिका ।
दक्षे सन्तोषिणी भूमिर्महामरकतोज्ज्वला ॥ १८ ॥
अखण्डविद्रुमा यस्य नैऋर्त्ये प्रेमभूमिका ।
पश्चिमे नीलमणिजा भुक्तिभूमिर्मनो(रमा)हरा ॥ १९ ॥
इन्द्रनीलमयी ज्ञानभूमिर्वायव्यगोचरे ।
प्रकाशभूमिर्गोमेदरचिता चोत्तरे स्थिता ॥ २० ॥
ईशान्ये मौक्तिकमयी भूमिः स्याद्रतिसंज्ञि(ता)का ।
अखण्डमणिजं मूलमन्दिरं मध्यभूमिगम् ॥ २१ ॥
सखीनां मन्दिराण्येव तस्य भाति समन्ततः ।

योजनार्धप्रमाणानि नानामणिमयानि च ॥ २२ ॥
प्रकाशभूमिकानन्दभूम्योः सन्धौ व्यवस्थितः ।
नीलाद्रिप्रवरो दिव्यस्त्रीणि शृङ्गाणि यस्य वै ॥ २३ ॥
योजनायुतमानेन तस्योच्छ्रायो विराजते ।
महाचन्द्रं चन्द्रगौरं चन्द्रचूडमिति क्रमात् ॥ २४ ॥
शृङ्गाणि नामभिस्त्रीणि रम्योपवनवन्ति च ।
योजनायुतमानेन भात्युच्चैः शिखरैस्त्रिभिः ॥ २५ ॥
विभ्राजं पावमानं च महारम्यं च नामतः ।
भुक्तिभूम्यानन्दभूम्योः सन्धौ माणिक्यपर्वतः ॥ २६ ॥
स्वभासा रञ्जयन्नास्ते भूमिर्वक्राणि वै दिशाम् ।
मुक्ताजालाश्रितो विष्वक् सुधानिर्झरशीतलः ॥ २७ ॥
पतत्रिस्वरभेदैश्च श्रोत्रहारी मनोहरः ।
कम्पमान इवात्यन्तमुन्मीषत्प्रभयाश्रितः ॥ २८ ॥
नीलाद्रिद्युतिनिर्भिन्नः क्वचिद्वर्णान्तरङ्गतः ।
उद्यत्स्वर्णाङ्कुरः क्वापि सुस्थिरो योगिचित्तवत् ॥ २९ ॥
तथैव निश्चलतरः उच्छ्राये शतयोजनः ।
नभोन्तरालं कुर्वाणः सान्ध्यमेघारुणं यथा ॥ ३० ॥
सपादलक्षमानेन योजनानां महासरः ।
प्रकाशानन्दभूम्योस्तु सीमानं व्याप्य तिष्ठति ॥ ३१ ॥
अनल्परत्नसोपानैर्मणिमण्डपमण्डितैः ।
विद्युदुल्लासरुचिरान्कुर्वाणमिव दिक्तटान् ॥ ३२ ॥
यत्कूलवलयद्योतदुद्यानावलिमण्डितम् ।
मणिमुक्ताप्रभाविद्धपीयूषजलराशिषु ॥ ३३ ॥
सहस्रपत्रैरुदितैः काञ्चनैर्हंसकेलिभिः ।
परागपटलामोदैरामोदितजलोत्करैः ॥ ३४ ॥
पद्मिनीपत्रखण्डैश्च महामरकतद्युभिः ।
जलकुक्कुटकारण्डनक्रचक्रैर्विराजितम् ॥ ३५ ॥

यन्मध्यदेशो विलसन्विश्रामस्थानमण्डपः ।
सहस्रस्तम्भनिचयैर्मुक्तामणिविचित्रितैः ॥ ३६ ॥
राजमानः प्रवालोत्थचतुर्द्वारमनोहरः ।
मुक्तावितानसंशोभी सभास्थानमनोहरः ॥ ३७ ॥
नानाकेलीस्थलीरम्यो नानोद्यानलताकुलः ।
सहस्रस्वर्णसोपानैश्चतुर्दिक्षु विभूषितः ॥ ३८ ॥
पुष्परागाद्रिशिखरात्पावमानाभिधाम्नदी ।
यमुनेति च विख्याता स्वामिनीकृष्णदेहजा ॥ ३९ ॥
सामरस्यानन्दमयी पतन्ती विरजाचले ।
सन्तो(भूमिं)षरूपां वैराग्यां(ग्यं)सिंचमानामृताम्बुभिः ॥४०॥
धाम्नोरन्तरमाप्लाव्य तथा वैरतिभूमिगा ।
पूरयित्वा सरो दिव्यं सपाद(दं)लक्षयोजनम् ॥ ४१ ॥
ज्ञानभूमिं ततो मुक्तिं प्रेमभूमिं ततः परम् ।
आप्लावयन्ती सततं पश्चिमाब्धिमथाविशत् ॥ ४२ ॥
एकयोजनमानेन खण्डे गोमेदसंज्ञके ।
विहरन्ती प्रवाहेण तत्र पीतजला भवत् ॥ ४३ ॥
आग्नेय्यां हीरकाद्रिस्था भूमिर्वैराग्यसंज्ञिता ।
शुद्धश्वेतजला तत्र प्रवाहो दशयोजनः ॥ ४४ ॥
चिदानन्दमयीभूमिर्या प्रोक्ता पुष्परागजा ।
शुद्धश्वेतजला तत्र किञ्चित्कृष्णजलापि च ॥ ४५ ॥
शतयोजनसंसर्पी प्रवाहस्तत्र विस्तृतः ।
मध्यखण्डे महादिव्यं मूलमन्दिरमद्भुतम् ॥ ४६ ॥
नवभूम्यात्मकं श्रीमच्चन्द्रशालाविराजितम् ।
सखीनां मन्दिरैर्दिव्यैः समन्तात्परिवेष्टितम् ॥ ४७ ॥
कोटीन्द्वर्कप्रतीकाशं वा(च्या)गतीतं समृद्धिमत् ।
आधारसंज्ञिता तस्य प्रथमा भूमिरुच्यते ॥ ४८ ॥
चतुःषष्टिमणिस्तम्भप्रभापूरा(लेपा)नुलेपिता ।

उपरिष्टात्ततस्तस्या भूमिका मतिविभ्रमा ॥ ४९ ॥
अखण्डदर्पणक्लृप्ता भित्तयोऽस्य समन्ततः ।
ताभिर्भ्रमं जनयति ह्यर्वाचीनपराक्स्थितेः ॥ ५० ॥
तदूर्ध्वे भोगभूमिस्तु नवरत्नविचित्रिता ।
मुक्तारत्नवितानाढ्या नानाश्चर्यकरी दृशा(नृणा)म् ॥५१॥
भोगान्ते कुट्टिमे स्थित्वा स्वामिनीसहितः प्रभुः ।
पक्षिणां च पशूनां च युद्धलीलां प्रपश्यति ॥ ५२ ॥
तदूर्ध्वे परमा भूमिर्नाम्ना नृत्यमयीति च ।
योषितो यत्र नृत्यन्ति क्वणन्नूपुरमेखलाः ॥ ५३ ॥
रत्नभित्तौ प्रतिध्वानैर्यत्र वेश्माभिपूरितम् ।
कदाचिदत्र भगवान्परात्मा पुरुषोत्तमः ॥ ५४ ॥
रत्नसिंहासनारूढः स्वामिन्या सह सङ्गतः ।
उपचारपराभिस्तु सखीभिः परिवेष्टितः ॥ ५५ ॥
नृत्यं पश्यति सानन्दो नृत्यन्तीनां च योषिताम् ।
मिहिलेति सखी काचिद्विश्रुता छत्रधारिणी ॥ ५६ ॥
चन्द्रलेखा सखी काचिच्चामरं रत्नदण्डयुक् ।
भ्रामयन्ती मुहू रेजे शरच्चन्द्रकरोज्ज्वलम् ॥ ५७ ॥
अहिवल्लीदलव्रातान्यादाय मणिपात्रके ।
हंसाकृतिमति स्वच्छे स्थिता मदनमेखला ॥ ५८ ॥
नृत्ये मृदङ्गवाद्येन माध्वी कङ्कणपाणिना ।
आस्फालयन्ती सानन्दं कुरुते पुरुषोत्तमम् ॥ ५९ ॥
स्तनापीडं निधायांशे वीणामाशावती सखी ।
शुक्तिशोभिनखाग्राग्रैर्निघ्नती तमतोषयत् ॥ ६० ॥
लावण्यलहरी काचिद्वंशीमधरसीधुना ।
पूरयन्ती मनो जह्रे कृष्णस्य शृण्वतो मुने ॥ ६१ ॥
आहूय नर्तकीनां च स्वेदबिन्दूचितानि च ।
मुखानि मार्जयन्नास्ते कारुण्यात्पुरुषोत्तमः ॥ ६२ ॥

पुष्पवर्षं स्वहस्ताभ्यां सखीवृन्दोपरि पृथक् ।
क्षिपन्नास्ते स्मितमुखः साधु साध्विति संस्तुवन् ॥६३॥
एवं नानाविधं नृत्यं रसोद्दीपनमन्तिके ।
नृत्यभूमौ स्थितः कृष्णः पश्यन्नास्ते स्वयं रसः ॥६४॥
तदूर्ध्वं शयनीयाख्या भूमिका रत्नभासुरा ।
नानापरिमलोद्गारा शुकसारीनिनादिता ॥ ६५ ॥
पयःफेननिभैस्तल्पैः सहस्रैः परिताश्रिता ।
तल्पस्तम्भलसच्चारुपुत्रिकापाणिरत्नजा ॥ ६६ ॥
प्रभाभिश्चेन्दुसाहस्रैरिव विद्योतितान्तरा ।
यत्र मध्यस्थितो भाति दिव्यः स्फटिककुट्टिमः ॥ ६७ ॥
प्रान्तस्वर्णोत्थपत्रैश्च मुक्तारत्नविचित्रितैः ।
तदन्तरिन्द्रनीलोत्थपत्रैर्माणिक्यभूषितैः ॥ ६८ ॥
तदन्तर्गारुडैः पत्रैर्मध्यमध्यस्थहीरकैः ।
तदन्तर्हीरपत्रैश्च नीलरत्नालिचित्रितैः ॥ ६९ ॥
मध्ये काञ्चनरेखाभिः पूरिताभिर्मणिव्रजैः ।
क्लृप्तषोडशपत्राब्जप्रभाकिर्मीरितान्तरः ॥ ७० ॥
महार्हतल्पं तन्मध्ये मणिस्तम्भचतुष्टयम् ।
मणिमुक्ताफलस्फूर्जत्प्रान्तपल्लवशोभया ॥ ७१ ॥
आभूमितललम्बिन्या शुभ्रपट्या परिष्कृतम् ।
दिव्यैरुच्छीर्षकैर्हंसमृदुतूलचितान्तरैः ॥ ७२ ॥
प्रस्फुरद्गण्डफलकैर्दिव्यगन्धाधिवासितैः ।
दिव्यगन्धभ्रमद्भृङ्गपुष्पप्रकरमण्डितम् ॥ ७३ ॥
अनेकदिव्याभरणवसनस्थापनस्थलम् ।
स्तम्भमूर्धलसच्चारुरत्नमण्डपभूषितम् ॥ ७४ ॥
परितो दिव्यगन्धाद्यैर्नानाकुसुमराजिभिः ।
धूपपात्रैः स्वर्णमयैः सुरभ्यगुरुधूपितैः ॥ ७५ ॥
(रत्न)स्वर्णाम(त्र)न्त्रगतैर्हारैः पौष्पैश्चैव पृथग्विधैः ।

मराळमणिपात्रेषु स्थापितैर्गन्धमिश्रितैः ॥ ७६ ॥
एळाळवङ्गकर्पूरचूर्णपूगपरिष्कृतैः ।
ताम्बूलवीटकै रम्यैः केसराग्र्याविनिर्मितैः ॥ ७७ ॥
एलोशीरलवङ्गादिचन्द्रचन्दननाभिभिः ।
वासितैः सलिलैर्दिव्यै रसवद्भिः सुशीतलैः ॥ ७८ ॥
पुष्पाधिवासितैः शुद्धैर्दिव्यस्फाटिकपात्रगैः ।
अक्षोडदाडिमीरम्भाचूतजम्बूफलादिभिः ॥ ७९ ॥
सुशृतैः शर्कराभिन्नैश्चन्द्रकाश्मीरवासितैः ।
पीयूषवत्स्वादुतमैः पयोभिः स्वर्णपात्रगैः ॥ ८० ॥
अतिदिव्यामृतैश्चारुमणिकाञ्चनपात्रगैः ।
चन्दनागरुकर्पूरयक्षकर्दमनाभिभिः ॥ ८१ ॥
मिलितैः स्वर्णपात्रस्थैर्मोहितानेकषट्पदैः ।
अतिदिव्यैः सुरभिभिरङ्गरागैर्मनोहरैः ॥ ८२ ॥
स्फूर्जच्चतुष्कनिहितैः सारीभिः सहपाशकैः ।
रत्नपुत्तलिकावृन्दैर्मणिदीपलसत्करैः ॥ ८३ ॥
दिव्यशृङ्गारवेषाढ्यैर्नासानटितमौक्तिकैः ।
सुवर्णमणिमञ्जीरवलयाङ्गदभूषितैः ॥ ८४ ॥
सिन्दूरिताधरपुटैः सुनीलाचिबुकस्थलैः ।
अञ्जनाभमणिक्लृप्तकेशपाशमनोहरैः ॥ ८५ ॥
मुक्तामाणिक्यजटितभालभूषणभासुरैः ।
भ्राजमानं श्रियारम्यमुद्यानानिलसेवितम् ॥ ८६ ॥
शेतेऽत्र परमानन्दो रतिवीरोवरोधयुक् ।
हंसपारावतक्रीडानिलयैः परिशोभिता ॥ ८७ ॥
राजन्ते यत्र शिबिकाः शतशो मणिमेदुराः ।
तदूर्ध्वमुल्लसद्दोलाभूमिद्वयमुदाहृतम् ॥ ८८ ॥
रत्नदोलासहस्रैश्च निबद्धस्वर्णशृङ्खलैः ।
गायन्ति सखिवृन्दानि यत्रारूढानि लीलया ॥ ८९ ॥

अन्योन्यं वाग्विनोदैश्च हास्यपुष्टिं प्रकुर्वते ।
तदूर्ध्वं दूरलक्षा च भूमिका परिमीयते ॥ ९० ॥
कृष्णो यत्र समागत्य रत्नसिंहासने स्थितः ।
पश्यत्युद्यानसुषमां कूजत्पक्षिनिनादिताम् ॥ ९१ ॥
धावद्धरिणसञ्चारां कुञ्जमन्दिरभासुराम् ।
लसत्पुष्पपरागौघविताननिभस्तलाम् ॥ ९२ ॥
चन्द्रगारगजेन्द्राणां भ्रमद्यूथैः सुसङ्कुलाम् ।
नृत्यत्कलापिनिकरां पिकसारसनादिताम् ॥ ९३ ॥
तदूर्ध्वं दशमीभूमिश्चन्द्रशालेति कथ्यते ।
दशभूम्यात्मकमिदं मूलमन्दिरमद्भुतम् ॥ ९४ ॥
मन्दिरं परितो भूमिर्मण्डलाकारतस्तथा ।
काञ्चनीमणिमुक्ताढ्या प्रकाशपरमोज्ज्वला ॥ ९५ ॥
मुने तत्पुरतो भान्ति त्रयो वै रत्नमण्डपाः ।
मुक्तामाणिक्यरु(र)चि(तो)रो मध्यमण्डप ईरितः ॥ ९६ ॥
स्फाटिकी यत्र वसुधा चित्रिता मणिमौक्तिकैः ।
यदूर्ध्वदेशाद्विलसल्लम्बन्मौक्तिकगुच्छकाः ॥ ९७ ॥
रत्नावलिलसत्स्तंभराजिविभ्राजितान्तरा ।
नीलहीरादिविलसद्दिव्यसिंहासनान्विता ॥ ९८ ॥
रत्नोल्लसत्कपाटश्रीदेहलीसुषमान्विता ।
माणिक्यनीलमुक्ताभिर्ग्रोतितैः स्वर्णसूत्रितैः ॥ ९९ ॥
प्रभाभिद्योद्दिरद्भिश्च तोरणैर्मण्डितानना ।
वामदक्षिणगौ तस्य मण्डपौ सुमनोहरौ ॥ १०० ॥
नीलमाणिक्यरु(र)चि(तौ)रौ हीरस्तम्भशतोज्ज्वलौ ।
स्वर्णमुक्तादिखचितसोपानावलिभासुरौ ॥ १०१ ॥
समन्ताद्विलसद्रत्नवाटीमण्डलवेष्टितौ ।
मण्डपत्रयमेतद्धि कुट्टिमोपरिकल्पितम् ॥ १०२ ॥
वायूदीर्णपरागौघैः पाटलीकृतमध्यमम् ।

सन्निविष्टास्त्रयश्चैते सन्मुखं मूलवेश्मनः ॥ १०३ ॥
तत्र नानाविधं नृत्यं नृत्यन्तीनां च योषिताम् ।
गायन्तीनां गानघोषा नूपुरध्वनयोऽपि च ॥ १०४ ॥
श्रूयन्ते हर्षजनकास्तदुद्यानेषु दूरतः ।
महापद्मवनं भाति परितो मूलमन्दिरम् ॥ १०५ ॥
लक्षयोजनमानेन सुरभीकृतदिक्तटम् ।
गुञ्जद्द्विरेफमालाभिर्झङ्कारमुखरीकृतम् ॥ १०६ ॥
मरालमिथुनोपास्तसहस्रदलपङ्कजम् ।
नीलरत्नलसद्दण्डमाणिक्याम्भोजमण्डितम् ॥ १०७ ॥
नीलश्वेतश्यामपक्षपक्षिलक्षकृतास्पदम् ।
वायवान्दोलितपद्मानां रजोविभ्राजिताम्बरम् ॥ १०८ ॥
त्रिविधानिलसंचारमपाताम्लान(संफुल्लताम्र)पङ्कजम् ।
पद्मरागमयस्फूर्जत्प्राकारेणाभिवेष्टितम् ॥ १०९ ॥
बहिर्निर्गमनद्वारमण्डितं मध्यभाग(देश)तः ।
तद्बहिः परमानन्दविकाश्युद्यानमद्भुतम् ॥ ११० ॥
स्वच्छन्दचारिविहगैरुपासितलताशतम् ।
पद्मरागलतापुञ्जक्रान्तानेकमणिप्रभम् ॥ १११ ॥
चिन्तामणिमहाशालं पद्मरागलताकुलम् ।
चिन्तारत्नशिलानद्धभूमिशोभातिसुन्दरम् ॥ ११२ ॥
तच्छोभावर्णने देव वागपि मे जडायते ।
तद्बहिश्चन्द्रकान्तेन मणिना कल्पिताकृतिः ॥ ११३ ॥
प्रवालभूमिकं सूर्यकान्तमुद्यानमद्भुतम् ।
सूर्यकान्तमया यत्र भूरुहो विविधा लताः ॥ ११४ ॥
प्रवालद्युतिसम्भिन्नाः पद्मरागमया इव ।
समन्ताद्यत्र सौधानि द्वारकुट्टिमवन्ति च ॥ ११५ ॥
रत्नद्वाराणि राजन्ते परिचारकशोभिताम् ।
तद्बहिर्गारुडमणिक्लृप्तशालपरिस्फुरत् ॥ ११६ ॥

पद्म(पुष्प)रागशिलानद्धभूमिविद्योतिताम्बरम् ।
प्रवालपादपलतानवोद्यानमनुत्तमम् ॥ ११७ ॥
पिकपारावतव्रातजुष्टं षट्पदगीतिमत् ।
नानाकेलिस्थलीरम्यं स्थलपद्माभिसङ्कुलम् ॥ ११८ ॥
चमरीहरिणाक्रान्तं कुञ्जपुञ्जमणिगृहम् ।
तद्बहिर्मौक्तिकवनं वज्रभूमिविभूषितम् ॥ ११९ ॥
भूम्युप्तमौक्तिकश्रेणीशोभासम्भावितं शिवम् ।
मणिमण्डपसंशोभि कुट्टिमावलिभासुरम् ॥ १२० ॥
नृत्यन्नीलगलव्रातैर्मण्डितं तत्र तत्र हि ।
सरोभिर्विविधै रम्यैः सुवर्णाम्भोजशालिभिः ॥ १२१ ॥
गरुत्मणिसोपानैर्वज्रमाणिक्यभूषितैः ।
परितस्तटगैर्दिव्यैर्मण्डितैस्तोरणाङ्कितैः ॥ १२२ ॥
रत्नसिंहासनशतैर्मण्डितं विविधर्द्धिमत् ।
पद्मरागमणिस्फूर्जत्प्राकारप्रभयारुणम् ॥ १२३ ॥
सांध्यमेघारुणच्छायामिश्रं नभ इवोल्लसत् ।
तद्बहिर्भाति वैडूर्यकान्तारमतिशोभनम् ॥ १२४ ॥
उल्लसत्पवनान्दोलशाखारूढविहङ्गमम् ।
सूर्यकान्तोल्लसच्छालप्रभालिप्तं समन्ततः ॥ १२५ ॥
माणिक्यभूमिकाक्रान्तवैडूर्यलतिकाशतम् ।
तद्बहिर्भाति विविधामन्दामोदाभिमोदितम् ॥ १२६ ॥
हरिचन्दनमुद्यानमुद्यद्द्रोमेदशालकम् ।
स्फाटिकीभूमिविलसत्प्रभाजालोज्ज्वलीकृतम् ॥ १२७ ॥
यस्यामुद्यानमखिलं प्रतिबिम्बेन विस्फुरत् ।
तद्बहिः परमोद्यानं पारिजातमयं महत् ॥ १२८ ॥
राजते यत्र रुचिरा चन्द्रकान्तमयी स्थली ।
कोटिचन्द्रप्रभोद्भासिरत्नकुट्टिममालिनी ॥ १२९ ॥
इतस्ततश्चलच्चित्रपक्षिलक्षविराजिता ।

प्राकारेणोद्यतानेकमार्तण्डद्युतिशालिना ॥ १३० ॥
पद्मरागमयेनोच्चैरभितः परिवेष्टिता ।
तद्बहिर्भाति वै दिव्या मन्दारद्रुमवाटिका ॥ १३१ ॥
दिव्यप्रवालरत्नोद्यत्प्राकारपरिवेष्टिता ।
मन्दारमकरन्देषु विलीनमतयोऽलयः ॥ १३२ ॥
विस्मरन्त्यन्यपुष्पाणि यथा ब्रह्मरसप्लुताः ।
मन्दारामोदसौरभ्यलुब्धरोलम्बराजयः ॥ १३३ ॥
न क्वापि गन्तुमिच्छन्ति दानलुब्धा इवार्थिनः ।
तद्बहिर्भाति विपिनं मनोवाचामगोचरम् ॥ १३४ ॥
नवरत्नमयस्फूर्जत्कल्पद्रुमविभूषितम् ।
तच्छायाविष्टरासीनसखीसङ्गीतसुन्दरम् ॥ १३५ ॥
तच्छ्रुतिश्रवणानन्दानिश्चलीकृतषट्पदम् ।
वैदूर्यावृतिसंवीतमुन्मदत्पिकसारसम् ॥ १३६ ॥
रसाम्भोधि(धे)रिवोद्वेलः समन्ताद्दृष्टिगोचरः ।
उद्यन्मारकती भूमिः काशते यत्र निस्तुला ॥ १३७ ॥
माणिक्यमौक्तिकचिता दीर्घिकाभिरलङ्कृता ।
हीरस्तम्भावलीक्रीडद्धंसरावमनोहरा ॥ १३८ ॥
वैदूर्यव्रततिश्लिष्टमाणिक्यस्तम्भमण्डपैः ।
तद्धीरमौक्तिकमयस्तवकोत्करभूषितैः ॥ १३९ ॥
स्वर्णपक्षैः पक्षिगणैः समन्तात्कलकूजितैः ।
उपास्यमानैरुद्भाता मनोनयननन्दिनी ॥ १४० ॥
तद्बहिश्चम्पकोद्यानं तप्तहाटकदुर्गवत् ।
स्वर्णप्राकारसंवीता महाचम्पकवाटिका ॥ १४१ ॥
चाम्पेयकोरकगणैः कृतदीपमिवाम्बरे ।
क्लृप्तमारकतैर्दिव्यैर्विद्रुमैः क्लृप्तभूमिकैः ॥ १४२ ॥
चतुर्दशसहस्राणि योषितः परिचारिकाः ।
उद्यानपालिकाः सर्वाः किशोरवयसान्विताः ॥ १४३ ॥

कल्पद्रुममहोद्याने सहस्राणि त्रयोदश ।
द्वादशैव सहस्राणि मन्दारविपिनोत्तमे ॥ १४४ ॥
एकादशसहस्राणि पारिजातमये वने ।
सहस्राणि दश प्रोक्ता विपिने हारिचन्दने ॥ १४५ ॥
चन्द्रवनपालिभ्यः सहस्राणि नवेरिताः ।
अष्टावेव सहस्राणि तथा मुक्तावने स्थिताः ॥ १४६ ॥
सहस्रसप्तसंख्याताः पालिका वैद्रुमे वने ।
सूर्यकान्तवने दिव्ये षट्सहस्राणि योषितः ॥ १४७ ॥
पद्मरागमहोद्याने सहस्राणि च पञ्च वै ।
यावत्सहस्रसंख्याताः प्रोक्ता उद्यानपालिकाः ॥ १४८ ॥
तावल्लक्षाणि तासां वै सख्यस्तुल्याः स्वरूपतः ।
उद्यानपरितस्तासां दिव्यसौधानि योषिताम् ॥ १४९ ॥
प्रधानपालिकासौधवामदक्षिणयोरपि ।
तत्सखीनां च सौधानि त्रिभौमानि शुभन्ति च ॥१५०॥
रत्नस्तम्भसहस्राणि हीरसोपानवन्ति च ।
प्रत्येकं योजनायामान्युच्छ्राये योजनत्रयम् ॥ १५१ ॥
रत्नचिताजिराण्युच्चैः कसद्ध्वजपटानि च ।
मुक्तारत्नवितानानि मणिदीपोज्ज्वलानि च ॥ १५२ ॥
वातायनागतसौरभ्यवासितानि समन्ततः ।
आलम्बन्मणिदोलानि स्वर्णभित्त्युज्ज्वलानि च ॥ १५३ ॥
स्वर्णपञ्जरमध्यस्थपतत्रिनिनदन्ति च ।
मूलहर्म्याभिमुखतो राजते यमुनापगा ॥ १५४ ॥
तज्जलस्यावताराणां तटसीमनि विस्तृते ।
उद्यानराजयो भान्ति विविधाः सप्तसङ्ख्यया ॥ १५५ ॥
चान्द्रमसं नीलवनं पुष्पदन्तं ततः परम् ।
आनन्दं हेमकूटं च तारकूटं च गारुडम् ॥ १५६ ॥
चान्द्रमसे चान्द्रमसो वटोऽस्त्यम्बरलेखकः ।

नवरत्नस्फुरत्प्रोच्चैरालवालश्रियोल्लसन् ॥ १५७ ॥
प्रोल्लसत्पत्रनिर्भिन्ना लेपयन्काननान्तरम् ।
उल्लसत्पवनान्दोलच्छाखाक्रान्ताम्बराशितिः ॥ १५८ ॥
पतत्रिणां कलैः शब्दैः कर्णामृतमिवोद्वपन् ।
दिव्यपत्रौघविद्योतन्माणिक्यफलभूषणः ॥ १५९ ॥
शाखालम्बितसद्दोलासहस्रैः परितः स्फुरन् ।
नवरत्नस्फुरद्धैमजटाकोट्यञ्चितावनिः ॥ १६० ॥
पताकाभिरसङ्ख्याभिर्नानावर्णाभिरञ्चितः ।
हीरदण्डाभिरनिलानुगताभिः समन्ततः ॥ १६१ ॥
अनेकदिव्यन्यग्रोधैः समन्तात्परिवेष्टितः ।
फलपुष्पसहस्रामरञ्जितं येन चाम्बरम् ॥ १६२ ॥
मेघाच्छन्नं तडिज्ज्योत्स्नाप्रकाशितमिवेयते ।
यस्य दूरतरे भाति वेश्मान्युद्यानयोषिताम् ॥ १६३ ॥
चतुर्दशसहस्राणि मुक्तारत्नोज्ज्वलानि च ।
प्राकारेणाग्निवर्णेन हैमेन परिवेष्टितः ॥ १६४ ॥
चमत्करोतु मच्चेतश्चकोरस्येव चन्द्रमाः ।
वनं नीलाभिधं भाति जम्बुपादपसङ्कुलम् ॥ १६५ ॥
इन्द्रनीलमयप्रोद्यत्प्राकारपरिवेष्टितम् ।
उल्लसद्रत्नलतिकं पुष्पामोदाभिपूरितम् ॥ १६६ ॥
मदान्धमुग्धमधुपझङ्कारमुखरीकृतम् ।
मध्यकुट्टिममध्यस्थरत्नमण्डपमण्डितम् ॥ १६७ ॥
पीयूषपूरितमहादीर्घिकाभिरलङ्कृतम् ।
नीलोद्यानमहाशोभाकौमुदीव महोदधिम् ॥ १६८ ॥
उद्वेलयतु मच्चेतः स्मरणेनैव तद्गतम् ।
पुष्पदन्तं महोद्यानं मत्तपक्षिगणध्वनि ॥ १६९ ॥
उल्लसद्धीरपवनान्दोलितानेकवीरुधम् ।
मिश्रगन्धेन सरता समन्तादनुवासितम् ॥ १७० ॥

दाडिमीतरुराजेन फलपुष्पभरभृता ।
चन्द्रांशुनिर्मलतरविभ्राजत्कुट्टिमोद्यतम् ॥ १७१ ॥
योजनावधि विस्तीर्णशाखारूढविहङ्गमैः ।
श्वेतपीतारुणकृष्णचित्रपक्षिविराजितैः ॥ १७२ ॥
षडजादिस्वरभेदेन कूजद्भिः श्रोत्रहारिणा ।
पश्यन्तीनां च नेत्राणि निर्निमेषाणि कुर्वता ॥ १७३ ॥
शशिना शारदेनेव नभः समनुरञ्जितम् ।
अमलच्छायवैदूर्यमणिकल्पितशालकम् ॥ १७४ ॥
महानन्दवनं दिव्यमानन्दरसवर्षणम् ।
नवरत्नस्थलीरम्यमुद्यद्रत्नलताकुलम् ॥ १७५ ॥
मृद्वीकामण्डपशतं केतकीबकुलाकुलम् ।
चम्पकैः करवीरैश्च कुन्दकेसरपाटलैः ॥ १७६ ॥
अशोकैस्तिलकैश्चूतैः पारिजातैश्च जातिभिः ।
यूथिकामालतीभिश्च स्थलपद्मैर्विराजितम् ॥ १७७ ॥
नृत्यन्मयूरसाहस्रकलापैरिव चित्रितम् ।
लतास्तबकसञ्चारिषट्पदव्रातझंकृतम् ॥ १७८ ॥
यदग्रभागायोगच्छद्यमुनाजलवायुभिः ।
कम्पितानेकलतिकाकुसुमामोदमेदुरम् ॥ १७९ ॥
महाहीरकसंराजद्दुर्गमुद्रितमद्भुतम् ।
मनसो मन्दिरं मेऽस्तु वनमानन्दसुन्दरम् ॥ १८० ॥
हेमकूटमतः श्रीमद्धेमप्राकारमुद्रितम् ।
दिव्यतुमण्डितं शश्वाद्दव्यगन्धसुवासितम् ॥ १८१ ॥
दिव्यानन्दचमत्कारं मनोनयननन्दनम् ।
दिव्यामोदलताकीर्णं मध्यमण्डपमण्डितम् ॥ १८२ ॥
ताम्बूलीमण्डपैर्दिव्यैर्लवङ्गैलालताशतैः ।
दिव्यवज्रसमाबद्धमण्डलेषु बहुष्वपि ॥ १८३ ॥
केदारेषूद्गतैर्दिव्यनारिकेलीलतिकाव्रजः ।

लवलीभिरसङ्ख्याभिस्तत्र तत्र स्वलंकृतम् ॥ १८४ ॥
मदन्तःकरणक्षेत्रे परिस्फुरतु नित्यशः ।
तारप्राकारकलितं तारकूटं महाद्भुतम् ॥ १८५ ॥
निम्बूदुम्बरजम्बीरकार्णिकारैरलङ्कृतम् ।
हयारिबिल्वबकुलतमालावलिसुन्दरम् ॥ १८६ ॥
तगरागरुहिन्ताल श्रीपर्णीपनसाकुलम् ।
शशैः क्रोडश्च हरिणैर्गवयै रुरुभिर्मृगैः ॥ १८७ ॥
गजैः सिंहैर्वानरैश्च मर्कटैः सुरभीगणैः ।
अभुतपूर्वसापत्न्यैरन्योन्यमनुरागिभिः ॥ १८८ ॥
कृष्णसन्दर्शनोद्युक्तैः सत्त्वैः संसेवितं सदा ।
तथैव हंसचक्राह्वपारापतशुकादिभिः ॥ १८९ ॥
चकोरकोकिलचलच्चरणायुधहारिलैः ।
चटकैश्चित्रजातीयैश्चित्रपक्षाङ्घ्रिचञ्चुभिः ॥ १९० ॥
सदोत्पतनसंशीलैरुपासितलताशतैः ।
स्थितावप्यङ्घ्रिपक्षेषु मूर्ध्नि चाखलपक्षालिभिः ॥ १९१ ॥
उत्पातेनैकदेशेषु पातिभिर्दूरतः पृथक् ।
तारकूटमहोद्यानममन्दरसपूरितम् ॥ १९२ ॥
मदीयहृदये कूटं भिनत्तु स्मृतिमागतम् ।
वन्देहं गारुडोद्यानं मुक्ताप्राकारवेष्टितम् ॥ १९३ ॥
मध्यमण्डपविभ्राजन्माणिक्यद्वारतोरणम् ।
मण्डपप्रान्तदेशेषु रम्भास्तेनाति सुन्दरम् ॥ १९४ ॥
विभ्राजद्रत्नवसुधाप्रतिबिम्बितभूरुहम् ।
लताकुञ्जसहस्रैश्च मध्यमण्डपशालिभिः ॥ १९५ ॥
मुक्तास्तबकितैः पत्रफलभारनताननैः ।
विपक्षतालध्वनिभिः पौनःपुन्येन चोद्धतैः ॥ १९६ ॥
तदीयकलरावैश्च समन्तात्परिशोभितम् ।
यच्छोभावाङ्मनसयोः पन्थानं नावगाहते ॥ १९७ ॥

तद्देतद्वाहडोद्यानं विख्यात्म्यमान्यं प्रियो मम।
चतुर्दशसहस्राणि परिवारकयोजितम् ॥ १९८ ॥
स्वसौधानि दिव्यानि भ्राजन्ते प्रतिकाननम्।
त्रीणि त्रीणि शतान्येव सख्यस्तासां प्रकीर्तिताः ॥१९९॥
तत्सौधवेष्टितगृहा मूलस्त्रीपरिचारिकाः।
योजनानां च नवति सहस्राणि प्रमाणतः।
आयामतो विस्तरतः सप्तोद्यानानि बाडव ॥ २०० ॥
अयुताधिकमेकं तु महानन्दवनं च यत्।
पश्चात्पुरः पञ्च पञ्च सहस्राणि सुविस्तृतम् ॥ २०१ ॥
यदधो वर्त्मना याति सरितः सञ्चितं शिवम्।
यत्राप्रविश्य खेलान्ते स्वामिन्या प्रेयसा समम् ॥ २०२ ॥
यमुनायाः परे कूले पूर्णांखण्डः परः पुमान्[1]।
लक्ष्मी च परमा काचिच्छयाते निद्रिताविव ॥ २०३ ॥
ध्यानासक्ता तु या वृत्तिर्बुद्धेरिच्छाविमोहिता।
तया रासमयीं लीलामपश्यत्परमः पुमान् ॥ २०४ ॥
शबलायां पुनः पश्यन्स्वाभं ब्रह्माण्डमण्डलम्।
स्वाभासमात्रैः साङ्गानैर्जीवसंज्ञैरपूरयत् ॥ २०५ ॥
गुञ्जापुञ्जं वह्निधिया जलबुध्या मरीचिकाम्।
तथा स्पृशन्ति ताः सख्यो अपान्मायाविचित्रितम् ॥२०६॥
गुरुवाक्यार्थबोधाग्निः श्रवणानलदीपितः।
तूलराशिमिवात्यन्तं मायामोहं दहिष्यति ॥ २०७ ॥
तदा प्रपञ्चमुत्सृज्य महति त्रिगुणात्मके।
स्थास्यन्ति कृष्णवनिताः क्रमबुद्धाः सहस्रशः ॥ २०८ ॥
कृतकार्या[2] पीतमोहा तदैवेच्छा सुपङ्कजा।

१ परः पुमानत्रान्तरः 'पूर्णाखंडमयः पुमान्' इ. पा।
२ कृतकार्याः पीतमोहास्त्यक्तसर्वपरिग्रहाः।
निर्व्यापाराश्चिदाकाशे लयमेष्यंति वै यदा॥ इत्यपि पाठः।

निष्पारा चिदाकाशे लयमेष्यति वै यदा ॥ २०९ ॥
स्वस्वरूपस्थितो ब्रह्म भविष्यत्यक्षरस्तदा ।
ब्रह्माण्डविलयस्तात भविष्यति परो महान् ॥ २१० ॥
निजधाम्नि तदा सर्वाः सख्यश्चित्रवदास्थिताः ।
प्रबुद्धाश्चर्यसम्मग्ना भविष्यन्ति निजान्तरे ॥ २११ ॥
हास्यपूर्वं प्रियाः प्रष्टाः प्रियेणादरतः पृथक् ।
स्वस्वानुभवमाचख्युर्ब्रजरासादिगोचरम् ॥ २१२ ॥
अन्योन्यं हस्ततालीश्च ददन्त्यः स्मितभाषणाः ।
हास्यलीलां करिष्यन्ति प्रियेण सह सुव्रताः ॥ २१३ ॥
इत्येतत्ते मया ख्यातं निजधामनिवेशनम् ।
उद्देशमात्रतः सम्यक् न वक्तुं शक्यते मुखैः ॥ २१४ ॥
अतः परं न वै किञ्चिच्छ्रोतव्यमिह विद्यते ।
तथापि संशयवशात्प्रष्टव्यं तदुदीर्यताम् ॥ २१५ ॥
॥ इति श्रीपुराणसंहितायां सिद्धान्तसारे निजधामवर्णनं नाम द्वात्रिंशोऽध्यायः ॥ ३२ ॥
आदितः श्लोकानां समष्टयङ्काः ॥ २८९५ ॥

---

## ॥ त्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥

॥ व्यास उवाच ॥

भगवन्भूतभव्येश भूतनाथ जगत्पते ।
संसारदवदग्धानां कृपापीयूषवर्षण ॥ १ ॥
त्वयैतद्दर्शितं नाथ पदं वाङ्मनसोरपि ।
वृत्तयो न स्पृशन्त्यव केवलानुभवात्मकम् ॥ २ ॥
वेदैरनुध्यानवशादवाप्यानुग्रहं ततः ।
माधुर्यानुभवात्किञ्चिदनुमानेन वर्णितम् ॥ ३ ॥
ब्रह्मादयोऽपि जानन्ति त्वत्प्रसादेन तत्पदम् ।
त्वमेवाद्यो गुरुः सर्वविद्यानामीश्वरो महान् ॥ ४ ॥

अक्षरं ब्रह्म परमं स्वमायोपाधियोगतः ।
भूत्वा नारायण इति मायासृष्टाण्डमध्य(रूप)गम् ॥ ५ ॥
लेभे विराडिति ख्यातिं तस्मात्स्वप्नमयो विराट् ।
तस्मिन्ब्रह्मा च विष्णुश्च भवानिन्द्रादयः सुराः ॥ ६ ॥
मनुष्योरगगन्धर्वसिद्धविद्याधरादयः ।
पितृभूतप्रजेशाद्याः खगाः स्थलजलौकसः ॥ ७ ॥
स्वाप्निका एव वि(ख्याता)ज्ञेया न जानन्ति स्वसम्भवम् ।
अज्ञानेनावृताः सर्वे चिदाभासस्वरूपिणः ॥ ८ ॥
अर्वाचीनज्ञानमात्रानिष्ठाः सर्वे(सुरा)श्वरा अपि ।
तादृक्साधनसम्पन्नास्तथैवोपदिशन्ति च ॥ ९ ॥
त्वं तु देवेश्वर तथाविधोऽपि न तथाविधः ।
स्वात्ममूलं विजानासि तदतीतमपि ध्रुवम् ॥ १० ॥
ध्यानयोगरतो नित्यं न व्युत्थानदशा तव ।
नित्यावगाहिहृदयस्तल्लीलारसवारिधौ ॥ ११ ॥
त्वत्प्रसादकण(लव)स्पर्शाद्ब्रह्मविष्ण्वादयः सुराः ।
ज्ञात्वा तत्पदमाहात्म्यं गोपयन्ति विशेषतः ॥ १२ ॥
त्वं तु देवेश लोकेषु मायाजालावृतेषु च ।
कृपामुद्राव्य महतीं तत्त्वमार्गोपदेशकृत् ॥ १३ ॥
तस्मादहं ते पृच्छामि निर्विशङ्केन चेतसा ।
संशयाम्भोधिनिर्मग्नं खिद्यते हृदयं मम ॥ १४ ॥
यदुक्तं भवता नाथ मायातीतं परं पदम् ।
अक्षरं परमं ब्रह्म सर्वव्यापि निरञ्जनम् ॥ १५ ॥
वेदविश्रुतपन्थानः समाप्यन्ते च यत्र वै ।
साक्षात्परम्परामार्गैर्यत्कृच्छ्रेणाधिगम्यते ॥ १६ ॥
यल्लाभान्न परो लाभ इति शास्त्रेण गीयते ।
यत्र द्वैतं वृथा भाति मरुस्थल्यामिवोदकम् ॥ १७ ॥
यज्ज्ञात्वा न पुनर्ज्ञेयं ध्यातव्यं प्राप्यमेव च ।

श्रोतव्यं भजनीयं वा नावशिष्येत किञ्चन ॥ १८ ॥
कर्मिष्ठानां च भक्तानां ज्ञानिनां योगिनामपि ।
एकमेव परं प्राप्यमम्भसामम्बुधिर्यथा ॥ १९ ॥
तस्मादतीतं दुर्ज्ञेयं वाङ्मनोदूरगं शिवम् ।
परं ब्रह्म परं धाम पुरुषोत्तमसंज्ञितम् ॥ २० ॥
कालकर्मस्वभावाश्च मायाविद्यादयोऽपरे ।
प्रभवन्ति न वै यत्र नित्यलीलाविहारि यत् ॥ २१ ॥
तस्य वैकुण्ठवल्लोको वर्णितोऽत्र महेश्वर ।
नदीगिरिवनप्राया रत्नादिसुषमोज्वलः ॥ २२ ॥
एकादश महोद्यानवेष्टितं मूलमन्दिरम् ।
दशभूम्यात्मकं श्रीमल्लीलाधिष्ठानमद्भुतम् ॥ २३ ॥
मायाप्रपञ्चवद्भाति सर्वमेतन्निरूपितम् ।
न चैवं शक्यत वक्तुं (ज्ञातुं) परब्रह्मनिरूपणम् ॥ २४ ॥
निरूपितं तु भवता सर्वज्ञेन महात्मना ।
तस्मान्मे बुद्धिसम्मोहं त्वमपाकुरु शङ्कर ॥ २५ ॥
॥ शिव उवाच ॥
साधु पृष्टं त्वया व्यास कृष्णश्रीप्रेमसाधनम् ।
तदहं ते प्रवक्ष्यामि शृणु संयतचेतसा ॥ २६ ॥
नदीगिरिवनप्रायं लोकवद्धाम केवलम् ।
प्रतीयते तथापि त्वं यथा जानासि न मुने ॥ २७ ॥
आनन्दः परमं ब्रह्म स एव हि रसः स्मृतः ।
निषेधयन्ति वै तत्र नानात्वं श्रुतयः किल ॥ २८ ॥
नैकाकी रमते यस्माल्लीलाधिष्ठानसिद्धये ।
अनादिसिद्ध एवायं धामरूपेण वै रसः ॥ २९ ॥
मधुदन्वन्वनोद्यानरूपेणेव विजृम्भितः ।
वापीसरःसरिन्नाथसरित्पल्वलदीर्घिकाः ॥ ३० ॥
लता निर्यासप्रस्रवणफलपुष्पमधूनि च ।

सर्वमित्यादिकं साक्षाद्द्रवीभूतो रसः स्थि(स्मृ)तः ॥ ३१ ॥
प्राधान्यं तत्र विज्ञेयं रक्तपीयूषवारिधौ।
तस्यानुरागरूपत्वाद्रक्तत्वमनुवर्णितम् ॥ ३२ ॥
ये ये भावाः प्रजायन्ते रसे नानाविधाः पृथक्।
मुक्ताशुक्ति महारत्नशङ्खविद्रुमतां गताः ॥ ३३ ॥
निर्वेदश्च तथा दैन्यं शङ्का त्रासो ह्यपस्मृतिः।
मोहावेगौ तथा व्याधिरालस्यं जाड्यमेव च ॥ ३४ ॥
औग्र्यामर्षौ तथासूया तथा निद्रादयोऽपरे।
ते मत्स्यकच्छपक्रूरसत्त्वरूपतया स्थिताः ॥ ३५ ॥
चतुर्विधापि या मुक्तिः सा शुक्तिपरिणामिनी।
स्वान्तःस्थितमहामुक्ताव्याजेनाशु विमुञ्चती ॥ ३६ ॥
रसस्य स्थायीभावात्मा मणिद्वीपो महोज्ज्वलः।
अनुभावविभावाद्यास्तत्रासन्मणिरूपतः ॥ ३७ ॥
आविर्भवन्ति स्वाभाव्यादृत्यामेव दशा दश।
अमङ्गलत्वाच्चरमा तत्र वक्तुं न शक्यते ॥ ३८ ॥
नवखण्डतया तस्मादवस्था नव सङ्गताः।
रत्युद्व(वे)वोऽन्यत्र रागः सर्वत्रापि गतो भवेत् ॥ ३९ ॥
र(सो)से विशेषतो भाति खण्डे वैराग्यनामनि।
गतरागतयान्यत्र विशिष्टत्वाद्रसे पुनः ॥ ४० ॥
आविर्भवति सन्तोषः स्वानन्दामृतवर्षणः।
रत्यंशः कोपि सन्तोषः प्रोक्तो द्वीपैकदेशगः ॥ ४१ ॥
सन्तोषे जायमाने तु प्रकाश उपजायते।
तदा लीलास्थिता भावा ये ये सन्ति सहस्रशः ॥ ४२ ॥
लीलासम्बन्धिनः सर्वे स्वयमाविर्भवन्ति ते।
सन्तोषश्च प्रकाशश्च तस्मात्सव्यापसव्ययोः ॥ ४३ ॥
लीलास्थितानां भावानां प्रकाशे सति वै द्विज।

---

१ रक्त पीयूषवारिधौ इ. पाठः 'रसत्वमनुवर्णित' ३२।

आविर्भवति वै प्रेम रसानन्दमयं च यत् ॥ ४४ ॥
तत्प्रेमप्रचुरा भूमिर्वर्णिता द्वीपदेशगा।
प्रेमोल्लासे भवेद्यद्यज्ज्ञानं तद्विषयं हि तत् ॥ ४५ ॥
न त्वन्यविषयं किञ्चित्तज्ज्ञानप्रचुरा क्षितिः।
वर्णिता द्वीपदेशस्था रसान्तःपातिनी द्विज ॥
चिदानन्दमयी तस्माद्वैराग्यरतिमध्यगा ॥ ४६ ॥
श्रुतिराह रसं लब्ध्वानन्दी भवति तत्तथा।
विभावैरनुभावैश्च व्यभिचारादिभिः पृथक् ॥ ४७ ॥
रसभुक्तिस्तथा भूयात्पुष्टो भवति वै यदा।
प्रेमज्ञानान्तरचरी भुक्तिभूमिर्व्यवस्थिता ॥ ४८ ॥
न यद्यपि विभेदोऽस्ति प्रेमरत्योरिहाण्वपि।
पूर्णापूर्णविभेदेन पृथक्त्वेन निरूपितम् ॥ ४९ ॥
उदिष्यमानसूर्यस्य प्रथमांशुच्छटा यथा।
दृश्यते गगने साक्षादतिसूक्ष्मा प्रकाशिनी ॥ ५० ॥
तथा प्रेमसहस्रांशोः प्रथमांशः स्फुटो रतिः।
रतिर्यावन्न जायेत तावत्प्रेमकथा कुतः ॥ ५१ ॥
लहर्योम्बुनिधौ यद्वद्विचित्राः प्रभवन्ति हि।
रत्यामेव तथा भावाः प्रभवन्तीह सर्वतः ॥ ५२ ॥
अतः प्रेमाङ्कुरमयी रतिः सा रसरूपिणी।
सापि द्वीपैकदेशस्था तन्मयी कथिता मही ॥
केवलानन्दभूमिस्तु निजधामेति कीर्तिता ॥ ५३ ॥
यद्यप्येको रसः सम्यक् सामग्रीभेदतो मुने।
प्रतीयते दशविधः केवलानन्दरूपवान् ॥ ५४ ॥
शृङ्गारश्च तथा हासः करुणो रौद्र एव च।
भयानकस्तथा वीरो विभत्सोद्भुत एव च ॥ ५५ ॥
शान्तो भक्तिरिति ख्याता रसा दश मुनीश्वर।
घनीभूतरसाकारं मूलमन्दिरमद्भुतम् ॥ ५६ ॥

तस्यैते भूमिकाव्याजमापद्यन्ते रसाः पृथक् ।
आदौ प्रेम ततः साक्षादासक्तिर्व्यसनं ततः ॥ ५७ ॥
रसज्ञानां त्रिकमिदं जायते क्रमयोगतः ।
तदेव भाति पुरतो मन्दिरस्य महौजसः ॥ ५८ ॥
कुट्टिमस्थमहारत्नमण्डपव्याजमादधत् ।
रसाक्रमितचित्तं यत्तत्सत्त्वमाभिधीयते ॥ ५९ ॥
तत्रोद्भवन्ति ये भावास्ते ह्यष्टौ सात्विका मताः ।
अष्टभावात्मकः साक्षान्माणिक्याद्रिः पुरा स्मृतः ॥ ६० ॥
उद्यन्मुक्ताफलव्याजादश्रुधारामिवोत्सृजन् ।
पीयूषनिर्झरव्याजात्स्वेदवानिव लक्ष्यते ॥ ६१ ॥
पतत्रिस्वरभेदैश्च स्वरभङ्ग उदाहृतः ।
प्रभावाश्च चाञ्चल्येन कम्पमान इवेयते ॥ ६२ ॥
नीलाद्रिच्छुरितः क्वापि वैवर्ण्यमिव सङ्गतः ।
उद्यत्स्वर्णाङ्कुरः क्वापि पुलकाङ्क इवेर्यते ॥ ६३ ॥
स्थिरत्वाज्जडता व्यक्तिर्दृश्यतेऽत्र समाधिवत् ।
यदा कदाचिज्जायेत बाह्यलीलानिरोधकृत् ॥ ६४ ॥
स्वामिन्याः स्वप्रिये मानः स नीलाद्रितया स्थितः ।
त्रीण्यस्य शिखराण्युच्चैरवस्था एव सङ्गताः ॥ ६५ ॥
मन्दा मध्या तथा तीव्रा विज्ञेया रसवेदिभिः ।
पूर्वानुरागरूपी तु पुष्पाद्रिप्रवरः स्थितः ॥ ६६ ॥
अस्यापि शिखराण्युच्चैस्त्रीण्येवाभिव्रजन्ति च ।
तेन तीव्रस्तीव्रतरस्तथा तीव्रतमो हि सः ॥ ६७ ॥
पूर्वानुरागरूपेऽस्मिन्स्वामिनी कृष्ण एव च ।
सामरस्यमयौ भूत्वा भूत्वा द्रवरसात्मकौ ॥ ६८ ॥
रागाम्भोधौ निपतितावगाधे पारवर्जिते ।
यमुना गीयते सा हि स्वामिनीकृष्णरूपिणी ॥ ६९ ॥
द्रवीभूतरसानन्दरूपिणी नवखण्डगा ॥

नवखण्डप्रवेशेन यमुनाख्या मुनीश्वर ॥ ७० ॥
नवावस्थास्वपि रसः प्रोच्यते केवलो हि सः ।
नीलपीतादिभेदस्तु तज्जले वर्णितः पुरा ॥ ७१ ॥
भूतेऽसौ विरहावस्थास्तत्तद्वर्णाङ्कितास्तथा ।
जलावताराः सप्तैते मनोवृत्तिप्रवाहवत् ॥ ७२ ॥
सम्बन्धालोकिनी चैव वाचिका रागिणी तु च ।
अतिरागा विरागा च वृत्तयो मनसः स्मृता ॥ ७३ ॥
प्रविशन्ति महानन्दरसमात्यन्तिकं मुने ।
उद्दीपनविभावाद्याः सप्तोद्यानानि वाडव ॥ ७४ ॥
प्रेमा· ·नीतानि प्रेमद्वाराणि संततं ।
उद्दीपनविभावाद्यैरुद्दीप्ताश्चित्तवृत्तयः ॥ ७५ ॥
प्रेमद्वारेण सततं प्रविशन्ति महारसम् ।
रथा मनोरथमयाश्चित्तोन्मेषाश्च पक्षिणः ॥ ७६ ॥
विरहे चित्तविक्षेपरूपास्ते शिबिकागणाः ।
विप्रलम्भभवस्तापः कीर्तितः सोऽत्र भानुमान् ॥ ७७ ॥
संयोगसुखरूपस्तु प्रोक्तः पीयूषदीधितिः ।
संयोगसुखवैचित्र्यं दृष्टस्तारागणो महान् ॥ ७८ ॥
सङ्कल्पाश्च विकल्पाश्च दोलारूपात्मना स्थिताः ।
एवमन्यच्च यत्किञ्चिद्दृश्यते तद्रसात्मकम् ॥ ७९ ॥
एवं ते परमं प्रोक्तं धामानन्दरसात्मकम् ॥ ८० ॥
आनन्दमयमेवं हि ज्ञात्वा धाम महाद्भुतम् ।
कदापि न पतन्त्येव वासनाः संशयाम्बुधौ ॥ ८१ ॥
न लोकवद्वेहि त्वं मनसा प्राकृतेन च ।

---

१ "८२" श्लोकानन्तरमिमेपि दशश्लोकाः क्वचित्काः ज्ञेयाः—
आनन्दभूमिर्विज्ञेया प्रियरूपा तया ततः ।
प्रकाशाख्या भवेद्भूमिर्नानालीलाप्रकाशतः ॥ १ ॥
नानालीलाप्रकाशे तु प्रेमभूमिः प्रवर्तते ।

अलौकिकेन सम्पश्य चक्षुषा ज्ञानरूपिणा ॥ ८२ ॥
ये लोकास्तमपश्यन्ति निजं धाम परात्परम् ।
न ते सिध्यन्ति विप्रेन्द्र यथार्थावगमादृते ॥ ८३ ॥
अवतीर्णाः क्षितितले वासनाः कृष्णयोषिताम् ।
ताभिः शश्वदिदं ध्येयं विशुद्धहृदयाम्बुजे ॥ ८४ ॥
प्राणनाथवियोगेन कथं तिष्ठन्ति तत्प्रियाः ।
अतः प्रतिकृतिं तस्य हैमीं शैलीं च राजतीम् ॥ ८५ ॥
मृन्मयीं दारवीं चापि वस्त्रपूजां मनोहराम् ।
चैत्रीं वापाद्य संस्थाप्य रम्यसिंहासनोपरि ॥ ८६ ॥
मन्दिरं कारयेद्रम्यं दर्पणोदरवच्छुभम् ।
पञ्चवर्णवितानाढ्यं दिव्यगन्धाधिवासितम् ॥ ८७ ॥
विचित्रचित्ररचनं धूपामोदसुगन्धितम् ।
घण्टानिनादबहुलं सुरम्यपटमण्डितम् ॥ ८८ ॥
निजधाममहाशोभां विलिखेत्तत्र भित्तिषु ।

---

प्रेम्णा तु लीलाविषयेऽभिनिवेशस्तदात्मिका ॥ २ ॥
ज्ञानभूमिः स्मृता यस्यां लीलैकविषया मतिः ।
सारांशः प्रेमभूमेस्तु रतिभूमिर्निगद्यते ॥ ३ ॥
रतिभूमेस्तु सारांशो भूमिः सन्तोषरूपिणी ।
लीलाप्रकाशभूमेस्तु सारांशो ज्ञानभूर्भवेत् ॥ ४ ॥
लीलास्वभिनिवेशः स्यान्नूनं लीलाप्रकाशतः ।
लीलास्वभिनिवेशस्य सारांशः प्रेमभूर्भवेत् ॥ ५ ॥
आनन्दः प्रियरूपोऽस्य प्रियता पुष्टिरुच्यते ।
पुष्टिः सन्तोषभूम्यन्ता प्रियता सा प्रियस्य हि ॥ ६ ॥
सन्तोषान्ताः प्रकाशाद्याः भूमयः सुखपुष्टयः ।
सुखपुष्टेरनुभवो भुक्तिभूमिरुदीर्यते ॥ ७ ॥
तस्मात्प्रियस्य प्रियतानुभवाद्भुक्ति संज्ञको ।
सुखभोक्तुर्भवेद्भूमिर्यस्य सोऽनुभवी स्मृतः ॥ ८ ॥
रत्यामेकत्र रागः स्यात्तदन्येऽर्थे विरागता ।
वैराग्यभूमिसहजा रतेरन्यत्र वस्तुनि ॥ ९ ॥
अत्र दशमः श्लोको न मिलितः ।

दशभूम्यात्मकं दिव्यं मन्दिरं मध्यतो लिखेत् ॥ ८९ ॥
एकादशमहोद्यानशोभां च परितो लिखेत् ।
गिरित्रयं ततो नीलपुष्पमाणिक्यसम्भवम् ॥ ९० ॥
रत्नद्वीपं लिखेद्दिव्यं यमुनां च महानदीम् ।
महासरोवरं दिव्य लिखेत्स्वर्णाम्बुजाकुलम् ॥ ९१ ॥
सप्तोद्यानानि विलिखेद्यमुनातटभूमिनि ।
स्थानान्येतानि विलिखेन्मन्दिरोज्ज्वलभित्तिषु ॥ ९२ ॥
तत्र संपूजयेत्कृष्णं काले काले यथोचितम् ।
कृष्णपूजनमासाद्य शुचिस्तद्गतमानसः ॥ ९३ ॥
नात्युच्छ्रितं नातिनीचं चतुरस्रं सुशोभनम् ।
नानाविचित्रवर्णाढ्यमासनं समुपाविशेत्
तत्र सम्यक्समासीनो जपेन्मन्त्रमुदारधीः ॥ ९४ ॥
श्रीकृष्ण परमानन्द पुरुषोत्तम सत्पते ।
मायान्धकारमार्तण्ड मा(म)मुद्धर भवार्णवात् ॥ ९५ ॥
यथाशक्ति जपित्वैन ध्यायेल्लीलामनन्यधीः ।
वैराजीं[3] धारणां कुर्वन्नारायणपदं विशेत् ॥ ९६ ॥
अक्षरान्तं ततो गत्वा लीलां गोलोकसंज्ञिताम्[1] ।
ध्यात्वा क्षणं ततः शुद्धां[2] ध्यायेल्लीलां च निर्गुणाम् ॥९७॥
मूलभूमिस्थितं कृष्णं रत्नसिंहासनाश्रितम् ।
प्रियासमाजमध्यस्थं भ्रामयन्तं कराम्बुजम् ॥ ९८ ॥
प्रार्थयेत्तत्र तं गत्वा प्रणिपत्य कृताञ्जलिः ।
पूर्णो मनोरथोनाथ दृष्टा लीला महाद्भुता ॥ ९९ ॥
विस्मारयति सा सत्यमात्मानं स्वां निकेतनम् ।
नानुभूतं व्रजस्वप्ने दुःखं यत्र सह स्थि(तं)ताः ॥१००॥
रासस्वप्नेपि नात्यन्तं त्वयाभिरमिता यतः ।

१ 'गोलोकसञ्ज्ञकाम्' इ पा. । २ शुद्धा लीला अक्षरादतीता निजधामस्था । ३ वैराजोधारणाचित्रपटस्तु श्रीकृष्णप्रियाचार्यान्तिके द्रष्टव्यः ।

कालमायामयस्वप्ने तृतीये भवदुज्झिते ॥ १०१ ॥
अत्यन्तं दुःखसंविग्नाः स्वरूपस्मृतिविच्युताः ।
पराभिध्याननिर्मग्ना मोहावेशेन केनचित् ॥ १०२ ॥
संसारसागरो दृष्टो यथासौ वर्णितस्त्वया ।
जघास ज्ञानमात्मीयमहङ्कारतिमिङ्गिलः ॥ १०३ ॥
भवद्वैमुख्यमात्रेण मायातिप्रबलाऽसती ।
पुत्रवित्तकलत्रादिरूपेणालोभयन्मुधा ॥ १०४ ॥
तदथ दैन्यभावेन मुधा भ्रान्तमनेकधा ।
अतोऽनुग्रहमाधत्स्व खिन्नाया मयि हृत्पते ॥ १०५ ॥
इत्युक्त्वा प्राणनाथस्य पदयोः पतनं स्मरेत् ।
तेनाप्याश्वासितं ध्यायेत्स्वात्मानं मधुरोक्तिभिः ॥ १०६ ॥
प्रियेण सङ्गता पश्येल्लीलास्थानानि वै क्रमात् ।
एवं ध्यायेदहरहर्मनो यावदचञ्चलम् ॥ १०७ ॥
व्युत्थाय च ततः सम्यक् समाधेरिव योगिराट् ।
तद्भावनानन्दचमत्कृतिस्तिष्ठेत्क्षणं तदा ॥ १०८ ॥
ततः प्रेमकथां कुर्यात्प्रेममार्गानुसारि(र्णि)भिः ।
स्वरूपकीर्तनं नृत्यं परस्परविचारणाम् ॥ १०९ ॥
अद्वैतं भावयेन्नित्यं नास्ति द्वैतं भ्रमात्मकम् ।
नाचरेत्कस्यचिद्द्रोहं देहदृष्ट्या कथञ्चन ॥ ११० ॥
नाध्यासयेत्स्वमात्मानं नित्यं नैमित्तिकं चरन् ।
न लोपयेच्च कर्माणि नित्यनैमित्तिकान्यपि ॥ १११ ॥
विप्रयोगदशायां तु तीव्रायां मुनिसत्तम ।
बाल्यचेष्टा कृतास्तिष्ठेद्विशिष्टज्ञानयौवने ॥ ११२ ॥
शुचिरन्तर्बहिस्तिष्ठेत्त्यजेत्सङ्गं मलीमसैः ।
स्वत एव भविष्यन्ति तानि शान्तान्यसंशयम् ॥ ११३ ॥
कथं तिष्ठति नीहार उदिते रविमण्डले ।
कामं क्रोधं तथा लोभं रजसस्तमसश्च यत् ॥ ११४ ॥

सत्त्वेन घातयं स्तेषां वशं गच्छेन्न कर्हिचित् ।
नासाधूनवमन्येत साधुवृत्तान्युपाददेत् ॥ ११५ ॥
पुत्रवित्तकलत्रादिष्वात्माध्यासं परित्यजेत् ।
आत्मानं स्वप्नसम्बद्धं मायया नियतं स्मरेत् ॥ ११६ ॥
देहादिष्वात्मभावं च देहाध्यासं तथात्मनि ।
स्वस्वरूपस्मृतिबलात्तन्मूलं भ्रममुत्सृजेत् ॥ ११७ ॥
अहं कृष्णप्रियास्मीति वियुक्ताज्ञानसङ्कटे ।
पतिता परमानन्दः कदा मा(चा)ङ्गीकरिष्यति ॥ ११८ ॥
इत्येवं भावयेन्नित्यं प्रियाभावं विभावयेत् ।
विप्रलम्भदलं सम्यगनुभूतं यथा भवेत् ॥ ११९ ॥
विप्रलम्भानुभवमृते संयोगः सर्वथा न हि ।
नात्यन्तिकक्षयेऽपि स्याद्यतोऽसौ वासना नहि ॥१२०॥
प्रियविश्लिष्टमात्मानं ज्ञात्वा स्वास्थ्यं कुतोऽन्यथा ।
सञ्चरन्ति च ये भावा वियोगे तान्वदामि ते ॥१२१॥
निर्वेदश्च विषादश्च दैन्यं ग्लानिः स्मृतिस्तथा ।
व्याधिरुन्मादमोहौ च बोधौत्सुक्ये ततः परम् ॥ १२२ ॥
हर्षावेगौ प्रजायेते चिन्ता च विरहोदये ।
स्वात्मावमाननं भूरि निर्वेदः परिचक्षते ॥ १२३ ॥
किं देहगेहैर्वित्तैश्च किं राज्यसुखसम्पदा ।
किं पुण्यधर्मनिचयैस्तपोविद्याकुलादिभिः ॥ १२४ ॥
आनन्दपदमुत्सृज्य प्राणनाथस्य सन्निधिम् ।
चरामि मायाविपिने कालोरगभयाकुले ॥ १२५ ॥
चिन्तारत्नं करात्क्षिप्त्वा काचखण्डे कृतादराम् ।
धिङ्मामनर्थनिरतां प्रेमहीनां सुदुर्भगाम् ॥ १२६ ॥
एवमादीनि वचनान्युत्पद्यन्ते निजान्तरे ।
अत्रानुभावा जायन्ते तान्निबोध द्विजोत्तम ॥ १२७ ॥
चिन्तावैवर्ण्यदैन्याश्रुनिश्वासाधरशोषणम् ।

इष्टप्राप्त्याद्यभावेनानुतापस्तु विषादता ॥ १२८ ॥
अहो त्यक्तं दूरं परमरमणीयं निजपदम्
गता क्रीडा क्वापि प्रकटयमुनानीरपुलिने ।
महापद्मारण्ये बहुलसुखदामोदमधुरे
रजःपुञ्जाटोपप्रकटितवितानेपि नितराम् ॥ १२९ ॥
गिरौ नीले रम्ये मुकुलितमहोद्यानरुचिरे
भुवं विष्वङ्नीलद्युतिततिविलिप्तां कृतवति ।
प्रियेणोच्चैर्गानं विविधरमणं नर्ममधुरम्
सुखं यद्यत्सर्वं सपदि विगतं हा विधिवशात् ॥ १३० ॥
महामाणिक्याद्रौ रतिरसवशेनोच्चशिखरे
सरस्तीरे विद्युत्तरलमणिकोटीन्दुरुचिरे ।
कृता लीला या या प्रियपरिसरे सापि सकला
गता दूरं चित्तादपि किमपरं दुःखदमतः ॥ १३१ ॥
अत्रानुभावा जायन्ते चित्तानुभववेदकाः ।
प्राप्त्युपायानुसन्धानं सहायान्वेषणं तथा ॥ १३२ ॥
चिन्ता च रोदनं श्वाससंहतिर्मुखशोषणम् ।
नानाविधं विलपनं वैवर्ण्यमिति ते स्मृताः ॥ १३३ ॥
प्रियाप्त्यभावदुःखेनानौजस्यं दैन्यमुच्यते ।
मायामहान्धकूपेहं पतिता साधनोज्झिता ॥ १३४ ॥
लोभपिशा(चमनुगा)चानुगता तृड्भुजङ्गीविषाकुला ।
निरस्तज्ञाननयना हा हता हा हता हता ॥ १३५ ॥
एवमादि वचो ब्रूते वासना दैन्यविप्लुता ।
अत्रानुभावा हृन्मान्द्यं हृदि चिन्तातिदुस्तरा ॥ १३६ ॥
अङ्गे मालिन्यजडता वचश्चाटुतरं तथा ।
प्राणेश्वरवियोगोत्थज्वरादिर्व्याधिरुच्यते ॥ १३७ ॥
गतिपातिरतिभावाः प्रेयसो मूर्तिमग्नाः
शिथिलिततनुयष्टिर्नेत्रमुन्मेषहीनम् ।

ज्वलदनलसमानश्वासधाराभिपातो
वपुरतिपरितप्तं शून्यमन्तर्मनोऽपि ॥ १३८ ॥
व्याधिर्दैन्यादयोऽप्यन्ये चानुभावा भवन्ति हि ।
वियोगोत्थमाणपीडाविभावो ग्लानिरुच्यते ॥१३९॥
कम्पतेऽङ्गलतिका बलक्षयाद् दृष्टिरुद्भ्रमति मज्जते मुहुः ।
अङ्गसंहतिरथापि कार्श्ययुक् जाड्यमावहति वर्णविप्लवम् १४०
पूर्वानुभूतलीलायाः स्मरणं स्मृतिरुच्यते ।
भ्रूविक्षेपः शिरःकम्पो जायते निश्चला च दृक् ॥१४१॥
अखण्डमणिभासुरे विविधरत्नभिच्यञ्चिते
सुवर्णमणिमण्डपत्रयपुरःसरे भास्वरे ।
स्फुरन्मिहिरकान्तिभृन्मणिविचित्र[1]भूमितले
लसद्द्रुतुलदीर्घिकाम्बुजमरालरावाकुले ॥ १४२ ॥
हिरण्यरशनावलम्बितसहस्रदोलाकुले
विचित्रमणिकुट्टिमे स्वगरुधूपधूमायिते ।
स्फुरद्विशदमौक्तिकामलवितानशोभाभरे
भ्रमद्भ्रमरमण्डितद्रुमवनीसमावेष्टिते ॥ १४३ ॥
मदाकुलविलासिनीविविधनृत्यगीतस्खल-
त्पदोन्मुखरनूपुरध्वनितभूमिकामण्डले ।
सखीगणगृहैः शुभैः समभिवेष्टिते सर्वतः
स्मरामि पुरुषोत्तमं कमललोचनं मे पतिम् ॥ १४४ ॥
स्मरामि यमुनाजले प्रचलदूर्मिमालाकुले
तटोल्लसितकुट्टिमे समधिरुह्य नावं दृढाम् ।
सुवर्णमणिमौक्तिकैरलघुधामभिर्भूषितां
चलध्वजपटामभिस्फुरितपुत्रिकालंकृताम् ॥ १४५ ॥
सखीगणसमावृते सदसि चेन्दिरासुन्दरी-
सभाजितनिजप्रियापरिसरे सहासोक्तिभिः ।

---

१ मणिविचित्रिते भूतले इत्यपि पाठो भवेत् ।

क्षणक्षणनवीनसुन्दरविलासलीलासुखं
प्रियेण समधिष्ठितं प्रकटवीणयाविष्कृतम् ॥ १४६ ॥
चित्तभ्रमो विरहज उन्माद इति कथ्यते ।
अनुभावास्त्वट्टहासगीतनृत्यप्रलापनम् ॥ १४७ ॥
विपरीतक्रियाक्रोशधावनं व्यर्थचेष्टितम् ।
प्रियविश्लेषतो जातं हृन्मौढ्यं मोह उच्यते ॥ १४८ ॥
स्यात्तत्र भूमिपतनं निश्चेष्टानीन्द्रियाणि च ।
मोहध्वंसे स्वरूपाप्तिर्बोध इत्युच्यते मुने ॥ १४९ ॥
देहस्याननुसन्धानं सर्वसंक्लेशसङ्क्षयः ।
स्वप्नं दृष्ट्वा प्रबुद्धस्य स्वरूपस्थितिवत्तथा ॥ १५० ॥
यावत्कालं भवेद्बोधस्तावत्पश्यति वै पुरः ।
साक्षात्पुरुषमव्यक्तमानन्दं पुरुषोत्तमम् ॥ १५१ ॥
स्फुरन्ति लीलाः सकला निजे धाम्नि प्रतिष्ठिताः ।
मोहस्यावरणं भूयो भूयो मोहः प्रवर्तते ॥ १५२ ॥
यां यां लीलां स्मरेच्चित्ते सा सा प्रादुर्भवेत्पुरः ।
जायमानापि वै प्रायो दग्धवस्त्रवदाकृतिः ॥ १५३ ॥
साक्षाद्बोधस्त्वयं प्रोक्तो दुर्लभः कृष्णयोषिताम् ।
विद्ध्य(विद्धि)विघ्नाकृतं चैनमपरोक्षस्थया कृतः ॥ १५४ ॥
एवं प्रबु(द्ध्या)द्धा सर्वासां स्वप्रियेण प्रबोधिता ।
सुन्दरी सुभगा काचित्सर्वाः सम्बोधयिष्यति ॥ १५५ ॥
कालाक्षमत्वमौत्सुक्यं प्रियप्राप्तिस्पृहोद्भवम् ।
कण्ठशोषस्त्वराचिन्ता उपायान्वेषणात्मिकाः ॥ १५६ ॥
निःश्वासो मनसोऽस्थैर्यमनुभावा इमे स्थिताः ।
प्रबोधानन्तरं भावी आवेगश्चित्तविभ्रमः ॥ १५७ ॥
अभ्युद्गमोऽश्रुनिर्मोकश्चाञ्चल्यपुलकादयः ।
शाब्दवास्तवयोश्चापि जृम्भते कृष्णयोषिताम् ॥ १५८ ॥
ततश्चित्तप्रसादोत्थो जायते हर्षनिर्भरः ।

मुखप्रसादः स्वेदश्च पुलकाश्रूणि वै क्रमात् ॥ १७९ ॥
तस्माद्गच्छेद्गुरुं शुद्धं कृतज्ञं शिष्यवत्सलम् ।
मायिकीवासनामूलच्छेत्तारं शुद्धलक्षणम् ॥ १८० ॥
शिष्योपि स्याच्च जिज्ञासुः शुद्धचेताः स्वधर्मभाक् ।
स्वात्मनः शुभमन्विच्छन्विषयेन्द्रियनिर्म(मः)लः ॥ १८१ ॥
गुरुः प्रबोधयेदे(नं)वं प्रपञ्चोत्पत्तिपूर्वकम् ।
त्वं च कृष्णप्रियासीति प्रपञ्चावेक्षणागता ॥ १८२ ॥
आत्मस्मृतिव्यतीतात्मा मायावेशेन मोहिता ।
त्यज मोहं समुत्तिष्ठ भज रूपं प्रियस्य च ॥ १८३ ॥
इत्यादिगुरुवाक्येन यदि कृष्णे रतिर्भवेत् ।
तदा सा वासना शुद्धा कृष्णस्त्रीणामसंशयम् ॥ १८४
रत्यां सञ्जायमानायां भावास्तत्रोल्लसन्ति च ।
विरहस्य दशा पुष्टा जायते च ततः परम् ॥ १८५ ॥
निर्वेदाद्यैः स्मृतैर्भावैः कदाचित्तु दशान्तिमा ।
अत्युत्कटतरो भावस्तस्या एव न संशयः ॥ १८६ ॥
सर्वासामात्मबोधस्तु सहैव न पृथक् भवेत् ।
वासनाबिम्बसंयोगो भाविष्यत्यक्षरो यदा ॥ १८७ ॥
निर्मुक्तचित्तवृत्तिस्तु भविताविद्यया तदा ।
तवैतत्कथितं व्यास यन्मां त्वं परिपृष्टवान् ॥
प्रष्टव्यमन्यदपि चेत्प्रकाशय हृदि स्थि(मनोग)तम् ॥ १८८ ॥

इति श्रीपुराणसंहितायां सिद्धान्तसारे वासनाबोधनिर्माणं नाम त्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥

॥ आदितः श्लोकानां समष्ट्यङ्काः ॥ ३०६३ ॥

## ॥ चतुस्त्रिंशोऽध्यायः ॥ ३४ ॥

॥ व्यास उवाच ॥

सखीद्वयं त्वया प्रोक्तं प्रबुद्धं यद्भविष्यति ।
ततः सर्वा भविष्यन्ति प्रबुद्धाः कृष्णवल्लभाः ॥ १ ॥
बोधस्तु मोहविध्वंसः स्वरूपप्राप्तिलक्षणः ।
स्वस्वरूपावाप्तिकाले न तिष्ठेत्कल्पितं वपुः ॥ २ ॥
शयनादुत्थितस्यापि न तिष्ठेत्स्वाप्निकं वपुः ।
तत्कथं चित्तपदवीमारोहति महाप्रभो ॥ ३ ॥

॥ सूत उवाच ॥

एवं पृष्टो विरूपाक्षः कृष्णेन मुनिना स्वयम् ।
प्रहस्य वचनं प्राह बहुमानपुरःसरम् ॥ ४ ॥

॥ शिव उवाच ॥

साधु साधु महाप्राज्ञ यद्भवान्परिपृच्छति ।
तदहं ते प्रवक्ष्यामि शृणुष्वैकमना मुने ॥ ५ ॥
नेत्र[1]बन्धाख्यलीलायामिन्दिरापिहितेक्षणः ।
जग्राह सुन्दरीनाम कृष्णो लीलाप्रवर्तकः ॥ ६ ॥
सुन्दर्यामधिकं प्रेम ज्ञात्वा सा स्वामिनी तदा ।
कुपिता मानमास्थाय जगामोत्थाय सत्वरम् ॥ ७ ॥
तदा तां सान्त्वयामास उदीर्य (सुंदर्या) प्रेमकारणम् ।
कथयन्स्वप्रियावृन्दमध्ये स्थित्वा स्वयं प्रभुः ॥ ८ ॥
प्रिये मानमपार्थं त्वं किमर्थमवलम्बसे ।
सखीष्वपि च सर्वासु मत्प्रेम त्वावलम्बते ॥ ९ ॥
प्रिये त्वमन्तःकरणं मदीयमिति निश्चितम् ।
चतुर्धा वृत्तयस्तस्य आनन्दोत्साहिनी तथा ॥ १० ॥
प्रमोदा तृतीया वृत्तिश्चतुर्था त्वनुरागिणी ।

---

१ नेत्रबन्धलीला माहेश्वरतन्त्रे ३७ पटले वर्णिता तत्र द्रष्टव्या ।

आनन्दां सुन्दरीं विद्धि प्रमोदामिन्दिरां तथा ॥ ११ ॥
अवेह्युत्साहिनीं नाम्ना कलापूर्णां कलावतीम् ।
अनुरागिणी समाख्याता ह्लादिनीनाम नामतः॥ १२ ॥
यदा कदाचिन्मज्जेत मोहाम्भोधौ सखीगणः ।
तदुद्धाराय सुन्दर्या अधिकारः सनातनः ॥ १३ ॥
स्वाधिकारवशादेषा प्राप्तबोधापि जीवनम् ।
धारयन्ती सखीः सर्वा बोधयिष्यत्यसंशयम् ॥ १४ ॥
वचोगौरवमाज्ञाय स्वामिनी सुन्दरीं प्रति ।
त्यक्त्वा मानं निजं चित्तं प्रकृत्या सह सन्दधे ॥ १५ ॥

॥ शिव उवाच ॥

तस्मान्मुनीन्द्र जानीहि सुन्दर्या देहधारणम् ।
अधिकारवशादेव नान्यथा तद्भवेत्कचित् ॥ १६ ॥
यथा ब्रह्मा वेदमूर्त्तिर्वेदोक्तात्मविचारवित् ।
प्राप्तात्मज्ञानविज्ञानो जीवन्मुक्तोऽपि केवलम् ॥ १७ ॥
अनिवर्त्य स्वाधिकारं द्विपरार्धावधि स्थिरम् ।
न मुक्तिमुपयात्येव जीवो मुच्येत संविदा ॥ १८ ॥
स्वाधिकारनिवृत्त्यर्थं सुन्दर्या देहधारणम् ।
अथान्यदपि विप्रेन्द्र शृणु वक्ष्यामि सुन्दरम् ॥ १९ ॥
पञ्च पर्वाण्यविद्यायाः स्वरूपाज्ञानमेव च ।
देहाध्यासस्ततः प्रोक्त इन्द्रियाध्यास(इत्यनु)एव च ॥ २० ॥
प्राणाध्यासोन्तस्करणाध्यासः पञ्चम उच्यते ।
स्वरूपाज्ञानमात्रेण स्वस्वरूप तिरो(हितं)हति ॥ २१ ॥
येन देहात्मबुद्धिः स्याद्देहाध्यासः प्रवर्तते ।
तृतीयश्चेन्द्रियाध्यासो येनेन्द्रियगणस्य च ॥ २२ ॥
कार्याणां दर्शनादीनामात्मसम्बन्धिभावना ।

---

१ स्वाधिकारवशादेषा इत्यपि पाठः ।

प्राणाध्यासश्चतुर्थस्तु येन जायेत सन्ततम् ॥ २३ ॥
तद्धर्मक्षुत्तृडादीनां स्वधर्मत्वेन भावनम् ।
यदन्तःकरणाध्यासः पञ्चमं पर्व उच्यते ॥ २४ ॥
तद्धर्मसुखदुःखानां येन चात्मनि विभ्रमः ।
पर्वाण्यमून्यविद्याया जीवास्ते वासना अपि ॥ २५ ॥
आविष्टाः संसरन्त्येव तत्रोपायं(श्रृणुष्व भो)मुने शृणु ।
विद्यापि पञ्चपर्वा सा क्षमा तद्ग्रसने तु या ॥ २६ ॥
प्रथमं पर्व वैराग्यं रागनिर्नाशकारणम् ।
छिनत्त्यविद्यापर्वाद्य स्वरूपाज्ञानलक्षणम् ॥ २७ ॥
आत्मानात्मविवेकेन देहाध्यासनिवर्तकम् ।
साख्यं पर्व द्वितीयं तु विद्यायाः स्वात्मदर्शनम् ॥ २८ ॥
विद्यायास्तृतीयं पर्व योगोऽष्टाङ्ग(विनिर्मितः)समन्वितः ।
सर्वेन्द्रियनिरोधेनेन्द्रियाध्यासनिवर्तकः ॥ २९ ॥
चतुर्थं पर्व विद्यायास्तपः कायविशोषणम् ।
क्षुत्तृट्सहनसामर्थ्यात्प्राणाध्यासनिवर्तकम् ॥ ३० ॥
विद्यायाः पञ्चमं पर्व भक्तिर्या परमात्मनि ।
मनःप्रसादजननी सुखदुःखनिवर्तिनी ॥ ३१ ॥
तयान्तःकरणाध्यासः सद्य एव निवर्तते ।
एवं ग्रसति वै विद्या ह्यविद्यां पञ्चपर्वणीम् ॥ ३२ ॥
साधकानामयं मार्गः साधनैरुपलक्षितः ।
कृष्णप्रियावासनानां विरहानुभवोदये ॥ ३३ ॥
निर्वेदाद्याश्च ते भावा अविद्यापर्वशातनाः ।
स्वरूपाज्ञानदलने बोधः स्यात्कृष्णयोषिताम् ॥ ३४ ॥
स्मृतिः प्रयोजिका तत्र विरहानुभवोदये ।
निर्वेदश्च विषादश्च दैन्यमेतत्त्रिकं मुने ॥ ३५ ॥
व्याधिः प्रयोजकस्तत्र देहाध्यासनिवर्तकः ।
प्रियस्य विरहे चिन्ता प्रवृत्तेन्द्रियहारिणी ॥ ३६ ॥

इन्द्रियाध्यासमखिलं निर्मूलयति तत्क्षणात् ।
आवेगश्च तथोन्मादश्चित्तविभ्रमकारकौ ॥ ३७ ॥
अध्यासमान्तःकरणं न चिरादुपशान्तयेत् ।
सर्वविस्मारको मोहः प्राणाध्यासनिवर्तकः ॥ ३८ ॥
निरस्ताज्ञानपर्वाणो वासनाः कृष्णयोषिताम् ।
स्वाप्निकं सहसोत्सृज्य स्वबिम्बान्युपयान्ति च ॥ ३९ ॥
अधिकारवतीनां च स्वाप्निकं न निवर्तते ।
प्रियोपदिष्टयोगा(त्त)क्तचेतसालम्बनेन च ॥ ४० ॥
सुन्दर्याश्चरमावस्था न भविष्यति कर्हिचित् ।
दग्धवस्त्रवदात्मानं धृत्वा विरहविप्लुता ॥ ४१ ॥
किञ्चित्प्रपञ्चलीलां च किञ्चिल्लीलां च निर्गुणाम् ।
पश्यन्ती परमानन्दपदध्यानरतात्मना ॥ ४२ ॥
साहाय्यमिन्दिरायाश्च लब्ध्वा कार्यं करिष्यति ।
स्वामिनीवासना साक्षादाविष्टा सुन्दरीमनः ॥ ४३ ॥
सूर्यसंख्यासहस्राणि वासनाः कृष्णयोषिताम् ।
तास्वग्रण्यः सन्ति पञ्च सुन्दरी चेन्दिरा तथा ॥ ४४ ॥
कलावती लाटिनी च पञ्चमी स्वामिनी परा ।
सुन्दर्याख्या तु या वृत्तिस्तया वै स्वामिनी हि सा ॥४५॥
प्रपञ्चलीलानुभवं करोति न पृथक् स्थिता ।
देहाध्यासे महादुःखमहन्तामंमतोद्भवम् ॥ ४६ ॥
तन्मास्त्विति च मन्वानः कृपालुः पुरुषोत्तमः ।
इयेष(उवाच)स्वामि(नीचित्ता)नीं चित्त सुन्द(री)रीसमधिष्ठिताम् ॥
प्रकटीकृत्य सद्रूपं(पां)प्रियेण प्रति(प्रिये च इति)बोधित(ता)म् ।
मोहतल्पे शयानानां बोधयित्री भवेति च ॥ ४८ ॥
बोधयिष्यति सा सर्वाः वासनाः कृष्णयोषिताम् ।
तस्मादवेहि मार्गेऽस्मिन्सुन्दरीमेव सद्गुरुम् ॥ ४९ ॥
यं यं जीवमधिष्ठाय चिदाभासमयं मुने ।

वासनावासितं कृत्वा वासनाः स्वगृहं यदा ॥ ५० ॥
गमिष्यन्ति तदा ते ते चिदाभासमया अपि ।
आनन्दावरणव्याप्ता गोलोकाख्यं परं पदम् ॥ ५१ ॥
यास्यन्ति साधनागम्यं चिदानन्दमयं महत् ।
वासनासु गुणारोपा न च ते प्राकृताः स्मृताः ॥ ५२ ॥
तादृक्स्वभावसम्पन्ना वस्तुतो न तथान्यथा ।
तथापि स्वप्नदोषेण प्राकृता अप्यधिष्ठिताः ॥ ५३ ॥
मनःप्राणेन्द्रियवपुः सर्वं तासां तथाविधम् ।
स्वप्नान्ते सर्वमुत्सृज्य प्राकृतं यदधिष्ठितम् ॥ ५४ ॥
निजानन्दात्मकं सर्वाः प्राप्स्यन्ते वपुरेव तत् ।
निजधाम्नि तदा सर्वाः प्रियाः सम्बुध्य तत्वतः ॥ ५५ ॥
कृतहासा भविष्यन्ति दत्ततालयः परस्परम् ।
महानन्दप्रमुदिता विकसद्वदनेक्षणाः ॥ ५६ ॥
उत्थाय स्वप्रियेणाशु कुतूहलनिमज्जिताः ।
रासलीलां करिष्यन्ति सह सम्भूय सर्व(शः)तः ॥ ५७॥

तुषारकुन्देन्दुकराभिराममप्रान्तोल्लसन्मौक्तिकरत्ननद्धम् ।
विचित्रभावायितमंशुजालैर्वासः समुल्लासि सुगन्धपूर्णम् ॥५८॥
हस्ते च लीलाकमलं दधाना नवीनमेघाभमथोत्तरीयम् ।
प्रियः प्रियाभिः सहितो विलासी विद्युत्प्रभाडम्बरकर्णभूषः ॥५९॥
त्रिवृन्महामौक्तिकसन्निबद्धपर्युष्टमुक्तावलिपद्मरागम् ।
परिस्फुरत्सान्ध्यबलाहकाभमुष्णीषमानन्दमयो दधानः ॥ ६० ॥
स्मिताननोऽनङ्गधनुर्धुरीणभ्रूविभ्रमान्दोलितसर्वचेताः ।
रेमेऽनुरागाकुलिताभिरन्तर्वाद्यान्यवाद्यन्त सखीगणास्ते ॥ ६१ ॥
काचित्सखी पाणिसरोरुहाभ्यां माध्वी मृदङ्गं रसमत्तभावा ।
आशावती चारुनखाग्रकोट्या वीणामुपादाय गलेऽभिजघ्ने ॥६२॥

लावण्यलहरी काचिन्निजाधरसुधाद्रवैः ।
कृष्णार्पितमनःप्राणा वंशीरन्ध्राण्यपूरयत् ॥ ६३ ॥

काचित्कलावती नृत्यं करिष्यति पुरः स्थिता ।
नानासङ्गीतसन्दोहैस्तोषयन्ती प्रियं प्रिया ॥ ६४ ॥
चेतश्चमत्कारकरी च चित्रा मयूरपिच्छव्यजनं दधाना ।
रत्नस्फुरत्कङ्कणवल्गुपाणिनृत्यानुसक्ताप्यभिवीजयिष्यति ॥६५॥
चुचुम्ब सर्वा वदनेषु कामी तथाऽऽलिलिङ्गोरसि गाढगाढम् ।
प्रियांससंसक्तभुजो विलासी रत्नासने चोपविवेश पूजितः ॥६६॥
तं स्वामिनी वामभुजोपपीडं सिषेव आत्मन्युदितप्रमोदा ।
शशाङ्कविद्योतितभालभूषा ताटङ्कतुच्छीकृतचन्द्रबिम्बा ॥ ६७ ॥
स्मिताननानन्दमयी किशोरी कलङ्कलेशोज्झितवक्त्रचन्द्रा ।
मुक्तामणिस्रग्ग्रथितालकान्ता सिन्दूररागाम्बरमादधाना ॥ ६८ ॥
प्रान्तेषु सक्तामलरत्नमुक्तानीलप्रभाक्षेपविचित्रचित्रम् ।
पिशङ्गचण्डातकरत्नमुक्तामयूखविद्धाननताभिरन्ध्रा ॥ ६९ ॥
मध्योल्लसन्मौक्तिकरत्नचत्रांस्तम्घाम्बुदश्यामसुरोजवासाः ।
मुक्ताभिरामामलदामधामस्फूर्जत्कपोलामलकुन्तलाढ्या ॥ ७० ॥
स्मितप्रभोत्तेजितदन्तहारा विचित्ररत्नालकण्ठहारा ।
कटिस्फुरत्काञ्चनरत्नकाञ्चीप्रभानुविद्धामलवस्त्ररन्ध्रा ॥ ७१ ॥
नासानटन्मौक्तिकताडिताधरा कर्णावतंसीकृतनीलपद्मा ।
कस्तूरिकालिप्तसुभालदेशा कटाक्षविक्षोभितकृष्णचित्ता ॥ ७२ ॥
प्रतिस्फुरत्कङ्कणनीलरत्नरोलम्बसंशोभितपाणिपद्मा
स्फुरत्प्रभामण्डलनूपुराभ्यामलङ्कृतश्रीचरणारविन्दा ॥ ७३ ॥
सखीसमाजः शुशुभे तदानीं सकौमुदीन्दूपचितोडुवर्गः ।
भोगं निवेदयिष्यन्तीसखीवर्गः समाहितः ।
भोक्ष्यते परमानन्दः प्रियया तत्सखीगणैः ॥ ७४ ॥
सव्यापसव्ययोस्तस्य सुन्दरीन्द्रावती स्थिते ।
नानाहासरसैर्वाक्यैः स्वप्नक्रीडानिरूपणैः ॥ ७५ ॥

---

१ 'निवेदयिष्यन्ति सखीवर्गाः समाहिताः' इत्यपि ।

हासयन्त्यौ प्रियं साक्षाद्धसन्त्यौ स्वामिनीमपि ।
एवं ताः प्रीणयिष्यन्ति प्रियाः स्वप्नसमुत्थिताः ॥ ७६ ॥
एवं तेऽभिहितं व्यास रहस्यं परमाद्भुतम् ।
अकथ्यं पारमार्थ्येन तथापि कथितं मया ॥ ७७ ॥
न देयं खलु धूर्तेभ्यः[1] शङ्काकुलितचेतसे ।
प्रपञ्चासक्तचित्ताय नास्तिकाय विशेषतः ॥ ७८ ॥
वेदार्थज्ञाननिष्ठाय शास्त्रसद्भावशालिने ।
कृतज्ञाय विनीताय प्रेमश्रद्धामलात्मने ॥ ७९ ॥
क्रियासंशुद्धचित्ताय भक्ताय विनिवेदयेत् ।

॥ सूत उवाच ॥

एवमुक्तस्ततो व्यासः पूजयामास शङ्करम् ॥ ८० ॥

॥ व्यास उवाच ॥

कृतार्थोऽहं कृतार्थोऽहं देवदेव जगत्पते ।
त्वयानुग्रहशालिन्या दृष्ट्या सम्भावितो यतः ॥ ८१ ॥
अद्य[2] मे संशयो नष्टः सिद्धान्तोऽनुगतो मया ।
अद्य मे फलितं जन्म तपःस्वाध्यायसंयमाः ॥ ८२ ॥
त्वमेव सर्वजीवानां ज्ञानदः परमो गुरुः ।
ज्ञानचक्षुः प्रवृत्तं मे येनाज्ञानतमस्तरेत् ॥ ८३ ॥
इत्युक्त्वा पादयोस्तस्य पपात मुनिसत्तमः ।
सोऽपि चान्तर्दधे सद्यः शम्भुरात्मात्मनां प्रभुः ॥ ८४ ॥

॥ सूत उवाच ॥

अन्तर्हिते भगवति परमात्मनि शङ्करे ।
व्यासः कुहरिणीं त्यक्त्वा स्वाधिष्ण्यं प्रत्यपद्यत ॥ ८५ ॥
मुनयः कथितं सर्वं यत्पृष्टोऽहं दयालुभिः ।
व्यासप्रसादाधिगतं रहस्यमिदमद्भुतम् ॥ ८६ ॥

---

१ धूर्ताय इत्यपि । २ इतिहासपुराणब्रह्मसूत्रादिरचनानन्तरम् ।

य इदं शृणुयाद्भक्त्या यः श्रावयति भक्तितः।
सिद्धान्तहृदयं सम्यक् तस्य कृष्णः प्रसीदति ॥ ८७ ॥
स पापपञ्जरं हित्वा निरस्याखिलसंशयान्।
परब्रह्मपदं याति यत्र गत्वा न शोचति ॥ ८८ ॥
पञ्चकृत्वः श्रुतं हन्ति ब्रह्महत्यां सुदुःसहाम् (सुदुस्तरां) ।
ब्राह्मणो ब्रह्मवर्चस्वी क्षत्रियो विजयी रणे।
वैश्यस्तु धनलाभाढ्यः शूद्रः सुखमवाप्नुयात् ॥ ८९ ॥
सिद्धांत(पुराण)संहितामेनां योध्यापयति भक्तितः।
अधीते वा न हि तयोर्यमादपि भयं भवेत् ॥ ९० ॥
पठध्वं मुनयः सर्वे पौराणं संहितामिमाम्।
हित्वा कलिभयं सद्यः कृतकृत्या भविष्यथ ॥ ९१ ॥

॥ शौनकादिऋषय ऊचुः ॥

अहो सूत महाभाग श्रावितं परमं रहः।
स्वस्त्यस्तु ते किमपरं कथ्यते परमार्थतः ॥ ९२ ॥
न चोपकर्तुं प्रभवो वयमेते मुनीश्वराः।
कृष्णकीर्तिसुधा ह्येषा देवानामपि दुर्लभा ॥ ९३ ॥
पायिता भवता सूत सर्वलोकेषु दुर्लभा।
कालकर्मभयात्तीर्णाः प्रसादात्तव सुव्रत ॥ ९४ ॥
जयतु जयतु कृष्णः सच्चिदानन्दमूर्ति-
र्जयतु जयतु कृष्णः सत्स्वरूपश्चिदात्मा।
जयतु जयतु कृष्णः केवलानन्दमूर्ति-
र्जयतु जयतु कृष्णः स्वामिनीस्नेह(प्रेम)सि(स)क्तः ॥९५॥

॥ इति श्रीमत्पुराणसंहितायां सिद्धान्तसारे व्यासशिवसंवादे
वासनाजाग्रतिकथनं नाम चतुस्त्रिंशोऽध्यायः ॥ ३४ ॥

॥ आदितः श्लोकानां समष्ट्यङ्काः ॥ ३१५८ ॥

॥ इति श्रीपुराणसंहिता समाप्ता ॥

# अथ आलमन्दारसंहिता

## ( षष्ठोऽध्यायः )

तत्र श्रीकृष्णलीलात्रैविध्ये वास्तवीलीलानिर्णयः

॥ शिव उवाच ॥

अथातः सम्प्रवक्ष्यामि आलमन्दारसंहिताम् ।
यस्या विज्ञानमात्रेण वास्तवी प्रस्फुटा भवेत् ॥ १ ॥

॥ पार्वत्युवाच ॥

केषां ज्ञानं भवेद्देव वास्तव्यास्तद्वदस्व मे ॥ २ ॥

॥ शिव उवाच ॥

शृणु पार्वति यत्नेन लीलानां त्रितयं महत् ।
यस्मिञ्ज्ञाते जीवसृष्टिर्भवाब्धिं प्रतरेत्सुखम् ॥ ३ ॥
नास्य ज्ञानं ब्रह्मसृष्टिं विना कस्यापि जायते ।
अक्षरब्रह्महृदये वास्तवीं विद्धि शाङ्करि ॥ ४ ॥
नित्यवृन्दावने या च सा स्मृता प्रातिभासिकी ।
व्रजभूम्यां च या लीला सा स्मृता व्यावहारिकी ॥ ५ ॥
यस्मिन्स्थाने वास्तवी च लीला प्रोक्तातिसुन्दरि ।
तत्स्थानं कोटिब्रह्माण्डमहाशून्याद्विलक्षणम् ॥ ६ ॥
मानं तस्यापि किमपि विद्यते नैव शाम्भवि ।
तत्र भूमिं स्वप्रकाशामाकाशं च तथाविधम् ॥ ७ ॥
जलं तथाविधं विद्धि तेजश्चैव तथाविधम् ।
तत्रानन्दपदस्थानं जानीहि गिरिजे ध्रुवम् ॥ ८ ॥
सुधाब्धिस्तत्र विततः कोटियोजनकस्य च ।
तस्य मध्ये च कोट्यर्धयोजनं मणिद्वीपकम् ॥ ९ ॥
तस्मिन्नवखण्डा येषु लीला नवरसा सदा ।
तेषां मध्ये मध्यखण्डे लीला शृङ्गारशालिका ॥ १० ॥
पद्मरागमणेः खण्डो मध्ये तस्मिन्प्रवर्तते ।

आनन्दभूमिका सा च शिवे त्वं विद्धि निश्चितम् ॥११॥
तस्मात्पूर्वे पुष्परागमणेः खण्डोऽतिसुन्दरि ।
चिदानन्दमयी या च सप्तभूमिश्च सा स्मृता ॥ १२ ॥
अष्टमी चित्रशालेति नाम्ना त्वं विद्धि भूमिकाम् ।
चतुर्विंशतिसाहस्रं परिवार्य स्थिताः सखीः । १३ ॥
अग्निकोणे वज्रमणेः खण्डोऽप्येकोऽतिसुन्दरः ।
भूमयस्तत्र सप्तापि ह्यष्टमीं चित्रशालिकाम् ॥ १४ ॥
चतुर्विंशतिसाहस्रं परिवार्य स्थिताः सखीः ।
वैराग्यभूमिका[1] विद्धि, दक्षिणे[2] मरकतखण्डके ॥ १५ ॥
भूमयस्तत्र सप्तापि ह्यष्टमी चित्रशालिका ।
चतुर्विंशतिसाहस्रं परिवार्य स्थिताः सखीः ॥ १६ ॥
सन्तोषभूमिकां विद्धि, नैऋत्य विद्रुमखण्डके ।
भूमयस्तत्र सप्तापि अष्टमी चित्रशालिका ॥ १७ ॥
चतुर्विंशतिसाहस्राः परिवार्य स्थिताः सखीः ।
त्वं प्रेमभूमिकां चापि, पश्चिमे[3] विद्ध पार्वति ॥ १८ ॥
नीलमणेस्तत्र खण्डो विद्यते सप्तभूमियुक् ।
अष्टमीं चित्रशालां च नानारत्नैश्च चित्रिताम् ॥ १९ ॥
चतुर्विंशतिसाहस्रस्तत्र विद्धि सखीजनः ।
भुक्तिभूमिर्हि, वायव्ये[4] इन्द्रनीलमणेस्तथा ॥ २० ॥
भूमयस्तत्र सप्तापि ह्यष्टमी चित्रशालिका ।
चतुर्विंशतिसाहस्रस्तत्र विद्धि सखीजनः ॥ २१ ॥

---

१ वैराग्यभूमिकामित्यस्याग्निकोणे इत्यनेनान्वयः ।

२ दक्षिणे इति पदं सन्तोषभूमिकामित्यनेनान्वेति । नैर्ऋत्ये विद्रुमखण्डके इतिपदयोः प्रेमभूमिकां इतिपदेनान्वयः ।

३ पश्चिमे इति पदेन भुक्तिभूमिः इत्यन्वेति ।

४ व्यायव्ये इत्यस्य ज्ञानभूमिः इत्यनेन सम्बन्धः ।

नभूमिरुदीच्यां[1] हि गोमेदमणिखण्डका ।
भूमयस्तत्र सप्तापि ह्यष्टमी चित्रशालिका ॥ २२ ॥
चतुर्विंशतिसाहस्रस्तत्र विद्धि सखीजनः ।
भूमिः प्रकाशिकै,शान्यां[2] विद्धि मुक्तामणीमयी ॥ २३ ॥
भूमयस्तत्र सप्तापि ह्यष्टमी चित्रशालिका ।
चतुर्विंशतिसाहस्रस्तत्र विद्धि सखीजनः ॥ २४ ॥
रातभूमिं विद्धि, मध्ये पद्मरागमणेस्तथा ।
मूलमन्दिरमेतत्तु ह्यद्भुतं सुरसुन्दरि ।
नव भूम्यात्मकं तच्च दशमी चित्रशालिका ॥ २५ ॥
आधारभूमिका चैव भ्रमिनृत्यमयी तथा ।
भुक्तिभूमिस्तु शयनी शिविका हिन्दोलिका तथा ॥ २६ ॥
अष्टशल्या सिंहासना दशमी चित्रशालिका ।
कक्षोच्छ्रायो महांस्तत्र चतुष्कं चापि शाम्भवि ॥ २७ ॥
तस्मिंश्चतुष्कमध्ये तु दृश्यते मण्डपद्वयम् ।
वेदिका तत्र ह्येकापि दृश्यते रक्तवृक्षयुक् ॥ २८ ॥
वेदिका तत्र चान्यापि हरिद्रुमयुता हि सा ।
मध्ये वटपिप्पलाधो जनस्थानं च दृश्यते ॥ २९ ॥
पश्चिमे पुष्पवनं तदधो नूरकञ्जगुः ।
उत्तरे रक्तवेदिका युग्मे चैव वने तथा ॥ ३० ॥
तालवनं महावनं मधुवनं महाद्भुतम् ।
बृहद्वनं पुष्पराजं पुष्पेण सदृशं विदुः ॥ ३१ ॥
प्रतोलिका ह्यनन्ताश्च यमुना तत्र सुव्रते ।
सप्त तीर्थानि तस्याः स्युर्दृश्यते च सरो महत् ॥ ३२ ॥
सरसश्च चतुर्दिक्षु माणिक्यं पर्वतो बृहत् ।

---

१ उदीच्यामित्यस्य प्रकाशिका इति पदेनानुसन्धानम् ।
२ ऐशान्यामिति पदस्य रतिभूमिं विद्धि इत्यत्रान्वयः कार्यः ।

कुञ्जवनं तथाप्येकं सर्वर्तुसुखमृद्धिमत् ॥ ३३ ॥
अष्टौ सरसि साट्टालानष्टौ सरसि दृश्यते ।
चतुष्कं राङ्कवं चैव दूर्वा चैव प्रदृश्यते ॥ ३४ ॥
चतुर्विंशतिहस्तस्य अट्टालकमनिद्रितम् ।
एतान्दृष्ट्वा परं धाम्नः कक्षाया च प्रपद्यते ॥ ३५ ॥
आनन्दसन्तोषभूम्योः पुष्परागमणेर्गिरिः ।
उच्छ्रायो दशसाहस्रहस्तस्यापि सुनिश्चितम् ॥ ३६ ॥
पावमानो भ्राजमानो महारम्यस्तथैव च ।
विद्यन्ते तस्य शृङ्गाणि विषाणसदृशानि च ॥ ३७ ॥
आनन्दभुक्तिभूम्योस्तु मध्ये नीलमणेर्गिरिः ।
उच्छ्रायो दशसाहस्रयोजनस्य बुधैर्जगौ ॥ ३८ ॥
महाचन्द्रश्च गौरश्च चन्द्रचूडोति सुव्रते ।
शृङ्गाणि तस्य ख्यातानि तन्त्रे तन्त्रविदो विदुः ॥ ३९ ॥
सार्धलक्षयोजनस्य सरो दृश्येत सुन्दरि ॥ ४० ॥
बृहच्चतुष्के सम्प्राप्य चैकादश वनानि सः ।
संग्रह्य कृतकृत्योभून्नात्र कार्या विचारणा ॥ ४१ ॥
एकैकशो वनस्यापि विस्तारो युग्मयोजनः ।
तेषां नामानि वक्ष्यामि यथामत्यनुसारतः ॥ ४२ ॥
महापद्मं पद्मरागं सूर्यकान्तं प्रवालजम् ।
महामौक्तं हरिश्चन्द्रं पारिजातं तथैव च ॥ ४३ ॥
मन्दारं कल्पवृक्षं च चम्पकं च तथैव हि ।
एतन्महदरण्यानि परितो मूलमन्दिरम् ॥ ४४ ॥
मध्ये बृहद्राजमार्गो ब्रह्मनालेति संज्ञकः ।
यमुनासप्ततीर्थेषु तावन्त्येव वनानि च ॥ ४५ ॥
शृणु पार्वति वक्ष्यामि तेषां नामानि वै ध्रुवम् ।
वनं चन्द्रं तथा नीलं पुष्पाख्यं च तथैव च ॥ ४६ ॥
आनन्दहेमकूटे च वने त्वं विद्धि शाङ्करि ।

तारकूटं गारुडं च सप्तैतानि बुधा जगुः ॥ ४७ ॥
एषां शोभां समादृश्य मूलमन्दिरमाविशेत् ।
भूमयो नव कथिता मया चर्मकरानने ॥ ४८ ॥
पञ्चमी शयनी नाम्ना तस्यां रात्रौ हि सर्वदा ।
चिदानन्दमयीशय्यां शेते शुभ्रु महाभुजः ॥ ४९ ॥
अनेकहीररत्नैश्च स्वर्णस्तम्भास्थितावनौ ।
स्तम्भानां मण्डपस्यापि तेजोभिर्मणिद्वीपके ॥ ५० ॥
प्रकाशो वर्धते स्थूलमुक्तामणिभिरप्युत ।
प्रमोदामोदसम्मोदः पुष्पाणां तत्र जायते ॥ ५१ ॥
तस्मिन्मणिद्वीपके च पटमण्डोऽपि विद्यते ।
तस्याधः पर्यङ्कोपि विद्यते च मनोहरः ॥ ५२ ॥
सार्कं च प्रियया तस्मिन् शेते श्रीकृष्णसुन्दरः ।
तस्य च बोधनार्थाय शयनान्ते सखीजनः ॥ ५३ ॥
वीणामृदङ्गपणवं निरालस्यं प्रगह्य च ।
क्रीडागृहं प्रविश्यापि गानैः कृष्णं प्रबोधयेत् ॥ ५४ ॥
तं च नवरङ्गयूथस्यावेहि त्वं सखीजनम् ।
एकषष्ठिमिताः सख्यः कथिताश्च प्रबोधने ॥ ५५ ॥
मूलरूपस्य चोद्बोधे मयोक्ताश्चैव शाम्भवि ।
तासां नामानि वक्ष्यामि यथामत्यनुसारतः ॥ ५६ ॥
कनकाङ्गी मञ्जुमुखी कलकण्ठी स्मितानना ।
आनन्दवल्लरी वृन्दा मित्रवृन्दा तथैव च ॥ ५७ ॥
विशोकिनी चित्रवस्त्रा चित्राङ्गी चित्रघण्टिका ।
विभावरी मञ्जुमोदा ख्याता विधुमुखी तथा ॥ ५८ ॥
रत्नदन्ती मदाक्षी च लावण्यलहरी तथा ।
लीलावती च लावण्या ललिताङ्गी तथापरा ॥ ५९ ॥
कामवती पुष्पिणी च पुष्पदन्ती हसन्तिका ।
हंसगमना च पुष्पा पुष्पवेणी मरुल्लता ॥ ६० ॥

मुदिता मोदिनी श्यामा मुक्तावती रतिप्रिया ।
हारिणी हरिणी हंसी विहंसी हंसकुण्डली ॥ ६१ ॥
अरुणाङ्गी नवरङ्गा रमरङ्गा कुमुद्वती ।
कुङ्कुमाङ्गी कुन्दहासा चन्द्रहासा चरित्रिणी ॥ ६२ ॥
आनन्दमञ्जरी मन्द्रा पद्मवृन्दा ललन्तिका ।
कुन्ददन्ती रत्नकला जयिनी स्वर्णमेखला ॥ ६३ ॥
पुलिन्दिनी हेमवर्णा हरिणाक्षी रतिप्रिया ।
पद्मकोशा भृङ्गरवा गायनी मदमन्थरा ॥ ६४ ॥
एकषष्ठिसखीभिर्ना जाग्रत्कार्ये मया श्रुताः ।
प्रोक्ता द्वादशसाहस्राः सखीवृन्दा मया शिवे ॥ ६५ ॥
चत्वारिंशत्तु तासां च यूथं चैव तु शाम्भवि ।
शृङ्गारं च विनिर्माय मूलमन्दिरमागताः ॥ ६६ ॥
युगपच्च समागत्य प्रणेमुः प्रेमविह्वलाः ।
तस्य यूथपतेर्नाम वक्ष्यामि च हरप्रिये ॥ ६७ ॥
इन्दिरा सुन्दरी चैव नवरङ्गा कलावती ।
श्यामा चैव ह्यनङ्गा चानङ्गरेखा सुरङ्गिका ॥ ६८ ॥
वञ्जुली च तथा बाला केसराङ्गी समुत्सुका ।
मेघनादा च रक्ताङ्गी करुणावतिका तथा ॥ ६९ ॥
मालती माधवी चैव सुभद्रा रुचिरानना ।
पुष्पावती रत्नरेखा पद्मवृन्दा विलासिनी ॥ ७० ॥
मन्दारमधुरा माध्वी मञ्जुनादा लवावती ।
शृङ्गारलतिका वृन्दा प्रमोदा मधुमालती ॥ ७१ ॥
किशोरी कुसुमानन्दा रसकुल्या प्रभावती ।
आसावती विलासी च निस्तुला नीलकुन्तला ॥ ७२ ॥
विद्युद्वर्णा निम्ननाभिर्विरजस्का विहारिणी ।
रागिणी रङ्गरातिका रत्नावती रमानना ॥ ७३ ॥
पद्मगर्भा पद्मिनी च पिकनादा तथैव च ।

एवं यूथपतेः सार्कं सर्वसख्यः समागताः ॥ ७४ ॥
युग्मरूपं च कृष्णस्य शय्योपरि ह्यदृश्यत ।
नवरङ्गायाश्च यूथस्य सख्यो गानं समाचरन् ॥ ७५ ॥
तासां गानं च संश्रुत्य कृष्णो जातो विनिद्रितः ।
दीर्घभ्रूलतिका यस्य दीर्घनेत्रे मणिद्विजः ॥ ७६ ॥
जृम्भमाणं मुखं तस्य दृष्ट्वा सख्योऽतिविस्मिताः ।
एवंविधं तथा कृष्ण सख्यो नीराजनादिकम् ॥ ७७ ॥
चक्रुः समुत्सुका देवि बहुमानपुरःसरम् ।
आनन्दमञ्जरी काचिदादर्शं प्रतिगृह्य च ॥ ७८ ॥
समुत्सुका सखी काचित्पादुके प्रतिगृह्य च ।
चरणोपान्ते समाधाय तत्रैव निषसाद ह ॥ ७९ ॥
पादुकाभ्यां च सङ्गम्य रत्नसिंहासने विभुः ।
तत्र स्थित्वा ह्यकरोद्दन्तधावनादिकाः क्रियाः ॥ ८० ॥
यस्या यत्कर्म कथितं सा तत्कर्म तथाऽकरोत् ।
ततः स्नानस्थलं गत्वा स्नात्वा तत्र सखीजनैः ॥ ८१ ॥
स्नाने द्वादश सख्यश्च वर्णिता भवसुन्दरि ।
तासामपि च नामानि वक्ष्येऽहं शृणु सुन्दरि ॥ ८२ ॥
स्मेरानना विधुकला वल्गुनादा विहङ्गमा ।
सङ्गमाला स्मरानन्दा विश्वानन्दा सकुण्डला ॥ ८३ ॥
तेजोवती हेमगर्भा तरुणी तपनावती ।
एतास्तु स्नानकाले च विद्धि सख्यः सुशाम्भवि ॥८४॥
स्नानस्यान्तरे सख्यो भूषणानि तथैव च ।
कारयामास कृष्णस्य यथाविध्यनुसारतः ॥ ८५ ॥
तदनन्तरं कृष्णस्तु स्वर्णसिंहे महाभुजः ।
भोजनं तत्र विधिवदाचकार समुत्सुकः ॥ ८६ ॥
पुनश्च मुखशुद्ध्यर्थं ताम्बूलं भुक्तवान्प्रभुः ।
ताम्बूलस्यादनं कृत्वा शय्यायां देवि सुप्तवान् ॥ ८७ ॥

एवंविधानि कर्माणि कृष्णेनाचरितानि च ।
मया श्रुतानि दुर्द्धर्षैर्नारदान्नात्र संशयः ॥ ८८ ॥
एतां लीलां वास्तवीं च श्रुत्वा मुक्तिमवाप्नुयात् ।
नैतां कस्यापि मतिमान्बोधयेत्कृष्णसत्कृताम् ॥ ८९ ॥
अथापि यस्य कस्यापि देहे श्रद्धा भवेद्यदि ।
तस्यापि बोधयेल्लीलां मया प्रोक्तां शृणु प्रिये ॥ ९० ॥

॥ पार्वत्युवाच ॥

धन्यास्म्यनुगृहीतास्मि भवता करुणात्मना ।
यदनुग्रहतो देव श्रुता लीला मयाद्भुता ॥ ९१ ॥
कुत्रेमां लब्धवांल्लीलां तन्मे वद महेश्वर ।

॥ शिव उवाच ॥

एकदा नारदो लोकान्पर्यटन्मुनिसत्तमः ॥ ९२ ॥
यदृच्छयापि सम्प्राप्तः सत्यलोकं ध्रुवं महत् ।
तत्रेमां श्रुतवांल्लीलां नारदो मुनिपुङ्गवः ॥ ९३ ॥
सनकादीन्नमस्कृत्य ततोऽगच्छन्ममाश्रमम् ।
रणयन्महतीं वीणामागतो मुनिराट् स्वगम् ॥ ९४ ॥
नारदं च समायान्तमहं प्रत्याययौ शिवे ।
मधुपर्कं च सार्धं च कृत्वा तस्मै जगादह ॥ ९५ ॥
ब्रह्माण्डान्तर्बहिश्चापि अव्याहतगतिर्भवान ।
तेन लीला ममाख्याता महता प्रेममूर्तिना ॥ ९६ ॥
तां च लीलामहं शास्ता त्वां समुद्दिश्य चोक्तवान्[1] ।
स्त्रीस्वभावान्महादेवि पुनस्त्वं परिपृच्छसि ॥ ९७ ॥
गोपनीयं प्रयत्नेन लीलानां त्रितयं महत् ।
शठाय कृपणायाथ दाम्भिकाय सुरेश्वरि ॥ ९८ ॥
न दातव्यं न दातव्यं न दातव्यं कथञ्चन ।

---

१ श्रीमाहेश्वरतन्त्रे उक्तवान् भगवान् शंकर इति ज्ञेयम् ।

देयं शान्ताय शिष्याय कृष्णभक्तिरताय च ॥ ९९ ॥
पुरा नारदतः केचिद्विरला वैष्णवा जनाः ।
कलौ जानन्ति देवेशि नान्यथा प्राप्यते ध्रुवम् ॥ १०० ॥
आश्विनीपूर्णिमायां च कार्तिक्यां च तथा पुनः ।
रासं कृत्वा श्रीकृष्णं ध्यात्वेमां संहितां पठेत् ॥१०१॥
पीताम्बरधरो धीमान्सुगन्धद्रव्यतैलकैः ।
आहारं ब्राह्मणे दत्वा स्वयं चापि निराशनः ॥ १०२ ॥
विपिने विजने गत्वा जनैश्चापि विवर्जितः ।
यः पठेत्सततं धीरो ह्यालमन्दारसंहिताम् ॥ १०३ ॥
श्रीकृष्णभक्तान् श्रीकृष्णं श्रावयेद्वा द्विजोत्तमः ।
श्रीकृष्णवासनाभावं सोपि याति न संशयः ॥ १०४ ॥
आश्विनी पूर्णिमा यावद्यावद्भवति कार्तिकी ।
तावत्कृष्णकृता लीलाः कर्तव्यास्तु सुयत्नतः ॥ १०५ ॥
पूतनाया बकस्यापि यमलार्जुनयोस्तथा ।
वृषासुराघासुरयोः केशिनश्च तथैव च ॥ १०६ ॥
कालीयग्रहणं[1] चापि कर्तव्यं तु प्रयत्नतः ।
लीला ह्येताः कृताः शस्ताः पुंसां निर्भयकारिकाः॥१०७॥
निःसाध्वसः पुमान्नूनं लीलायाश्चरणाद्भवेत् ।
लीलानां श्रवणाज्जन्तुस्तथा निःसाध्वसो भवेत् ॥१०८॥
तस्माल्लीलाः प्रकर्तव्याः संहितापाठपूर्विकाः ।
लीलायाः करणादेव याति तन्मयतां जनः ॥ १०९ ॥
संहिता दुर्लभा लोके त्वं विद्धि सुरसुन्दरि ।
संहितापुस्तकस्यापि पूजनाद्धारणात्प्रिये ॥ ११० ॥
वासनाभावता याति विद्वान् वेदविचक्षणः ।
अथान्यदपि वक्ष्यामि शृणु पार्वति निश्चितम् ॥ १११ ॥

---

१ कालीयग्रहणमित्यस्य कालीयग्रहणलीला या भगवत्कृता सा कर्तव्येत्यर्थः ।

सखीनां चापि कृष्णस्य प्रेमाधिक्यात्तु साम्प्रतम् ।
व्यावहारिकी तु या लीला याता सेतीति मे मतम् ॥११२॥
सखीश्चापि स सम्बोध्य कृष्णो यातो निजालयम् ।
अन्यथापि सखीनां च संबोधो न भविष्यति ॥ ११३ ॥
तस्मादेकादश समा द्विपञ्चाशद्दिनानि च ।
कृष्णे व्रजात्तु संयातो लीलां कृत्वा स्वमालयम् ॥११४॥

॥ इति श्रीसुन्दरीतन्त्रान्तर्गतालमन्दारसंहितायाः षष्ठोऽध्यायः ॥

॥ आदितः श्लोकानां समष्ट्यङ्काः ॥ ३२७२ ॥



# अथ बृहत्सदाशिवसंहिता

॥ तत्र श्रुतिरहस्ये श्लोकाः ॥

॥ सनकादय ऊचुः ॥

सदाशिव महायोगिन् योगिध्येयपदाम्बुज ।
प्रपन्नाः शरणं त्वाद्य शरणागतवत्सल ॥ १ ॥
क्षराक्षराक्षरातीताः पुरुषाश्चेति विश्रुताः ।
कृष्णलीलाविशेषं च कथयाशु विवेकतः ॥ २ ॥

॥ सदाशिव उवाच ॥

शृणुतेदं महाभागा रहस्यं परमाद्भुतम् ।
सर्वगुह्यतमं गोप्यं प्रियाय कथयामि वः ॥ ३ ॥
अव्याकृतविहारोऽसौ क्षर इत्यभिधीयते ।

---

१ अव्याकृतो नाम अक्षरस्वभावो मूलप्रकृतिरेव । 'अव्याकृता हि प्रकृतिः परमा त्वमाद्या' इति मार्कण्डेयात्। सा द्विधा विद्याऽविद्या च। तत्र विद्याशक्त्याक्षरबुद्धेर्नित्यविहारः। अविद्याशक्त्याक्षरमनसः प्राकृतविहारः। तत्र विद्याशक्त्यां कालस्वभावकर्मणां बीजम् । यदास्यामक्षरमनःप्रवेशस्तदा तस्य कालस्वभावकर्मणां भानं भवति। सूच्या भिन्ने पद्मपत्रे त्रुटिरित्यभिधीयते इति कालस्त्रुट्यादिद्विपरार्धान्तो मूर्तामूर्तरूपः सच्चिदादिगुणात्मकः। तत्र सत्त्वं नाम सदैकरसेन स्थितत्वम्। चित्त्वं नाम परिपूर्णज्ञानमयत्वम्। आनन्दत्वं नाम सदाखण्डसुखमयत्वम्। तेषु कालशक्त्या क्षोभः। स्वभावशक्तिर्द्विधा। आवरणरूपा विक्षेपरूपा च । तत्रावरणशक्त्या स्वरूपविस्मृतिः। विक्षेपशक्त्या स्वरूपान्तरत्वम् । कर्मशक्त्यास्य विजिहीर्षा । ततश्चैकस्यानेकत्वनानात्वबुभूषा एकोऽहं बहु स्यामिति श्रुतेः। ततश्चास्यां प्रकृत्यां महत्तत्त्वहिरण्मयवीर्याधानम्। महतोऽहंकारः। स च त्रिगुणमयः। तमसो महाभूतानि पञ्चतन्मात्राणि । रजसा दशेन्द्रियाणि। सत्त्वाच्चत्वार्यन्तरिन्द्रियाणि चतुर्दशेन्द्रियप्रकाशकदेवताश्च। तानि च सर्वाणि पुरुषशक्तिप्रेरितानि मिलित्वा अण्डं जनयंति । तत्र स्वेच्छया प्रविष्टः पुरुषः नारायण इति संज्ञां लभते। नारायणात् ब्रह्मा। ततो मन्वादिक्रमेण देवनरतिर्यगादयः सर्वे भूतसर्गाः। अत्रेश्वरो भगवानेकः सर्वनि-

तत्पर त्वक्षरं ब्रह्म वेदगीतं सनातनम् ॥ ४ ॥
उत्तमस्त्वक्षरातीतश्चिद्रूप उभयाश्रयः ।
तत्प्रियानन्दरूपा च सदात्मा त्वक्षरः स्मृतः ॥ ५ ॥
अक्षरांघ्रिनखज्योतिर्ब्रह्म यन्निर्गुणात्मकम् ।
नानावतारनिलयं कारणं यदसत्सतोः ॥ ६ ॥
कृष्ण एवाक्षरातीतः सच्चिदानन्दलक्षणः ।
प्रियाभिः प्रार्थितः प्रेम्णा रेमे वृन्दावने विभुः ॥ ७ ॥
विप्रलम्भ[1]विहारार्थं प्रियामनुगतः प्रभुः ।
व्रजमावश्य सोंशेनाक्षरबुद्ध्याविशद्धरौ ॥ ८ ॥
वृन्दावनाश्रयालीला साक्षरात्परतः परा ।
गुह्याद्गुह्यतरागम्या नित्याक्षरहृदि स्थिता ॥ ९ ॥
यद्ब्रह्मपरमैश्वर्यं नित्यवृन्दावने स्थितम् ।
तदेव गोकुले प्रोक्तं बाल्यकैशोरभेदवत् ॥ १० ॥
वैकुण्ठवैभवं यच्च[2] मथुराद्वारकाश्रितम् ।

---

यन्ता नानारूपेण तिष्ठति । तस्य सर्वस्वरूपस्य प्रधानं रूपद्वयम्। साकारो निराकारश्च । साकारो महाविष्णुः स एव नारायणः । सर्वावतारा ऋषयो भवो भागवताश्च ये । कलाः सर्वे हरेरेव ब्रह्माद्याश्च सुरोत्तमा इति । निराकारश्च सर्वान्तर्यामी सर्वत्र परिपूर्णः सत्तात्मकः प्रकाशमयः सर्वज्ञ इति । स च सर्वः प्रकृतिपुरुषविषयः प्राकृतमण्डलाश्रयः सूक्ष्मस्थूलात्मकश्चिदचिन्मयः स एव अव्याकृतविहारः । स एव सर्वो मिलितः क्षरः पुरुष इत्यभिधीयते ।

१ विप्रलंभो वियोगः रसस्य द्वितीयं दलम् । संयोगेन निजधाम्नि नित्यविहारः । विप्रलंभस्य द्वारभूतोऽक्षरो व्याससंहितायां (२३।३०) कथितः । तदुदयेऽव्याकृतविहारोऽप्यस्ति स प्राकृतविहारः अक्षरमनसोत्थः तत्र विप्रलंभः सिध्येत ।

२ पद्मपुराणे वृंदावनरहस्येऽपि एषोऽर्थो दर्शितो यथा—
"गोलोकैश्वर्ययत्किञ्चिद्गोकुले तत्प्रतिष्ठितम् ।
वैकुंठवैभवं यच्च द्वारिकायां प्रकाशितम् ॥ १ ॥"
वाराहसंहितायामप्येषः श्लोक उपलभ्यते । श्रीमाहेश्वरतंत्रे तु—
'श्वेतद्वीपस्य तु च्छाया मथुरायां प्रतिष्ठिता' (२५।१६) इति विशेषः ।

मध्ये वृन्दामधुवनं यच्च मध्यालयाश्रयम् ॥ ११ ॥
श्रुतिभिः संस्तुतो रासे तुष्टः कामवरं ददौ ।
वृन्दावनं मधुवनं तयोरभ्यन्तरे विभुः ॥ १२ ॥
ताभिः सप्तदिनं रेमे वियुज्य मथुरां गतः ।
चतुर्भिर्दिवसैरीशः कंसादीननयत्परम् ॥ १३ ॥
तत आदाय तद्धाम गूढं गोपीहृदि स्थितम् ।
तदाधिनाक्षिप्तचित्तास्तत्पदं श्रुतयो ययुः ॥ १४ ॥
ततो मधुपुरीमध्ये भुवो भारजिहीर्षया ।
यदुचक्रावृतो विष्णुरुवास कतिचित्समाः ॥ १५ ॥
ततस्तु द्वारकां यातस्ततो वैकुण्ठमास्थितः ।
एवं गुह्यतरः प्रोक्तः कृष्णलीलारसाश्रिया ॥ १६ ॥
आनन्दरूपा याः सख्यो व्रजे वृन्दावने स्थिताः ।
कलौ प्रादुर्भविष्यन्ति पुनर्यास्यन्ति तत्पदम् ॥ १७ ॥
चिदावेशवती बुद्धिरक्षरस्य महात्मनः ।
प्रबोधाय प्रियाणां च कृष्णस्य परमात्मनः ॥ १८ ॥
मुक्तिदा सर्वलोकानां भविता भारताजिरे ।
प्रसरिष्यति हृद्देशे स्वामिन्याः प्रभुणेरिता ॥ १९ ॥
एवं सम्प्राप्तविज्ञाना विनिद्रा ब्रह्मणः प्रियाः ।
प्राप्स्यन्ति परमानन्दं परिपूर्णमनोरथाः ॥ २० ॥
एतद्वो वर्णितं विप्राः किमन्यच्छ्रोतुमर्हत ।
तूष्णीं तिष्ठत तं कालं प्रतीच्छन्तो महत्तमाः ॥ २१ ॥
॥ इति श्रीबृहत्सदाशिवसंहितांतर्गतश्रुतिरहस्यम् ॥ २२ ॥
आदितः श्लोकानां समष्ट्यङ्काः ॥ ३२९४ ॥

---

१ एष प्रसङ्गः श्रीपुराणसंहितायाः ३१ अध्यायेऽपि ३१ श्लोकतः प्रसङ्गितः ।

# ॥ श्रीसनत्कुमारसंहिता ॥

॥ सनत्कुमार उवाच ॥

ब्रह्मन् ब्रह्मज्ञ तत्वज्ञ ब्रह्मधामविशारद ।
त्वत्तोऽहं श्रोतुमिच्छामि रहस्यं परमाद्भुतम् ॥ १ ॥
गमनं श्रूयते यत्रागमनं च न वा प्रभो ।
किं तद्धाम परं गुह्यं रहस्यं वेददुर्लभम् ॥ २ ॥
वैकुण्ठादिषु लोकेषु गमनागमनं प्रभो ।
गमनं श्रूयते यत्र न चागमनमेव च ॥ ३ ॥
तद्धाम वद नो नित्यं सर्वदेवनमस्कृतम् ।
जिज्ञासूंस्तत्पदं गन्तुमिच्छुकान्कृष्णचिन्तकान् ॥ ४ ॥

॥ ब्रह्मोवाच ॥

धन्या यूयं पराः पुण्याः संसारव्यालध्वंसकाः ।
धन्योऽहं बहुभाग्यश्च यतो यूयं रहस्यगाः ॥ ५ ॥
मया विज्ञायते किञ्चित्परं देवादिदुर्लभम् ।
सदाशिवो महाभक्तः सर्वदेवेश्वरेश्वरः ॥ ६ ॥
मथुरामण्डले रम्ये यमुनातीरनिर्मले ।
तत्र भव्यतमं धाम द्रुमपल्लवसङ्कुलम् ॥ ७ ॥
फलिनः शाखिनो यत्र ऋतवश्च सदा स्थिराः ।
शान्ताश्च जन्तवो यत्र युग्मध्यानाय तत्पराः ॥ ८ ॥
सदाशिवश्च तत्रस्थो नीलचीवरसंवृतः ।
शुद्धस्फटिकसङ्काशः षोडशाब्दवयोयुतः ॥ ९ ॥
पार्वतीभामिनीयुक्तो युगलध्यानचिन्तकः ।
तत्र गच्छत गत्वा च प्रष्टव्यः स महेश्वरः ॥ १० ॥

---

१ सनत्कुमारसंहिताया एकमेव प्रतःकपुस्तकमस्मत्सविधे संवत् १७८६ द्वितीय-भाद्रपदशुक्ल-पक्षैकादश्यां शनिवासरे लिखितमस्ति। पुस्तकान्तराभावादत्राशुद्धयोऽपि स्वाभाविक्यस्तिष्ठन्ति विद्वद्भिः संशोध्या इति।

स वदिष्यति युष्माकं सज्ज्ञानं च भविष्यति ।
ब्रह्माणं चाथ ते नत्वा परानन्दसमुत्सुकाः ॥ ११ ॥
मुनिवर्या विष्णुभक्ता भूमिमाजग्मुरुत्तमाः ।
सदाशिवं चिन्तयन्तो यमुनातीरमागताः ॥ १२ ॥
तद्वनं च सुसम्प्राप्य शिवं सर्वत्र दर्शिनः ।
आसीनं च शिवं शान्तं पारिजाततरोरधः ॥ १३ ॥
संवीक्ष्यानन्दसंयुक्ताः प्रणम्य च मुहुर्मुहुः ।
कायेन मनसा वाचा सर्वैरेवेन्द्रियैस्तथा ॥ १४ ॥
पप्रच्छुर्विनयाधाराः शिष्या इव मुनीश्वराः ।
जिज्ञासवो महाभागा ब्रह्मणो मानसाः सुताः ॥ १५ ॥

॥ सनक उवाच ॥

देवेश करुणासिन्धो दयासिन्धो महाप्रभो ।
रहःसिद्धान्ततत्त्वज्ञ संसारार्णवतारक ॥ १६ ॥
तव दर्शनमात्रेण परां सिद्धिं समागताः ।
अपि धन्या वयं तात यतः प्राप्ता इदं स्थलम् ॥ १७ ॥
इति तेषां वचः श्रुत्वा हर्षनिर्भरमानसः ।
उवाच कुशलां वाणीं रहस्यार्थप्रकाशिनीम् ॥ १८ ॥

॥ महादेव उवाच ॥

कच्चिद्वः कुशलं विप्रा ब्रह्मण्यं विष्णुदेवयोः ।
ध्यानं योगो तपो वेदाः कुशलाः सन्ति शाश्वताः ॥१९॥
यदर्थमागता यूयं तद्वदामि परिस्फुटम् ।
एवं तु ऋषयो गुह्यं न विख्यातं मया क्वचित् ॥ २० ॥
इदं च कथ्यते गोप्यं गुह्याद्गुह्यतरं महत् ।
श्रूयतां मुनिशार्दूलाः कृष्णधामसमुत्सुकाः ॥ २१ ॥
वृन्दावनं महापुण्यं सर्वपावनपावनम् ।
सर्वलोकबहिर्भूतं निराधारं परिस्फुरत् ॥ २२ ॥
द्वयोर्वस्त्रैश्च संवीतं प्रियापीठोपरिस्थितम् ।

पञ्चयोजनविस्तीर्णं महामणिविभूषितम् ॥ २३ ॥
पारिजातैश्च संवीतं सर्वसिद्धिसमन्वितम् ।
तत्र संक्रीडते युग्मं ललितादिसखीवृतम् ॥ २४ ॥
संक्रीडनार्थं कुञ्जाश्च कृताश्च विविधाः प्रभो ।
सहस्रसंख्यया ख्याताः कान्त्या भर्त्सितलोककाः ॥२५॥
तत्राप्यष्टशतं[1] कुञ्जा मम दृष्टा मुनीश्वराः ।
सार्द्धशतेषु कुञ्जेषु सखीनां गतिरुत्तमा ॥ २६ ॥
पञ्चविंशतिकुञ्जेषु ललितादिगतिर्ध्रुवम् ।
पञ्चविंशतिकुञ्जेषु न कस्यापि गतिः स्फुटा ॥ २७ ॥
यत्र दृष्टिर्मदीयास्ति तत्रत्यं कौतुकं ब्रुवे ।
सर्वकर्म परित्यज्य यः स्त्रीकर्मसमाचरेत् ॥ २८ ॥
मनसा श्रोतुमर्हेत[2] नान्यथा तत्पदं ध्रुवम् ।
एकयोजनविस्तीर्णः कुञ्जः सर्वसमृद्धिमान् ॥ २९ ॥
महामरकतैर्युक्तो मुक्तामणिद्रुमाकुलः ।
श्वेतपीतैश्च मणिभीरचितः सुफलादिभिः ॥ ३० ॥
पीठं तत्र महारम्यं नानामणिविभूषितम् ।
तत्र संराजते युग्मं तदधःस्थं द्वितीयकम् ॥ ३१ ॥
विराजन्ते महासख्यो ललिताद्याश्च तज्जनाः ।
तत्र तृतीयकं पीठं तद्यूथस्थानमुत्तमम् ॥ ३२ ॥
वासांसि दुर्लभान्येव सर्वलोके न संशयः ।
सन्ति तान्येव तत्रैव चोत्तमोपरि पीठके ॥ ३३ ॥
अधस्थादपि भव्यानि वासांसि मुनिसत्तमाः ।
ललिताद्या महासख्यः स्तुवन्त्यो राधिकायशः ॥ ३४ ॥
श्रीकृष्णस्य यशः पुण्यं गायन्ति च परस्परम् ।
ततो बहिश्च तद्यूथा गायन्ति च महात्मनः ॥ ३५ ॥

---

१ तत्राप्यष्टशता कुंजा मम दृष्टिर्मुनीश्वराः। 'तत्राप्यष्टशते कुंजे' इति च मूल पाठः। २ श्रोतुमर्हन्ति इ. मू पाठः।

गुणातीतं तु तद्धाम सुन्दरं सर्वदुर्लभम् ।
युगलं क्रीडते तत्र नित्यधाम्नि सुखास्पदे ॥ ३६ ॥
तत्रस्थं युगलं ध्यात्वा पुनरागमनं न हि ।
वैकुण्ठाद्यास्तु ते लोका गत्यागतिपरिस्तुताः ॥ ३७ ॥
न तत्पदं चागतिपरं तस्मात्सेव्यं परात्परम् ।
नातः परतरं किञ्चिल्लोके वै विद्यते ध्रुवम् ॥ ३८ ॥

॥ सनक उवाच ॥

योगीश करुणासिन्धो संसारार्णवतारक ।
किं च रूपं कथं ध्येयं ततो वद सुविस्तरात् ॥ ३९ ॥

॥ सदाशिव उवाच ॥

कृष्णस्य राधिकायाश्च ध्यानं च मुनिसत्तमाः ।
श्रूयतां श्रद्दधानेन संसारोच्छित्तिकारणम् ॥ ४० ॥
श्रीकृष्णं श्यामं पद्माक्षं किशोरं बर्हिभूषणम् ।
पीताम्बरं कुण्डलधरं वनमालाविभूषितम् ॥ ४१ ॥
वलयाङ्गदसंयुक्तं वेणुवादकरं शुभम् ।
राधा किशोरी परमा चन्द्रकोटिविडम्बका ॥ ४२ ॥
बाहुयष्ट्या विसलतां खण्डयन्तीभमस्तकम् ।
कुचाभ्यां केशपाशेन भर्त्सयन्ती तमश्चयम् ॥ ४३ ॥
ग्रीवया नीलकण्ठस्य पुच्छभागविडम्बका ।
श्रोण्या च कदलीस्तम्बं खण्डयन्ती सुखानना ॥ ४४ ॥
घ्राणाभ्यां च शुकीचञ्चुं खण्डयन्ती शुचिस्मिता ।
दाडिमीसुकणान्दन्तैः खण्डयन्त्यधरेण च ॥ ४५ ॥
बिम्बफलं परं शोभं कान्त्या सूर्यविडम्बका ।
एतादृशं द्वयो रूपं परं निर्वृत्तिकारकम् ॥ ४६ ॥
युग्ममेव हि तत्रस्थमंसोपरि बाहुपण्डितम् ।
वीक्ष्य राधां हसत्येवं कृष्णः केलिपरायणः ॥ ४७ ॥
राधिकासंमुखे स्थित्वा कुसुमानि ददाति च ।

कुसुमस्तबकान्येव पुष्पमालास्तथैव च ॥ ४८ ॥
सा च श्रीराधिका वत्स तं श्रीकृष्णं ददाति च ।
ललिताद्या महासख्यस्तद्ददन्ते द्वयोरपि ॥ ४९ ॥
अन्याश्च यूथसख्यश्च तावदन्ते विशेषतः ।
परस्परं वीक्ष्य हसिता राधाकृष्णा महाप्रभू ॥ ५० ॥
पुरुषैः सुखसंराध्यं (ध्यौ) कामिनी भावमागतैः ।
अन्यथा च न संराध्य (ध्यौ) जन्मकोटिशतैरपि ॥ ५१ ॥
मानसं च ध्रुवं चिन्त्यं सद्भक्तैः केलिपारगैः ।
सुखप्राप्यं तदा वस्तु भक्तानां विदितात्मनाम् ॥ ५२ ॥
मनसा राधिकायाश्च अभ्यङ्गोद्वर्त्तनादिकम् ।
जलं स्नानाय वासांसि विरजानि नवानि च ॥ ५३ ॥
संमार्ज्जनी केशसिध्यर्थं पुष्पाणि विविधानि च ।
सीमन्तकेषु सिन्दूरमङ्गे चन्दनमुत्तमम् ॥ ५४ ॥
भूषणानि च दिव्यानि दत्वा राधां स्मिताननाम् ।
एवं सञ्चिन्त्य कृष्णं च मुक्तो भवति वैष्णवः ॥ ५५ ॥
अधिकारस्तु तस्यैव यः स्त्रीयं च समाचरेत् ।
नान्यस्य तपसा भक्त्या दानेन क्रिययाथवा ॥ ५६ ॥
योगेनान्येन केनापि न प्राप्तिस्तत्पदस्य च ।
तस्मात्तदेव कर्तव्यं भवद्भिर्मुनिसत्तमाः ॥ ५७ ॥
इदमेव हि सर्वस्य संसारार्णवपातिनः ।
शरणं सर्वजीवस्य सुखं संसृतिध्वंसकम् ॥ ५८ ॥

॥ सनक उवाच ॥

किं यशो राधिकायाश्च कृष्णस्य वद नः प्रभो ।
कथं ता व्याहरन्तश्च कथं ज्ञातं मखीश्वरैः ॥ ५९ ॥
तत्रस्थं वा बहिस्थं वा तद्वदस्व महाप्रभो ।
तद्रहस्यं च सर्वं त्वं जानासि च महाप्रभो ॥ ६० ॥

॥ सदाशिव उवाच ॥

मुनयः साधवः श्रेष्ठाः सावधाना भवन्तु वै ।
मया च कथ्यते नोक्तं गुह्यं तत्पर्वतात्मजाम् ॥ ६१ ॥
अनादिकुशलं युग्ममेकमेव द्विसंज्ञिकम् ।
राधाभिधा च कृष्णस्य देहौ द्वौ तिष्ठतः पृथक् ॥ ६२ ॥
राधा च सर्वतो वीक्ष्य द्वावेवाहं न कश्चन ।
स्वकण्ठे पुष्पमाला या तामुत्तार्य करे धृता ॥ ६३ ॥
उत्तिष्ठ बाले भद्रे त्वं ललिते ललितगायने ।
इत्युक्तायां तु तस्यां सा बाला समभिपद्यत ॥ ६४ ॥
रुचिरा दिव्यभूषाढ्या राधेति जपति मुहुः ।
जग्राह वचनं रम्यं राधिकायाः समीपतः ॥ ६५ ॥

॥ ललितोवाच ॥

स्वामिनि त्वं हि दासीं मां स्वकीयां विद्धि भामिनि ।
तत्सख्योन्याश्च दास्यश्च कार्या वै तु त्वयानघे ॥ ६६ ॥
यतस्ताभिः समं वार्ताः करोमि युवयोः शुभाः ।
इति तद्वचनं रम्यं श्रुत्वा वचनमब्रवीत् ॥ ६७ ॥

॥ श्रीराधोवाच ॥

इमाः सख्यस्ते रुचिरे त्वं पश्य रुचिराननाः ।
उत्पादितास्ता आदाय इयं वामे करे स्थिता ॥ ६८ ॥
विशाखा विजया नन्दा जयन्ती च जया तथा ।
सुमुखा सुभगाश्चैव वार्तां कथय सुव्रते ॥ ६९ ॥

॥ ललितोवाच ॥

क्रीडां विनाहं युवयोः कथं वक्तुं क्षमा भवे ।
तस्मात्कुरुष्व लीलां त्वं यतो वार्ता सुखप्रदा ॥ ७० ॥
आधार एव क्रीडा नः परः सर्वार्थसाधकः ।
तस्मात्क्रीडा तु सङ्कार्या युवाभ्यां च पुनः पुनः ॥ ७१ ॥

॥ राधोवाच ॥

कुरुध्वं मण्डलं यूयं मध्ये तिष्ठामि युष्मकम् ।
भवद्भिः भ्रमाः कार्या आवयोश्च पुनः पुनः ॥ ७२ ॥
अहं कृष्णश्च युग्मं तु कुर्वे रासक्रियां शुभाम् ।
ततश्चकार वै रासं पुनरभ्यन्तरे ययौ ॥ ७३ ॥
चक्रे युग्मेन केलिर्हि महत्यानन्दमयी ध्रुवा ।
तत्र जातो महारावः स एव ब्रह्मसंज्ञकः ॥ ७४ ॥
ततो जातस्तु पुरुषः सुशुद्धः प्रकृतेः परः ।
ततः प्रकृतिपुरुषौ ततो नारायणः परः ॥ ७५ ॥
तन्नाभिकमलाज्जातो ब्रह्मा ब्रह्मविदां वरः ।
ततो रुद्रः सप्तपुत्रा ये जाताः सृष्टिकृत्तमाः ॥ ७६ ॥
तत्सृष्टौ बहवो जीवाः केचिद्विष्णोरुपासकाः ।
केचिच्च प्रकृतौ लीना जडास्ते नष्टचेतनाः ॥ ७७ ॥
केचिद्रुद्रे रवौ वह्नौ रौद्रे शक्तौ तथापरे ।
अन्ये कर्मरता जीवा भ्रमन्ति च मुहुर्मुहुः ॥ ७८ ॥
एवद्रस्तु न जानन्ति ध्येयाधारपरं शुभम् ।
विलोक्य जन्तून्सम्भ्रान्तान्दुःखितान् भुवनेषु च ॥ ७९ ॥
ततो निगदितं सख्या ललितं वाक्यमुत्तमम् ।
ललितं मधुरं चैव सर्वलोकहिते रतम् ॥ ८० ॥

॥ ललितोवाच ॥

देवदेवेशकरुणे संसारे नष्टचेतने ।
अन्यान्देवानुपासन्ते युष्मत्पादपराङ्मुखाः ॥ ८१ ॥
सा क्रिया च त्वया कार्या यया मुक्ता भवन्ति ते ।
वृन्दावनस्य सम्प्राप्तिर्यतस्तेषां भवेद्ध्रुवा ॥ ८२ ॥

॥ राधोवाच ॥

मया च क्रियते केलिः श्रीकृष्णेन समं सखि ।
सैव केलिर्जनानां च वृन्दावनप्रदायिनी ॥ ८३ ॥

॥ ललितोवाच ॥

भवद्भिः क्रियते केलिर्महती रहसि प्रिये।
सा च न ज्ञायतेऽस्माभिस्ततः कार्या स्फुटा प्रिये ॥ ८४ ॥
इति सम्प्रार्थिता राधा करुणामूर्तिरव्यया।
चकार कौतुकं रम्यं सखीनामग्रतः स्फुटम् ॥ ८५ ॥
इति सङ्गुह्य वचनं मौनतां प्राप शङ्करः।
पुनस्तस्य वचः श्रोतुं सनको वाक्यमब्रवीत् ॥ ८६ ॥

॥ सनक उवाच ॥

सखीनामग्रतो नूनं किं चकार महाद्भुतम्।
ततस्त्वं कृपया ब्रूहि तव दासा वयं प्रभो ॥ ८७ ॥

॥ शिव उवाच ॥

वदामि मुनिशार्दूल रहस्यं वागगोचरम्।
तस्मिन्पीठे स्थिता राधा श्रीकृष्णश्च महाप्रभुः ॥ ८८ ॥
राधावक्त्रस्य बिम्बं तु वीक्ष्य कुञ्जमणौ स्मितम्।
ददर्श भूयो भूयः स जहासानन्दसागरः ॥ ८९ ॥
दृष्ट्वा श्रीराधिका कान्तं वक्त्रबिम्बकृतेक्षणम्।
स्थिता सखी वचनार्थं चकार कौतुकं महत् ॥ ९० ॥
तत्कुञ्जपीठं सन्त्यज्य गतान्यस्मिन्निकुञ्जके।
कृष्णः।सम्वीक्ष्य पार्श्वं स्वं शून्यं राधिकया युतम्॥९१॥
निमेषमात्रं संजातं निजगाद महाप्रभुः।
क्वासि राधे मम प्राणे जीवितेशि स्मितानने ॥ ९२ ॥
वृन्दावनं विना त्वत्तो निकुञ्जा विविधाः प्रिये।
सर्वे शून्या इवाभान्ति तमोरूपाः सुदुःसहाः ॥ ९३ ॥
पुष्पाणां च लता मह्यं पीडयन्ति सुगन्धकैः।
पक्षिणश्च कलै रावैर्भ्रमराः पीडयन्ति माम् ॥ ९४ ॥
त्वां विना ललिताद्या मां पीडयन्ति च कातराम्।
न विषेहे महादुःखं विना त्वां राधिकेऽद्भुतम् ॥ ९५ ॥

निजगाद सखीं वाक्यं पूर्वोक्तं दुःखसागरः ।
विह्वलो भगवान् जातो राधादर्शनलालसः ॥ ९६ ॥
॥ श्रीकृष्ण उवाच ॥
ललिते सखीवरे श्रेष्ठे राधास्थानज्ञके शुभे ।
ममैव तुल्यदुःखज्ञे सर्वसिद्धिवि(दि)दप्रिये ॥ ९७ ॥
वद त्वं राधिका कुत्र मम प्राणेश्वरी प्रभो ।
तां विनाहं कथं जीवे तामानय प्रियां मम ॥ ९८ ॥
इति तत्क्रन्दितं वाक्यं विस्मिता नष्टचेतना ।
श्रुत्वा जगाद वचनं गद्गदं विकलं स्वरम् ॥ ९९ ॥
हे कृष्ण राधिकानाथ राधिकाकान्तिवर्धन ।
राधा तव प्रिया दे(व)वी स्थितात्रैव समीपतः ॥ १०० ॥
गच्छामि त्वां समासाद्य राधिकां स्वामिनीं पराम् ।
आनयामि तवाभ्याशे दुःखं मा वह माधव ॥ १०१ ॥
ललिता च गता तत्र सखीश्रेष्ठा निराकुला ।
अन्वेषयन्ती सा कुञ्जान्वाटिकामार्गस(लं)ञ्चरान् ॥ १०२ ॥
न ददर्श ततो राधां विह्वला कृष्णचिन्तया ।
पुनरागत्य कृष्णस्य सन्निकृष्टे जगाद सा ॥ १०३ ॥
॥ ललितोवाच ॥
सर्वे कुञ्जा मया दृष्टा न प्राप्ता सा वराङ्गना ।
न जानामि स्थिता कुत्र राधिका तव वल्लभा ॥ १०४ ॥
श्रुत्वा कृष्णस्तु तद्वाक्यं विस्मितो हर्षमानसः ।
पुनर्जगाद वचनं ललितायै परिस्फुटम् ॥ १०५ ॥
॥ श्रीकृष्ण उवाच ॥
ललिते सखीवरे श्रेष्ठे शृणुष्व वचनं मम ।
एकतोहं गमिष्यामि सखीभिः सह संवृतः ॥ १०६ ॥
एकतस्तु च त्वं याहि राधिकान्वेषणे वरे ।
यस्मिन्मार्गे गतः कृष्णस्तस्मिन्किमपि कौतुकम् ॥१०७॥

तच्छृणुष्व महाभाग श्रोतव्यं सादरेण ते ।
दृष्टाश्च विविधाः कुञ्जा न प्राप्ता सा यदा मुने ॥१०८॥
तदा कृष्णेन सख्यस्ता उक्ताः सर्वा गतस्मयाः ।
रासोल्लासं महाकार्यं कुरुध्वं च सखीवराः ॥ १०९ ॥
अनेन तस्यागमनं भविष्यति न संशयः ।
रासोल्लासे च संरब्धे यदा सा नाययौ शुभा ॥ ११० ॥
तदा सखीभिः सन्त्यक्तं(संप्रष्टं)गतहर्षातुरं स्फुटम् ।
जगाद वचनं कृष्णः सखीः प्रति वनान्तरे ॥ १११ ॥
वनं दुःखस्वरूपं मे भवन्त्यो दुःखवर्द्धिकाः ।
मनोभवेन सन्दग्धे मयि सर्वं हि दुःखदम् ॥ ११२ ॥
ललिता नागता, कुत्र गता सापि विमुच्य माम् ।
अन्वेषयन्ती सा देवी ललिता गतविस्मया ॥ ११३ ॥
आश्रुत्य वचनं दुःखं कृष्णेनोक्तं पुरः सताम् ।
राधिकाध्यानसंस्थाना राधिका कृष्णवल्लभा ॥ ११४ ॥
हसन्ती वीक्ष्य सन्तुष्टा पार्श्वकुञ्जकृतालया ।
ध्यानं त्यक्त्वा तु सा देवी गता तस्मिन्निकुञ्जके ॥११५॥
ददर्श राधिकां तुष्टा स्थितां कुञ्जे सुशोभने ।
प्रणम्य शिरसा राधां सखी वचनमब्रवीत् ॥ ११६ ॥

॥ सख्युवाच ॥

श्रीकृष्णस्य प्रिये राधे कृष्णेशे कृष्णवल्लभे ।
तव विश्लेषतो दुःखी कृष्णः क्षेममयः सदा ॥ ११७ ॥
वृन्दावनं च कुञ्जानि लतावल्ल्यः सुपक्षिणः ।
चञ्चुरीयाहं मकुला मयूराः शितिकण्ठकाः ॥ ११८ ॥
सर्वे ते दुःखदा मह्यं विनाराधांघ्रिपद्मतः ।
तस्या वाक्यं समाकर्ण्य राधिका कृष्णवल्लभा ॥११९॥
जगाद वचनं रम्यं ललितायै स्मिताकुला ।
मनःप्रिया मानवती राधिका रससाधि(सारि)का ॥१२०॥

॥ राधोवाच ॥

गच्छ त्वं ललिते भद्रे यत्र कृष्णो मम प्रियः ।
वद त्वं च ममैवोक्त्या कृष्णं मे प्राणसन्निभम् ॥ १२१ ॥
तव दुःखेन दुःखा सा ह्यागन्तुं कृष्ण न क्षमा ।
सर्वा वार्ता मया प्रोक्ता दुःखात्तव महाप्रभो ॥ १२२ ॥
इदानीं राधिकागन्तुं न समर्था तवान्तिकम् ।
त्वयैव गमनं कार्यं यत्र राधा स्थिता वने ॥ १२३ ॥
पूर्वभूतां च संक्रीडां स्मरन्ती तव(त्वयि)चित्तका ।
तस्या वाक्यं समाकर्ण्य गता सा कृष्णसन्निधौ ॥१२४॥
कृष्णस्तद्वाक्यमाकर्ण्य सुशोचानीव मोहितः ।
ललिते सखीवरे श्रेष्ठे दुःखं प्राप्ता मम प्रिया ॥ १२५ ॥
म(त)च्चिन्तया मम प्राणा मच्चित्ता दुःखितोऽप्यहम् ।
नैव गन्तुं क्षमो भद्रे राधिकापादपद्मतः ॥ १२६ ॥
यदा श्रीराधिकापादपद्मयुग्मस्य दर्शनम् ।
भविष्यति सखीश्रेष्ठे तदा गन्तुं क्षमो भवेत् ॥ १२७ ॥
त्वं गच्छ यत्र श्रीराधा मम प्राणेश्वरी स्थिता ।
वचनं वद कृष्णोऽपि गन्तुं तत्र न वा क्षमः ॥ १२८ ॥
कृष्णस्य वचनं श्रुत्वा गता यत्र प्रिया स्थिता ।
तस्य तद्वाक्यमाकर्ण्य सा जगाद सखीवरा ॥ १२९ ॥
कृष्णोऽपि दुःखितः कान्ते सोऽपि गन्तुं न वा क्षमः ।
इति तद्वाक्यमाकर्ण्य सखीं प्रति जगाद सा ॥ १३० ॥

॥ राधोवाच ॥

कृष्णदुःखेन दुःखाहं कृष्णः प्राणो हि जीवनम् ।
कृष्णचिन्तां समाकर्ण्य कथ गन्तुं क्षमा प्रिये ॥ १३१ ॥
राधिकावचनं श्रुत्वा कृष्णं प्रति ययौ पुनः ।
त्वच्चिन्ताव्याधिदुःखेन दुःखिता राधिका प्रिया ॥१३२॥
सा गन्तुं न समर्था च कन्दर्पशरपीडिता ।

श्रीकृष्णोऽप्याह तां वाचं गच्छानय मम प्रियाम् ॥१३३॥
तस्या वियोगदुःखेन गमनेहं न वा क्षमः ।
सा गत्वा चाब्रवीदेवं प्रेषिता कृष्णसन्निधौ ॥ १३४ ॥
तस्या वाक्यं समाकर्ण्य गता सा कृष्णसन्निधौ ।
जगाद वचनं रम्यं कृष्णं प्रति सखीवरा ॥ १३५ ॥
राधया प्रेषिता सुभ्रुर्ललिता ललना वरा ॥ १३६ ॥

॥ ललितोवाच ॥

कृष्ण कृष्ण प्रियाप्राण राधिका तव वल्लभा ।
त्वया वै मानिता नित्यं त्वां विना विललाप ह ॥१३७॥
सा गन्तुं न समर्था च त्वं पाहि करुणालयः ।
तथा तद्वचनं श्रुत्वा प्रोवाच जगदीश्वरः ॥ १३८ ॥

॥ श्रीकृष्ण उवाच ॥

गच्छ भद्रे प्रियाप्राणचिन्ताध्वंसकरेनघे ।
त्वया वाच्यं राधिकायाः कृष्णश्चिन्तासमाकुलः ॥१३९॥
आगन्तुं न समर्थः स त्वं गच्छ कमलानने ।
रा(धा)जकुञ्जे स्थिता यत्र सा ददर्श न राधिकाम् ॥१४०॥
विस्मिता सा सखीश्रेष्ठा पुनः कृष्णस्य सन्निधौ ।
जगाम राधिकाकान्तं न ददर्श सखीवरा ॥ १४१ ॥
चिन्तयामास किं जातं न सा प्राप्ता न स प्रभुः ।
कुञ्जे कुञ्जे सखीश्रेष्ठान्वेषयन्ती गतस्मया ॥ १४२ ॥
पुनः कुञ्जवरे युग्मं सा ददर्श सखीवृतम् ।
विलोक्य विस्मयं प्राप्य किं जातं कौतुकान्वितम् ॥१४३॥
राधा विस्मायितां दृष्ट्वा ललितां (ला)लितभाषिणीम् ।
उवाच मधुरां वाणीं ललितां हर्षवर्द्धिनीम् ॥ १४४ ॥

॥ राधोवाच ॥

ललिते सखीवरे श्रेष्ठे यदुक्तं पूर्वं एव हि ।
कथं मर्त्या विमुच्यन्ते संसारसर्पदंष्ट्रकात् ॥ १४५ ॥

तदर्थं निर्मिता केळिरनघाम्मिस्तु मत्पदे ।
यो मर्त्यश्चिन्तयेन्नूनं केळिनिर्ग(निग)मनं मम ॥ १४६ ॥
स सम्प्राप्स्यति मद्धाम वितर्को नात्र कश्चन ।
राधावाक्यं समाकर्ण्य हर्षिता प्रेमवर्द्धिनी ॥ १४७ ॥
एतच्चरित्रं गुह्यं च न विख्यातं मया क्वचित् ।
कुर्वन्तु धामसिद्ध्यर्थं केळेश्चिन्तामनुत्तमाम् ॥ १४८ ॥
इत्युक्त्वा शङ्करो नूनं मौनतां प्राप विस्मितः ।
पुनः प्रश्नाय तेषां च ध्यातवान् युगळं स्फुटम् ॥१४९॥

॥ सनक उवाच ॥

देवेश भक्तशरण त्वं वदस्व दयानिधे ।
कन्दर्पेण कथं तत्र गतं पुरुषदुर्लभम् ॥ १५० ॥

॥ सदाशिव उवाच ॥

कन्दर्पो नास्ति रुद्रघ्नो मनोभव इतीर्यते ।
ध्यानेन दृश्यते रूपं प्रत्यक्षेण न वा मुने ॥ १५१ ॥
राधिका कृष्णरूपं च कृष्णो राधास्वरूपकम् ।
उभौ तौ प्रेमसम्बद्धौ न कामेन कदाचन ॥ १५२ ॥
परस्परं मनोवृत्तिः स्वातन्त्र्येणैव जायते ।
न भिन्नेनापि कामेन सहजप्रेमवर्धनम् ॥ १५३ ॥

॥ इति श्रीसनत्कुमारसंहितायां शिवसनकसंवादे
एकत्रिंशः पटलः ॥ ३१ ॥

---

## अथ द्वात्रिंशः पटलः ॥ ३२ ॥

॥ सनक उवाच ॥

देवेश करुणासिन्धो मथुरामण्डळे वरे ।
वृन्दावनं नाम वनं (नं) कुतो जातं वद प्रभो ॥ १ ॥

॥ सदाशिव उवाच ॥

वृन्दावनस्य पीठाद्यं(द्यो-धो)वृन्दानन्दनमुच्यते ।
पीठस्य क(कि)रणैर्जातं मथुरामण्डळं परम् ॥ २ ॥

तत्समो नास्ति तीर्थौघो न च वैकुण्ठ एव च ।
किमन्ये तीर्थस्य गणा अन्धकूपसमा मुने ॥ ३ ॥
मथुरामण्डलं रम्यं सर्वतीर्थोत्तमोत्तमम् ।
तत्र वृन्दावनं रम्यं पञ्चयोजनविस्तृतम् ॥ ४ ॥
प्राणत्यागं च ये मर्त्यास्तत्त्वज्ञास्तत्त्वदर्शिनः ।
कुर्वन्ति च वने पुण्ये प्राप्नुवन्ति पदं शुभम् ॥ ५ ॥

॥ सनक उवाच ॥

भक्तनाथ सतां नाथ कथयस्व दयानिधे ।
वृन्दावने वरे पुण्ये यमुना वर्तते नवा ॥ ६ ॥
वर्तते चेत्कथं जाता विश्वकर्मविनिर्मिता ।

॥ शिव उवाच ॥

शृणुष्व भक्तशार्दूल मङ्गलं यमुनावृतम् ॥ ७ ॥
राधया च कृता केलिः श्रीकृष्णेन समं शुभा ।
ततः प्राप सखीश्रेष्ठा ललिता वाक्यमब्रवीत् ॥ ८ ॥

॥ ललितोवाच ॥

युवयोर्वेक्रसञ्जाताः केलिश्रमकरणाः शुभाः ।
अतः सञ्जायते नूनं तटिनी कापि चोत्तमा ॥ ९ ॥
सर्वैः सखीगणैः पेयं त्वं प्रसीद कुरुष्व च ।
इदमेव परं पुण्यं युवयोः केलिजं जलम् ॥ १० ॥
तस्यास्तद्वाक्यमाकर्ण्य सा चकार नदीं वराम् ।
यमस्य युगलस्यैव केलिजाता नदी वरा ॥ ११ ॥
यमुनेति च विख्याता सर्वलोकेषु पापहा ।
सापि वृन्दावनाभ्यर्णे विलसन्ती विराजते ॥ १२ ॥
तदम्बुकणिकानां च सूक्ष्माणां मुनिसत्तम ।
स(सं)पातनाद्यस्य पुण्यं कालिन्दीं प्राप संज्ञिकाम् ॥ १३ ॥
यमुनेति तस्याः सञ्जातं नाम विप्रगुणाश्रयम् ।
न यमुनासमा गङ्गा न कावेरी सरस्वती ॥ १४ ॥

न सर्वतीर्थं तद्योग्यं न ध्यानं न तपो व्रतम् ।
न चान्यदेवता सर्वा विष्णुब्रह्मादयस्तथा ॥ १५ ॥
यत्र तु स्नानमात्रेण तद्धामार्हो भवेन्नरः ।
सर्वधर्मान्परित्यज्य देवान्विष्णुं च दैवतम् ॥ १६ ॥
तदा च तत्पदप्राप्तिः सुखेनैव भवेन्नृणाम् ॥ १७ ॥

॥ सनक उवाच ॥

महादेव महानाथ संसारार्णवतारक ।
त्वं वदस्व क्षमासिन्धो कथानां गतिमुत्तमाम् ॥ १८ ॥
कति संख्या ललितायाः यूथे सख्यः शुभाननाः ।
विशाखाविजयायाश्च जयन्त्याश्च तथैव च ॥ १९ ॥
अन्यासां च यूथगतिं वदस्व कृपया प्रभो ।
सखीनां भिन्नतो ध्यानमेकतो वा सदाशिव ॥ २० ॥
पूजनं च कथं कार्यं राधाकृष्णस्य च प्रभो ।
सखीनां चैव यूथानां पूजनं कर्मध्वंसकम् ॥ २१ ॥

॥ शिव उवाच ॥

ललिता सखीनां मुख्या सा चम्पानामेति विश्रुता ।
विशाखाया महाभाग माधवी यूथमुख्यका ॥ २२ ॥
सुमुख्यः पद्मनयना यूथानां पतयः स्मृताः ।
विजयाया महादेवी जयन्त्या नित्यमङ्गला ॥ २३ ॥
नन्दायाः शोकलतिका सुभगायाश्च चन्द्रिका ।
यथा दैवतवृन्दानां पूजनं क्रियते जनैः ॥ २४ ॥
न तथा राधिकाकृष्णपूजनं मुनिसत्तम ।
श्रूयतां च यथा पूजा राधाकृष्णस्य सात्वत ॥ २५ ॥
प्रतिमा स्वर्णरूप्यस्य पाषाणस्याष्टकूटका ।
काष्ठस्य लेपिका लेख्या तद्धाम्नः प्राप्तिकारणम् ॥ २६ ॥
यथाध्यानं मया प्रोक्तं मूर्त्तिः कार्येदृशी मुने ।
मूर्तिं कृत्वा कारयित्वा सेवेत भक्तपुङ्गवः ॥ २७ ॥

न सूर्यचन्द्रयोर्ना(मा)म न शब्दस्य गृहस्य वा ।
यस्मिन्समये मूर्तिः स्यात्तस्मिन्कुरुत पूजनम् ॥ २८ ॥
प्रतिमास्थापनादिने स्नात्वा प्रातः सुमङ्गलः ।
मध्ये कार्यं महापीठं वर्तुलाकारमुत्तमम् ॥ २९ ॥
तदूर्ध्वमष्टदलं कार्यं सखीनां स्थितिहेतवे ।
ततोऽप्यष्टदलं कार्यं यूथनायकहेतवे ॥ ३० ॥
ततो बहिः षोडशदलं सखीनां स्थितिसिद्धये ।
ततो बहिर्घटस्यार्थमष्टाब्जं कारयेत्सुधीः ॥ ३१ ॥
ततो बहिश्चाष्टदलं षोडशाब्जं महाप्रभम् ।
घटान् संस्थापयेच्चाष्टौ पूजार्थं कृष्णराधयोः ॥ ३२ ॥
सहस्ररन्ध्रसंयुक्तो घटः कार्यो महामुने ।
तत्र आचमनं कार्यं वनमालिकेलिकर्तृकः ॥ ३३ ॥
हृदयाय नमः प्रोक्तं श्रीराधावल्लभाय च ।
शिरसे सखीगणप्रेमवर्द्धिने स्वाहया सह ॥ ३४ ॥
शिखायै गोपिकानाथ वषडन्तमिति स्मृतम् ।
श्रीवृन्दावनेश्वरीप्राणकवचाय स्मितभाषिणे ॥ ३५ ॥
हुं फट् वषट् च विज्ञेयमङ्गन्यासं च कारयेत् ।
एवञ्च मुनिशार्दूल करन्यासञ्च कारयेत् ॥ ३६ ॥
वर्गाद्यं(१) शान्तिसंयुक्तमिन्द्रेण च विभूषितम् ।
मृगाङ्कार्धयुतं बीजं सर्वादौ योजयेत्सुधीः ॥ ३७ ॥
राधिकेश सतां नाथ राधया प्रोषिता ह्यह ।
कृतकेले इहागच्छ प्रतिमायां कुरु सन्निधिम् ॥ ३८ ॥
इत्यावाह्य पुनः कुर्यात्स्थापनं करपृष्ठतः ।
कृष्णप्राणा इह प्राणा स्तिष्ठन्तु मुनिसत्तम ।
जीववाक्कायमनसो नयनश्रुतिघ्राणकाः ॥ ३९ ॥
जिह्वा सर्वेन्द्रियाण्येव इहागत्य सुखं चिरम् ।

१ वर्गाद्यः ककारः । शान्तिः दीर्घेकारः । इन्द्रः लकारः । मृगाङ्कोऽनुस्वारस्तस्यार्धमर्धानुस्वारः। एतत्समुदायेन "क्लीँ" इति बीजं सिध्यति ।

तिष्ठन्तु प्रतिमायां च कृष्णमूर्तौ षडङ्गकम् ॥ ४० ॥
प्रकुर्यात्प्रतिमास्नानं सहस्ररन्ध्रघटेन च।
जलपश्च भक्तशार्दूल कृष्णराधेश सत्प्रभो ॥ ४१ ॥
वृन्दावनापगास्नानं केलिश्रमनिवर्तकम् ।
तथा भवेज्जलमिदं स्नानार्हं राधिकाप्रभो ॥ ४२ ॥
स्नापयित्वा घटजलैः पुनः स्नानं च कारयेत् ।
उत्तमैर्जलैः पाद्यं च पादार्घं च तथैव च ॥ ४३ ॥
स्नानार्थं च जलं देयं वासांसि च नवानि च।
गन्धो धूपश्च दीपाद्यं नैवेद्यं विविधं मुने ॥ ४४ ॥
पूपिका पायसं रम्भाफलानि मोदकास्तथा।
द्राक्षा विविधपक्वान्नं शाकाश्च षड्रसान्विताः ॥ ४५ ॥
एवं कृत्वा च राधायाः पूजनं कारयेत्सुधीः ।
कामिनीभावमागत्य राधिका(कां)या विशालधीः ॥ ४६ ॥
कुर्याच्च प्रतिमायां वै राधिकाह्वानकं शुभम् ।
राधे कृष्णप्रिये कान्ते कृष्णेश कृष्णवल्लभे ॥ ४७ ॥
इहागच्छ स्वमूर्तौ त्वं भक्तपूजां गृहाण च।
इत्यावाह्य कृष्णप्रियां राधिकां गोकुलेश्वरीम् ॥ ४८ ॥
कृत्वा प्राणप्रतिष्ठां च षडङ्गं न्यासमेव च।
राधिकायै हृदि प्रोक्तं वनेश्वर्यै शिरस्तथा ॥ ४९ ॥
महाकेलिं च सङ्कीर्त्य केशपाशे तथैव च।
नेत्राब्जयोर्भक्तगणान्प्रीणयन्त्यै तथैव च ॥ ५० ॥
बाहुभ्यां रमयंत्येवं कृष्णं स्कन्धे च मस्तकम् ।
एवं षडङ्गं संन्यस्य कराङ्गन्यासमाचरेत् ॥ ५१ ॥
सहस्ररन्ध्रयुग्मेन कलशेन च स्नापयेत् ।
अभ्यङ्गः कार्यस्तैलेन कृत्वोद्वर्तनमेव च ॥ ५२ ॥
स्नानार्थं च जलं देयं पाद्यं पादार्घमासनम् ।
वासांसि च सुभव्यानि दत्वा कृष्णाय भक्तितः ॥ ५३ ॥

कार्यो धूपस्तथा दीपो नैवेद्यं पूर्वसंज्ञिकम् ।
केशार्थं गन्धतैलं च संमार्जन्यपि चोत्तमा ॥ ५४ ॥
(सु)मनांसि केशपाशार्थं(सी)मन्तेसिन्दूरमुत्तमम् ।
नेत्रयोरञ्जनं भव्यं (सौ)वीरं मृगमदान्वितम् ॥ ५५ ॥
उत्तरीयं नवं वासो नवीना कञ्चुकी तथा ।
नूपुरौ विमलौ तद्वद्ग्रैवेयकमनुत्तमम् ॥ ५६ ॥
कर्णयोः केसररसं दातव्यं भक्तपुङ्गवैः ।
प्रार्थना बहुकर्तव्या राधाया भक्तपुङ्गवैः ॥ ५७ ॥
राधे कृष्णप्रिये देवि सर्वेशे सर्वसुन्दरि ।
कृता पूजां गृहाणेमां राधिके भक्तवत्सले ॥ ५८ ॥
स्खलितानां यथा भूमिरवलम्बा भवेन्नृणाम् ।
शरण्येऽहं तथा यामि राधिके भक्तवत्सले ॥ ५९ ॥
ललितादीना च कर्तव्यं पूजनं कलशैः सह ।
ध्यानं प्रथमतः कार्यं पूजनं तदनन्तरम् ॥ ६० ॥
ललितायाः परं ध्यानं शृणुष्व मुनिपुङ्गव ।
बाला श्यामा विशालाक्षी रक्तवस्त्रपरिच्छदा ॥ ६१ ॥
पुष्पमालया संयुक्ता राधेति जपति मुहुः ।
ध्यानं कृत्वा मुनिश्रेष्ठ सखीमावाहयेद्वराम् ॥ ६२ ॥
ललिते सखीगणश्रेष्ठे भक्तिप्राप्तिकरेऽनघे ।
इहागच्छ प्रियापार्श्वे पूजां गृहाण सिद्धिदे ॥ ६३ ॥
आवाह्य प्राणान्संस्थाप्य गन्धादींश्च ददेत्ततः ।
स्नानं च कारयित्वा तु घटस्थेन जलेन च ॥ ६४ ॥
वृन्दावने यथापात्रं पवित्रं सर्वदुर्लभम् ।
तथा भवेद्धटजलं स्नानेन युग्मयोः शुभम् ॥ ६५ ॥
एवं सखीघटे कार्यं विशाखाध्यानमाचरेत् ।
अष्टाब्दवयो युक्तां च गौराङ्गीं वीक्ष्य राधिकाम् ॥ ६६ ॥
हसन्ती प्राप्तसम्मोहा राधाभक्तिपरायणा ।

रहःकेलिं प्रकटयन्ती रहस्तत्त्वज्ञभाषिणी ॥ ६७ ॥
पीतवस्त्रपरीधाना पीतपुष्पविभूषणा ।
ध्यात्वा भक्तेश्वरीं तां च पुनरावाहयेत्ततः ॥ ६८ ॥
विशाखे रहःकेलिज्ञे राधिकाकृतप्रेमके ।
इहागच्छ रहःस्थाने राधिकासन्निधौ वरे ॥ ६९ ॥
विजयाध्यानं महापुण्यं शृणु त्वं मुनिसत्तम ।
विजया श्यामा सुनयना गौरनीलनिचोलिका ॥ ७० ॥
नीलपुष्पमयीं भूषां धारयन्ती सितानना ।
राधाव्यजनकुर्वन्ती राधिकादत्तवाससा ॥ ७१ ॥
राधे कृष्णप्रिये कान्ते रहःकेलिकरे शुभे ।
गृह्णन्ती नामपङ्क्तीश्च तत्र आवाहयेद्बुधः ॥ ७२ ॥
विजया विजयस्थानप्रदा राधाप्रसादनः ।
इहागच्छ सखीश्रेष्ठे राधि(का)कां व्यजनं कुरु ॥ ७३ ॥
पूजां गृहाण विजये राधापार्श्वस्थि(रा)ता भव ।
दत्वा च गन्धधूपादीन्स्नानमादौ च कारयेत् ॥ ७४ ॥
नन्दाध्यानं प्रकुर्वीत नन्दावाहनमेव च ।
नन्दानन्दमयी देवी राधां वीक्ष्य महासखी ॥ ७५ ॥
श्यामा नन्दा सुनयना नीलाम्बरसमाकुला ।
नीलोत्पलाना कण्ठे च मालां धृत्वा स्मितानना ॥ ७६ ॥
गायन्ती राधिकाकेलिं रहस्था बाह्यगां तथा ।
राधिकाकेलिकमल दत्तं धारयती सखी ॥ ७७ ॥
आवाहयेत्ततो नन्दां[1]मानन्दार्थप्रकाशिकाम् ।
नन्दे आनन्ददे देवि केलिप्रज्ञकरेऽनघे ॥ ७८ ॥
इहागच्छस्व राधायाः समीपे गायनं कुरु ।
गृहाण पूजां शुभगे रहःकेल्यर्थदायिनी ॥ ७९ ॥

---

१ नन्दां मानदार्थप्रकाशिकाम् इति मूल पाठः ।

स्नानं गन्धस्तथा धूपो दीपो नैवेद्यमेव च ।
जयन्त्याश्चिन्तनं कृत्वा तत आवाहयेज्जनः ॥ ८० ॥
जयन्ती राधिकाप्रेमा क्षणविश्लेषमक्षमा ।
पुष्पाणां च मणीनां च भूषणानि विविधानि च ॥ ८१ ॥
संस्कृतैव ददन्ती(वदंती)सा राधिकानन्ददायिनी ।
किशोरी राधिकादत्तभूषा धारयति शुभा ॥ ८२ ॥
विधाय चिन्तनं पूर्वं ह्यावाहनमतः परम् ।
जयन्ति क्षणविश्लेषदुःसहे राधिकारते ॥ ८३ ॥
भूषणं प्रदृदे देवि राधायै राधिकाप्रिये ।
इहागच्छ जयन्ति त्वं पूजां राधासमीपतः ॥ ८४ ॥
गृहाण राधिकाभूषाप्राप्त श्रेष्ठे नमो नमः ।
स्नानं गन्धादिकं दत्वा जयाध्यानं समाचरेत् ॥ ८५ ॥
जया कृशोदरी बाला राधिकादर्शधारिणी ।
राधिकादत्तमुक्तानां माळां धारयती स्मिता ॥ ८६ ॥
जल्पन्ती च सखीपुञ्जे राधावक्त्रं परं सुखम् ।
क्षणे क्षणे परां शोभां धारयेत्कमलेक्षणा ॥ ८७ ॥
राधिकादर्शधरे राधादत्तमाळाधरेऽनघे ।
इहागच्छ जयश्रेष्ठे राधा दर्शय दर्पणम् ॥ ८८ ॥
गृहाण सुभगे पूजा सत्वरं कुरु सन्निधिम् ।
दत्वा गन्धादिकं सर्वं सुभगाध्यानमाचरेत् ॥ ८९ ॥
सुभगा श्यामा सदानन्दा राधादर्शनतत्परा ।
अञ्जनस्य महापात्रं धारयन्ती करे(वरे)च सा ॥ ९० ॥
नीळवस्त्रधरां बाळां तत आवाहयेन्मुने ।
सुभगे परमैश्वर्ये सौवीरोत्त्वधरेनघे ॥ ९१ ॥
इहागच्छ गृहाणेशि पूजां राधाप्रियेनघे ।
दत्वा गन्धादिकं सर्वं सुमुख्याः ध्यानमाचरेत् ॥ ९२ ॥
आवाहयेत्ततो नून सुमुखीं राधिकापराम् ।

सुमुखि त्वं महादेवि इहागच्छ शुभानने ॥ ९३ ॥
सुमुखी श्यामा पीतवासो धारयन्ती करे च सा।
नवं पुष्पं वासः शुभ्रं ददन्ती स्वामिनीपराम् ॥ ९४ ॥
नवं पुष्पं भव्यवस्त्रं ददाने सुमुखीं प्रियाम् ।
इहागच्छ गृहाणेदं पूजनं सुरदुर्लभम् ॥ ९५ ॥
एवं सखींश्च सम्पूज्य पूज्या यूथवरा सखी ।
चम्पे चम्पापुष्पधरे श्रीराधिकाप्रिये शुभे ॥ ९६ ॥
इहागच्छ गृहाण त्वं पूजनं पूजनार्हणम् ।
यथाधिपानामष्टानां ध्यानं गौरं स्मिताननम् ॥ ९७ ॥
कदलीदलानां स्तम्भाश्च कर्तव्या धामसिद्धये ।
ऊर्ध्वं वितानं कर्तव्यं मुक्ताफललतान्वितम् ॥ ९८ ॥
नानाविधैः फलैर्युक्तं नानापुष्पमयं शुभम् ।
अष्टहस्तप्रमाणं च मण्डपं धामदायकम् ॥ ९९ ॥
स्तम्भाः क्षौमयुताः कार्या वितानं क्षौमविस्तृतम् ।
तद्दिने मण्डलं कार्यं विविधं भक्तपुञ्जनैः ॥ १०० ॥
दापयेद्धनवानेवं वासांसि विविधानि च ।
दुन्दुभीनां रवः कार्यो गानं युग्मस्य चोत्तमम् ॥ १०१ ॥
औषध्यस्तत्र पातव्या सहस्ररन्ध्रके घटे ।
सुमना मुचुकुन्दस्तु बन्धुकुरञ्जनी तथा ॥ १०२ ॥
प्राचीनागरतिकारी नाना औषधयः स्मृताः ।
सातपत्रैश्च सङ्कीर्णा काला पृथ्विकरञ्जकाः ॥ १०३ ॥
सखीघटे च पातव्या औषध्यः शुभसूचकाः ।
शङ्खिनी च ग्रन्थपूर्णा मुक्तटङ्कलका जया ॥ १०४ ॥
तुण्डकेशी शालपर्णी पृष्टपर्णी तथैव च ।
सखीघटे यूथघटे पातव्या मुनिसत्तमाः ॥ १०५ ॥
अभिषेकादिने कार्या पूजा तद्धामप्रापिका ।
अन्यथा च सदा कार्यं चिन्तनं मानसं ध्रुवम् ॥ १०६ ॥
प्रत्यूषे च ततः पूजा स्वरूपस्य च राधिकाम् ।

पूजनं प्रथमतः कार्यं कृष्णस्य तदनन्तरम् ॥ १०७ ॥
नित्यपूजा च मन्त्रश्च एको नान्योत्र कश्चन।
पूर्वं बीजं समुच्चार्य व्योमशान्तिविभूषितम् ॥ १०८ ॥[1]
वह्निना प्रथमं बीजं चन्द्रयुक्तं द्वितीयकम्।
वातमेवं[2] तथा बीजं राधायै नम इत्यपि ॥ १०९ ॥
अथ राधापतेर्मन्त्रो राधाकान्तं च योजयेत्।
पूर्वोक्तबीजाग्युच्चार्य राधिकेश महाप्रभो ॥ ११० ॥
भोजनं कुरु कृपया दीनबन्धो दयानिधे।
नित्यपूजा मुनिवर कर्तव्या मुनिपुङ्गवैः ॥ १११ ॥
भाव एव प्रधानं हि न तन्त्रा(मंत्रा)मुख्यसाधनम्।
धन्यास्तेषां च पितरो मातरश्च तथैव च ॥ ११२ ॥
धन्यं कुलं कुलीनः स यशस्वी कीर्तिमान्बुधः।
योऽर्चयति राधां च कृष्णं नित्यविहारिणम् ॥ ११३ ॥
फलं तस्यैव जनको माता च धन्यतां गता।
स एव त्रिषु लोकेषु विज्ञातो मुनि(भक्त)सत्तमः ॥ ११४ ॥
यथा नदी तटे प्रेता गत्वाम्भो न पिबन्ति च।
युग्मकेलिं च संश्रुत्य मन्दभाग्या न जानते ॥ ११५ ॥
हताशया हतप्राणा गतव्रीडा मुहुर्मुहुः।
अन्यान्देवानुपासन्ते परस्थानविमोहिताः ॥ ११६ ॥
तदेव पूतं सर्वैश्च युगलस्य प्रसादतः।
भवत्येव जनानां च नान्येषां कर्म गामिनाम् ॥ ११७ ॥

॥ इति श्रीसनत्कुमारसंहितायां शिवसनकसंवादे पूजापटलो नाम द्वात्रिंशः पटलः ॥ ३२ ॥

आदितः श्लोकानां सपष्टचङ्काः ॥ २७० ॥

---

१ व्योम हकारः। शान्तिः ईकारः। वह्निः रकारः। चन्द्रः अनुस्वारः। एतत्समुदायस्तु ह्रीं इति बीजं सिध्येत।

२ वातमेव इत्यत्र 'वा तदेव' इति पाठे तच्छब्देन पूर्वोक्तं क्लीमित्याकृष्येत। वास्तवं तु भगवानेव जानाति।

# त्रयस्त्रिंशः पटलः ॥ ३३ ॥

॥ सनक उवाच ॥

देवेश करुणासिन्धो सदाशिव महाप्रभो ।
वदस्व कृपया दासान्कुत्रोत्पत्तिस्तत्र प्रभो ॥ १ ॥
महादेवो रुद्रनामा कैलासे तिष्ठति प्रभुः ।
सर्वे देवमनुष्याश्च नगाश्चान्ये तथैव च ॥ २ ॥
तमेव जानते शम्भुं तमोरूपं जगद्गुरुम् ।
स ब्रह्मसृष्टा विख्याता तदंशा भुवि विश्रुताः ॥ ३ ॥
विशोको जगतां नाथः सज्जनो जायते गुरुः ।

॥ शिव उवाच ॥

धन्या यूयं महाभागा रहस्यार्थविदः सुखाः ॥ ४ ॥
एकदा समये भक्त ललिता करुणामयी ।
सर्वं संवीक्ष्य संसारं तमोरूपं गतार्थकम् ॥ ५ ॥
राधासमीपमागत्य मधुरं वाक्यमब्रवीत् ।

॥ ललितोवाच ॥

राधिके भक्तशरणे शृणु त्वं वचनं मम ॥ ६ ॥
भ्रमन्ति सर्वे जीवाश्च विश्वार्णवतमोमये ।
तेषां क्वापि गतिर्नास्ति उपदेष्ट्रा विना प्रभो ॥ ७ ॥
पृथ्व्यां न गम्यतेऽस्माभिस्त्रिगुणा पापवर्धिनी ।
इति तद्वाक्यमाकर्ण्य सस्मिता राधिका तदा ॥ ८ ॥
उवाच सख्यै वचनं ललितायै परिस्फुटम् ।

॥ राधोवाच ॥

भविष्यति सखीश्रेष्ठे मा विलम्बोरुभामिनि ॥ ९ ॥
विस्फोटय (?) च द्वयं स्थाप्यं युग्मकं च भविष्यति ।
आगत्य च सखीश्रेष्ठा ललिता च तथाकरोत् ॥ १० ॥
अहमेकाच्च सञ्जातो द्वितीयात्पार्वती प्रिया ।
गोवर्धनोपपन्नत्वात्पार्वती पार्वतः पुमान् ॥ ११ ॥

---

१ सदा प्रभो इति मूलपाठः । २ पृथ्वी इ० पा० ।

सर्वाश्च ककुभो वीक्ष्य शून्याश्चैव भयङ्कराः।
परं सुविस्मयं प्रापदहं कः केयं भामिनी ॥ १२ ॥
तस्मिंश्च समये जाता वाणी कापि सुनिर्मला।
पुरुषस्त्वं तव भार्येयं विस्मयं प्रापतुः कथम् ॥ १३ ॥
सदाशिवस्तु ते नाम भार्येयं च शिवाह्वया।
भवन्तौ विश्वमोक्षार्थं सृष्टौ गोवर्धने वरे ॥ १४ ॥
इति वाक्यं परं श्रुत्वा परमानन्दमागतौ।
विष्णवादयस्तथा देवा इन्द्राद्या ब्रह्मणा सह ॥ १५ ॥
रुद्रसूर्यगणाध्यक्षाः स्तुतिमारेभिरे परम्।
तदा मया च संज्ञातमहं सर्वस्य कारणम् ॥ १६ ॥
देवैर्विष्णवादिभिश्चैव संज्ञातं कारणं त्वहम्।
अस्माभिः पुरुषः सोयमकारणकारणं त्वहम् ॥ १७ ॥
गोवर्धने स्थितमस्माभिः कृताः सर्वोत्तमोत्तमाः।
रहःकेलिमजानद्भिः कान्तां वृन्दावनेश्वरीम् ॥ १८ ॥
चिन्तनमजानद्भिश्चाहमभिमानशालिभिः।
तस्मिंश्च समयेऽस्माभिर्गतं यमुनातटे शुचौ ॥ १९ ॥
बहुमार्गं च सङ्गत्य ददर्श कौतुकं महत्।
एकस्तु मधुपस्तत्र परमामोदसंयुतः ॥ २० ॥
स आमोदो न भावी च न भूतश्च न वर्तते।
मयोक्तो यस्मात्संयात आमोदः कारणं स मे ॥ २१ ॥
यत्र स्थितो हि मधुपः पक्षिणो मोहमाययुः।
अहमामोदसम्मग्नो मयोक्तं प्रभुरस्ति मे ॥ २२ ॥
बहुवर्त्मनि सङ्गत्य क्षणं ध्यातं महामुने।
तस्मिन्क्षणे मया दृष्टं मुक्ताफललताकुलम् ॥ २३ ॥
मरकतैश्च संयुक्तं दिव्यं कनकभूषितम्।

---

१ परं सुविस्मयं प्रापत्कोहं केयं च भामिनी इत्यपि भवितुमर्हति।
२ पुमांस्त्वं इत्यपि स्यात्। ३ भिश्च सर्वैर्विष्णवादिभिस्तदा।

कोटिसूर्यस्य चन्द्रस्य न प्रकाशस्तथा मुने ॥ २४ ॥
यथा वने प्रकाशोऽस्ति न तथा वैकुण्ठश्वेतके[1] ।
बह्व्यः सख्यो मया दृष्टाः किशोर्यो गानतत्पराः ॥
क्षणं ध्यानं मया त्यक्तं पुनर्न ददृशे हि तत् ।
परं सुविस्मयं प्राप्तः किं जातं ज्ञानिनो मम ॥ २६ ॥
इत्युक्त्वा च मया ध्यानं चिरमानन्दसंज्ञकम् ।
बहवोऽब्दा गतास्तत्र ध्याने मयि स्थिते मुने ॥ २७ ॥
तस्मिन्नेव मया दृष्टं युगलं किमपि सुन्दरम् ।
तेनोक्तं ते मनोवृत्तिकळा कीर्णा भविष्यति ॥ २८ ॥
एतस्मिन्नन्तरे त्यक्तं मया ध्यानं युगास्पदम् ।
अविर्भावधिया भावो जातो युग्मस्य चानघ ॥ २९ ॥
अभावे युग्मस्य सञ्जाते परां पीडामवापितः ।
क्षणे तस्मिन्कुमारी च दिव्यभूषणभूषिता ॥ ३० ॥
तदागत्याब्रवीद्वाक्यं दुःसहं मम प्राणदम् ।

॥ कन्योवाच ॥

दृश्यते पुरुषश्रेष्ठ भवान्कोपि महाप्रभुः ॥ ३१ ॥
उन्मना इव कस्मात्त्वं किमर्थं स्थीयते त्वया ।
गन्तव्यं मरणे देशे मनो यत्र प्रसीदति ॥ ३२ ॥
देवतानागगन्धर्वब्रह्मापित्र्यर्षिसद्मनि ।
याहि त्वं पुरुषश्रेष्ठ प्रसन्नत्वं भविष्यति ॥ ३३ ॥
मयोक्तं वाक्यमाकर्ण्य कन्यायाश्च महामुने ।
याहि कन्येतिबाले त्वं महाबाल्यकरेनघे ॥ ३४ ॥
ज्ञातुं न योग्या महद्भिर्दुर्लभा देवता गणैः ।
यदा मे स प्रसन्नः स्यात्तदा गच्छामि कन्यके ॥ ३५ ॥
इति तद्वाक्यमाकर्ण्य किशोरी समपद्यत ।
सुमुखी पद्मिनी गौरा नानाभुषणभूषिता ॥ ३६ ॥

---

१ श्वेतद्वीपाख्यवैकुण्ठे इत्यर्थः ।

पुष्पमाल्यैश्च संयुक्ता रक्तवस्त्रपरिच्छदा ।
नीलं नीचोलं दधानः राधादत्तं महाप्रभम् ॥ ३७ ॥
राधिकानामश्रेणीं सा वदन्ती हस्तमालिका ।
उवाच मधुरां वाणीं मम कर्णप्रियां मुने ॥ ३८ ॥

॥ ललितोवाच ॥

शृणु देव महादेव महाभक्त सतां प्रभो ।
ध्याने युग्मं त्वया दृष्टं प्रत्यक्षं ते भविष्यति ॥ ३९ ॥
निचोलं गृहाण भक्तेश भजनार्हो यथा भव ।
मदीयं यादृशं रूपं तादृशं चिन्तयात्मनः ॥ ४० ॥
निचोलं सन्दधे देव तत्र वृन्दावनेखिलम् ।
वस्तुज्ञानं भवेन्नूनं साध्ये किं कथयामि हि ॥ ४१ ॥
कीर्तनं च त्वया कार्यं राधास्तोत्रं पठस्व च ।
मयोक्तं राधिकास्तोत्रं कीदृशं मुनिसत्तम ॥ ४२ ॥
ललितया मम प्रोक्तं तत्स्तोत्रं शृणु पुङ्गव ।
राधे राधे च कृष्णेशे कृष्णप्राण मनोहरे ॥ ४३ ॥
भक्तधामप्रदे देवि राधिके त्वं प्रसीद मे ॥ ४४ ॥
रहःकेलिसुखस्थाने सखीप्रेमकरेनघे ।
विष्णुकर्षत्करे पुंसि राधिके त्वं प्रसीद मे ॥ ४५ ॥
भक्तानानन्दसन्दोहवर्धिनीष्येष्टचिन्तने ।
कोटिचन्द्राभसंहर्त्रि राधिके त्वं प्रसीद मे ॥ ४६ ॥
यत्पादपद्मभूशेषे रवकेलिसवो मुहुः ।
त्वं सृष्टेः कारणं ब्रह्म राधिके त्वं प्रसीद मे ॥ ४७ ॥
एकयुग्मकरः सत्यं सत्यधाम दयानिधे ।
भक्तस्थानप्रदे शीघ्रं राधिके त्वं प्रसीद मे ॥ ४८ ॥
गौराङ्गि नीलाम्बरधरे कृष्णप्रेमाऽधिकारिणे ।
पीताम्बरप्रदे कृष्णे राधिके त्वं प्रसीद मे ॥ ४९ ॥
किरीटकेयूरधरे नूपुराभातपादुके ।

नैकभूषणसंयुक्ते राधिके त्वं प्रसीद मे ॥ ५० ॥
स्वदीप्तिचान्द्रिकादीप्तं वृन्दावने सखीगणे ।
शर्मसाध्ये सतां नाथे राधिके त्वं प्रसीद मे ॥ ५१ ॥
इति गदितमनाद्यं राधिकास्तोत्रमाद्यं
सुरनरगणमुख्यैर्नागगन्धर्वसाध्यैः ।
पठितमपि रहस्यं ज्ञानिभिश्चैकवारं
नृपतिपरमसुखदे धाम्नि पूर्णे स्वभक्ताः ॥ ५२ ॥
यो ददाति वरं स्तोत्रमभक्तायार्थवादिने ।
युग्मकेल्यनभिज्ञाय स याति नरकं ध्रुवम् ॥ ५३ ॥
पठितव्यं त्वया स्तोत्रं सुखरूपं सनातनम् ।
अनेन परमा सिद्धी राधापादप्रसादतः ॥ ५४ ॥
भविष्यति सतां नाथ सदाशिव न संशयः ।
इत्युक्त्वान्तर्दधे बाला ललिता पुष्पसंयुता ॥ ५५ ॥
तदारभ्य मया सर्वं क्रियते कीर्तनादिकम् ॥ ५६ ॥

इति श्रीसनत्कुमारसंहितायां शिवसनकसंवादे त्रयस्त्रिंशः पटलः ।
॥ आदितः श्लोकानां समष्टयङ्काः ॥ ३२६ ॥

---

## चतुस्त्रिंशः पटलः ॥ ३४ ॥

॥ सनक उवाच ॥

देवेश करुणासिन्धो रहस्यार्थप्रकाशक ।
संसारे घोरनरके कालदंष्ट्रामयेऽशुभे ॥ १ ॥
प्रथमतस्तु कः प्राप्तो वृन्दावनं हि चोत्तमम् ।
विष्ण्वादिभिश्च दुर्गम्यं विना राधाप्रसादतः ॥ २ ॥

॥ शिव उवाच ॥

शृणुध्वं भक्ता भक्तेशा भक्तशार्दूलसद्गुणाः ।
मनवश्चतुर्दश प्रोक्तास्तेषु स्वारोचिषो मनुः ॥ ३ ॥
चतुर्युगद्विसप्तत्यां प्रजाकरमहाप्रभुः ।

कृत्वा बहुविधां सृष्टिं ज्ञानं जातं प्रजापतेः ॥ ४ ॥
अहं सर्वस्य कर्ता च मम ब्रह्मा प्रजापतिः ।
प्रजापतेर्जगन्नाथो नारायण इति स्मृतः ॥ ५ ॥
नारायणस्य पुरुषः पुरुषस्य जगत्प्रभुः ।
महाविष्णुः सर्वदेवेश्यस्तस्य ब्रह्मेति च स्मृतम् ॥ ६ ॥
शब्दब्रह्ममयं धाम शब्दध्यानं सुदुष्करम् ।
शब्दस्य कारणं ध्येयं शब्द उत्पद्यते यतः ॥ ७ ॥
स ( तत् ) किं वस्तु न च ज्ञातं ( तः ) किंरूपः कीदृशः परः ।
भ्राम्यन्बहुविधान्देशान्ध्यायंश्च ब्रह्मणः परम् ॥ ८ ॥
तस्मिंश्च समये राजा मथुरामण्डले ययौ ।
यमुनातटे परिभ्राम्यन्मदाश्रमं ययौ मनुः ॥ ९ ॥
वीक्ष्य काननमस्माकं परं हर्षं समागतः ।
सर्वांश्च जीवान्संवीक्ष्य राधाध्यानपरायणान् ॥ १० ॥
राधाध्यानपरं मां च दृष्ट्वा हर्षं समाययौ ।
मन्निकटं समागत्य नमस्कृत्य पुनः पुनः ॥ ११ ॥
उवाच वचनं रम्यं विनयाधारसंयुतम् ।

॥ स्वारोचिष उवाच ॥

हे देवेश वने क्षेमं वर्तते तत्र जन्तवः ॥ १२ ॥
कुशलीध्यानपूजादेरविघ्नो वर्तते न वा ।
तवानन्दमये देहे कुशलं वर्तते गुरो ॥ १३ ॥
संसारार्णवमग्नस्य जन्तोर्भद्रं हि किं प्रभो ।
विष्ण्वादीनां प्रभूराद्यः स्तुपसे त्वं च ईश्वरः ॥ १४ ॥
मया दृष्टो मुनिश्रेष्ठ सर्वभक्तोत्तमोत्तमः ।
मह्यं कुशलं ते वत्स त्वयि कुशले सर्वकौशलम् ॥ १५ ॥
आसनं च गृहाणेदं ब्रह्मणः कारकं परम् ।

---

१ भ्रमन्नित्यपि स्यात् ।

आगमनकारणं ब्रूहि मुनिश्रेष्ठ प्रजापते ॥ १६ ॥
पवित्रीकृतमस्माकं वने गेहं त्वया मुने।
॥ स्वारोचिष उवाच ॥
शब्दंब्रह्ममयं प्रोक्तं शब्दार्थस्य रहस्यगैः[1] ॥ १७ ॥
शब्दस्य कतिविधा वृत्तिः सा वृत्तिस्तु कुतः प्रभो।
उत्पादयिता कस्तस्य शब्दो नित्यो महामुने ॥ १८ ॥
शब्दस्य कारणं नित्यं किं रूपं रूपवर्जितम्।
स (तत्) किं मायामये स्थाने भिन्ने वा किं सदाशिव ॥१९॥
तस्य तद्वाक्यमाकर्ण्य हर्षितः सोऽब्रवीद्वचः।
॥ सदाशिव उवाच ॥
शृणु त्वमनवद्यस्य ब्रह्मशब्दस्य कारणम् ॥ २० ॥
तदनादियुग्मवस्तु स्त्रीपुंसश्चापि संज्ञितम्।
एकं ज्योतिःस्वरूपं च सच्चिदानन्दसंज्ञितम् ॥ २१ ॥
कारणं ब्रह्मणः साक्षात्सदसद्वस्तुनः परम्।
राधिकारूपममलं शृणु कृष्णस्य मङ्गलम् ॥ २२ ॥
श्रवणेनैव ते प्राप्तिर्भविता तत्पदस्य च ॥ २३ ॥
राधावक्त्रमृगाङ्कदीप्तिविभवां सत्फुल्लपद्मेक्षणां
केयूराङ्गदनूपुरांस्रवकरां(?)सम्भूषितां चिन्तये ॥
कृष्णं श्यामं फुल्लराजीवनेत्रं पीतं वस्त्रं सन्दधानं प्रियायाः।
नीलं वस्त्रं धारयन्तं तदूर्ध्वं केलौ रन्ध्रं कीलितं छादयन्तम् ॥२४॥
कामिनीभावमाश्रित्यं त्वया कार्यं महात्मनो।
ध्यानं युग्मस्य नित्यस्य धाम्नः प्राप्तिर्भवेन्मुने[2] ॥२५॥
शब्दस्य वृत्तिर्द्विविधा वर्णाढ्या वर्णवर्जिता।
उभयथापि सा नित्या केलेश्चैव तु योगतः ॥ २६ ॥
वर्णवृत्तिस्तु वचनैर्वर्णहीना तु भूषणैः।
वचनैर्वर्णाः सञ्जाताः सर्वं वर्णमयं जगत् ॥ २७ ॥

---

१ 'शब्दो ब्रह्ममयः प्रोक्तः' इत्यपिपाठः। २ भवेन्मनो इत्यपि स्यात्।

भूषणैर्जन्तवा जाता इति वृत्तिर्द्विधा स्मृता ।
गच्छ त्वं राधिका कृष्णभजनं कुरु महामनो ॥ २८ ॥
नमस्कृत्य गतो मह्यं मासमेकं चकार सः ।
चिन्तनं कीर्तनं केलिरहस्यं च मुहुर्मुहुः ॥ २९ ॥
सर्वं सन्त्यज्य तृणवत्स ययौ राधिकापदम् ।
चम्पानाम सखी जाता ललितायूथाधिपा शुभा ॥३०॥
अन्यच्च कौतुकं वक्ष्ये शृणु त्व मुनिपुंगव ।
एकस्तु ब्रह्मणः श्रेष्ठो मथुरामण्डले वरे ॥ ३१ ॥
वैष्णवो विष्णुतत्त्वज्ञः पण्डितो वेदपारगः ।
शार्ङ्गनामविख्यातस्तस्य पुत्रस्तु सौरकः ॥ ३२ ॥
पापात्मा पापरूपः स द्यूतकर्मविशारदः ।
वेश्यारतो मद्यपेयो गृहचौरकरोद्धतः ॥ ३३ ॥
सुशीलां रूपवतीं भार्यां त्यक्त्वा वेश्यापरायणः ।
स पितृगेहात्संगृह्य द्रव्यं वासांसि भाण्डकान् ॥ ३४ ॥
वेश्यां ददाति धूर्तः स स्त्रियं वधति सुन्दरीम् ।
यमुनापारे च सा वेश्या तिष्ठति च वराङ्गना ॥ ३५ ॥
एकदा समये सौरो द्रव्यं संगृह्य सत्वरः ।
प्रययौ वेश्यया गेहं मार्गे चौरैर्निकृन्तितः ॥ ३६ ॥
निष्कृत्य द्रव्यं संगृह्य गतास्ते तस्करा वनम् ।
स द्रव्यहीनः सौरस्तु यमुनां सन्तीर्य सद्मनि ॥ ३७ ॥
वेश्यापार्श्वे गतो मूढो मन्दात्मा मन्दबुद्धिमान् ।
द्रव्यहीनं तु तं दृष्ट्वा वेश्या रोषं समाययौ ॥ ३८ ॥
रोषं प्राप्ता तु सा वेश्या सौरं वचनमब्रवीत् ।
मन्दबुद्धे सुदुष्टात्मन् दत्तं कस्मै त्वया धनम् ॥ ३९ ॥
यस्मै दत्तं त्वया द्रव्यं तत्पार्श्वं गच्छ चाधम ।
तस्यास्तद्वाक्यमाकर्ण्य सौरश्चिन्तासमाकुलः ॥ ४० ॥
हर्षमुत्पादयन्वेश्यां मधुरं वाक्यमब्रवीत् ॥

॥ सौर उवाच ॥

मम प्राणप्रिये भार्ये कुन्दाभे कुन्ददन्तिके ॥ ४१ ॥
चौरैर्नीतं धनं मत्तो मार्गे मन्ताड्य पापिभिः।
तां हिनेमि मथुरां तं गेहाद्द्रव्यं नयाम्यहम् ॥ ४२ ॥
स्त्रीभूषणं परं दिव्यं मातुर्भूषणमेव च।
अन्यच्च विविधं वासः पात्राणि विविधानि च ॥ ४३ ॥
तस्य तद्वाक्यमाकर्ण्य वेश्या हर्ष समाययौ।
सौरं च वचनं रम्यमुवाच हतभर्तृका ॥ ४४ ॥
हे सौर त्वं महावीर महाबुद्धे मम प्रियः।
त्वं गच्छ च मया सार्द्धं मथुरां प्रति साम्प्रतम् ॥ ४५ ॥
उडुपैः कुरु सन्नाहं यतो गच्छामि माथुरम्।
उडुपे तु समारोप्य परिस्थाप्य च पांशुलाम् ॥ ४६ ॥
यमुना प्रययौ सौरो मन्दात्मा काममोहितः।
तीर्त्वा वृन्दावने स्थाप्य गेहं प्रति पुनर्गतः ॥ ४७ ॥
गत्वा सर्वं च संगृह्य प्रययौ पांशुलान्तिके।
मार्गेऽसौ भ्रातृभिर्दृष्टो मुशलैस्ताडितो भृशम् ॥ ४८ ॥
हतप्रायं च तं कृत्वा सौरं पापस्वरूपिणम्।
ततः संगृह्य द्रविणं प्रययुस्ते गृहं प्रति ॥ ४९ ॥
सौरो दुःखसमायुक्तः प्रययौ पांशुला प्रति।
दृष्ट्वा तमागतं शून्यं सौरं गृहगतं द्विजम् ॥ ५० ॥
चुक्रोध पांशुलामूला रोषाद्वचनमब्रवीत्।
हे सौर मन्ददुर्बुद्धे हतब्रह्मण्यकर्मक ॥ ५१ ॥
श्वपचकर्मार्हद्रविणं वद कुत्र स्थितं त्वया।
त्वयानीता वनेरण्ये सुकुमारातिसुन्दरी ॥ ५२ ॥
धनलोभादहं मूढा गतव्रीडा हताशया।
वद त्वमात्मना रात्रौ किं करोमि शुभानना ॥ ५३ ॥
मागच्छ त्वं मन्निकटे विना द्रव्यं तव प्रभुः।

त्वं मां धूर्त न जानासि विना द्रव्यं मया सह ॥ ५४ ॥
कः करिष्यति केलिश्च कुन्दाभां कामिनीं वराम् ।
सौरं त्यक्त्वा पुनर्गेहं प्रययौ सा वराङ्गना ॥ ५५ ॥
सर्वं च शून्यं संवीक्ष्य वनं वृन्दावनं वरम् ।
सर्वस्य कारणं सेव्य नान्यत्सेव्यं मयाधुना ॥ ५६ ॥
इति संगद्य वचनं प्रचचाल वनाद्बहिः ।
अस्माकं वचनाभ्यर्णे सुश्राव वचनं स्फुटम् ॥ ५७ ॥
तद्वनात्कश्चिज्जन्तुर्वै यमुनां च समाययौ ।
इति वाक्यं ब्रुवन्धीरो राधाभ्यर्णं स्थितैर्जनैः ॥ ५८ ॥
सर्वकर्माणि सन्त्यज्य सुखसाध्यकेलितत्परा ।
इति तद्वचनं श्रुत्वा परं हर्षं समागतः ॥ ५९ ॥
पुनरागत्य वने पुण्ये वृन्दावने स एव च ।
श्रीराधेति परं मन्त्रं राधिकाध्यानतत्परः ॥ ६० ॥
राधेति वचनं तस्य तृप्त्यर्थं राधिका जलम् ।
एकस्मिन्समये जाता वाणी द्विजवरस्य च ॥ ६१ ॥
सौर त्वं कामिनीभावं चिन्तय त्वं च मानसे ।
राधां चिन्तय द्विजश्रेष्ठ पदप्राप्तिस्तव ध्रुवा ॥ ६२ ॥
इति वाक्यं तु संश्रुत्य सौरः सूर्यप्रतापवान् ।
मासचिन्तनमात्रेण प्रययौ राधिकापदम् ॥ ६३ ॥
लवङ्गलतिका ख्याता विशाखायूथमण्डले ।
विराजते सखीश्रेष्ठा वृन्दावनपरे स्थले ॥ ६४ ॥
श्री राधाङ्घ्री संगृह्य के न मुक्ता महाजनाः ।
यथा तरौ चन्दनं च धातुषु स्वर्णमेव च ॥ ६५ ॥
पुष्पेषु च यथा चम्पा तथा नामसु राधिका ।
राधिकेति समा वेदा न पुराणं न पूजनम् ॥ ६६ ॥
न स्मृतिश्चेतिहासश्च कार्यं तीर्थादिसेवनम् ।
राधाशब्दमहस्राशं न भजन्ति कदाचन ॥ ६७ ॥

राधिका परमो मन्त्रो राधिका परमं तपः ।
राधिका परमं जाप्यं परो धर्मस्तु राधिका ॥ ६८ ॥
राधिका च परं ज्ञानं राधिका मुक्तिरेव च ।
वक्त्रकोटिसहस्रैस्तु जिह्वाकोटिशतैरपि ॥ ६९ ॥
न शक्तो राधिकां स्तोतुं जन्मकोटिशतैरपि ।
किंचित्स्वतः श्रुतं किंचित्कथ्यते मुनिसत्तम ॥ ७० ॥
सदाशिवस्य वचनं श्रुत्वा हर्षं समागतः ।
उवाच वचो मधुरं सनको भक्तपुङ्गवः ॥ ७१ ॥

॥ सनक उवाच ॥

स्मरणं कुत्र कर्तव्यं भूमौ वद सदाशिव ।
यत्र संस्मरणात्सिद्धिर्मानवानां भवेद्ध्रुवम् ॥ ७२ ॥

॥ शिव उवाच ॥

गोवर्धनाद्यमुनान्तं पश्चिमे योजनत्रयम् ।
उत्तरे दक्षिणे भागे योजनद्वयमुच्यते ॥ ७३ ॥
तत्र स्मरणमात्रेण सिद्धिर्नूनं भवेद्ध्रुवम् ।
भूमौ च जीवसिद्ध्यर्थं रचितं वृन्दावनस्थलम् ॥ ७४ ॥
अन्यभूमौ न सहसा यथा वृन्दावने वरे ।
जायते तत्पदं सम्यगाचारेण सुखेन च ॥ ७५ ॥
सर्वं सन्त्यज्य गार्हस्थ्यं सर्वतीर्थगणं तथा ।
वृन्दावनं सदा सेव्यं यदिच्छेच्छुभमात्मनः ॥ ७६ ॥

इति श्रीसनत्कुमारसंहितायां शिवसनकसंवादे
चतुस्त्रिंशः पटलः ॥ ३४ ॥

आदितः श्लोकानां समष्ट्यङ्काः ॥ ४०३ ॥

# पञ्चत्रिंशः पटलः ॥ ३५ ॥

॥ सनक उवाच ॥

हे देवेश भक्तवर कृपया वद शङ्कर ।
नन्दगोपस्य गेहे च वृषभानोर्द्विजस्य च ॥ १ ॥
वसुदेवस्य गेहे कः को जातः पुरुषः परः ।
युग्ममेव च सजातं वृन्दावने किमु तिष्ठतः ॥ २ ॥

॥ सदाशिव उवाच ॥

नन्दस्य गेहे सञ्जातं कृष्णांशं तु तुरीयकम् ।
वसुदेवेन श्रीकृष्ण आराधितोन्यसंज्ञया ॥ ३ ॥
यथा चतुर्भुजो विष्णुस्तथा कोशः परः पुमान् ।
सोपि चतुर्भुजो ध्येय इति मोहेन मोहितः ॥ ४ ॥
त्रिभिः पूर्वं कृतं ध्यानं यथापूर्वं शृणोति च ।
पूर्वजन्मनि नन्दोभूद्वसूनां मुख्यनायकः ॥ ५ ॥
धरया भार्यया युक्तो मान्यो देवगणैर्वरैः ।
द्रोणो नाम सुविख्यातः सुयशाः कीर्तिमान्बुधः ॥ ६ ॥
सावर्णिके मनुश्रेष्ठ द्रोणश्चिंतयते धृतिम् ।
सर्वा सृष्टिस्तु सञ्जाता यस्मादानन्दलक्षणा ॥ ७ ॥
पत्नीं विना यतः सृष्टिः सञ्जाता जायते ध्रुवम् ।
ब्रह्ममूलं तु यद्वस्तु यद्ध्यातं विश्वपारगैः ॥ ८ ॥
तदेवाराधनं यन्मे स्वाङ्के क्रीडार्थमेव च ।
स प्रसन्नो दयालुर्मे मनोरथाप्तिसिद्धये ॥ ९ ॥
करिष्यति न सन्देहः सच्चिदानन्दरूपधृक् ।
तेन वसुना सन्ध्यातः श्रीकृष्णो राधिकां विना ॥१०॥
कल्पमेकं तपस्तेपे कृष्णनिष्ठो महामनाः ।
देवतानां भयङ्कारं विष्णवतीव भयङ्करम् ॥ ११ ॥

तस्मिन्समये सञ्जाता भारती कापि निर्मला।
वसुश्रेष्ठ महाभाग सर्वदेवेड्य सात्वत ॥ १२ ॥
द्वापरान्ते ते गेहे रंस्याम माथुरे पुरे।
तपसा ते सिद्धिर्जाता तपो मा कुरु सात्वत ॥ १३ ॥
आकाशभारतीं श्रुत्वा हर्षं प्राप्तोऽतुलं वसुः।
ननाद हर्षसंविष्टो महाभागो महायशाः ॥ १४ ॥
तस्य नादं च संश्रुत्य देवा विस्मयमाययुः।
कस्यैवायं महारावो ब्रह्मणः शङ्करस्य वा ॥ १५ ॥
विष्णोरिन्द्रस्य वा स्रष्टुर्न शक्यश्चागतः कुतः।
कश्चिन्महाबलो जातः सर्वदेवजिगीषया ॥ १६ ॥
देवाः सञ्चित्य सञ्जग्मुः सुमेरु पर्वतं प्रभुम्।
तत्र गत्वा ते ददृशुर्द्रोणं च वसुनायकम् ॥ १७ ॥
ऊचुश्च वचनं केन ह्यारवः कृत एव मः।
देवैर्न शक्यते कर्तुं सर्वैर्विष्ण्वादिभिस्तथा ॥ १८ ॥

॥ द्रोण उवाच ॥

मया कृतो महारावः सर्वविस्मयकारकः।
आनन्दाद्धि मया ह्याशु प्रभावाद्देवतागणाः ॥ १९ ॥
न शक्यः कर्तु केनापि तत्कृपातो विनामराः।
यूयं प्रकृतिगुणोपेताः सत्त्वहीनाद्व्याश्रिताः ॥ २० ॥
सत्त्वनिष्ठो महाविष्णुर्न तज्जानाति सर्वशः।
इत्युक्त्वा वचनं तेषामन्तर्धानो बभूव ह ॥ २१ ॥
द्रोणो नन्दो महाकीर्तिर्यशोदा सा यशस्विनी।
तयोर्योगे च सञ्जातः कृष्णांशः कृष्णरूपधृक् ॥ २२ ॥
वृषभानुर्द्विजवरो नाम्नासौ पूर्वजन्मनि।
वेदाध्ययनरतो विद्वान्द्विजकर्मपरायणः ॥ २३ ॥
वाजपेयाः कृतास्तेन तथान्ये यागाश्च दुष्कराः।
रुद्रपूजारतो द्वेषी विष्णुभक्तस्य चाधमः ॥ २४ ॥

विष्णोर्विनिन्दको मूढो रहस्यश्रुतिभेदकः ।
जल्पति शिष्यवरान्मन्दो वेदैस्तु कथ्यते मखः ॥ २५ ॥
मखहीनो हि विप्रस्तु शूद्रत्वं याति निश्चयः ।
इति संश्रुत्य वेदास्तु चुक्रुधुस्तं द्विजाधमम् ॥ २६ ॥
धृत्वा ब्राह्मणरूपं त्वं बभूवे (?) तु द्विजाधमम् ।
प्रत्यक्षं क्रोधसंयुक्ताः क्रोधरक्तेक्षणा वचः ॥ २७ ॥
ऊचुर्द्विजवरं विप्र किं कृतं च त्वयाधम ।
वयमानन्दसंयुक्ता आनन्दार्थप्रवर्तकाः ॥ २८ ॥
आनन्दार्थवचोयुक्ता आनन्दे केलिभाषिणः ।
यैर्हि न ज्ञायतेस्माकं रहस्यं नष्टबुद्धिभिः ॥ २९ ॥
तैर्हि व्याख्यायते मन्दैः पद्धतिर्ज्ञानकर्मणोः ।
नैव कर्मविदो वेदा न च ज्ञानविदस्तथा ॥ ३० ॥
राधिकापादपूजादिविदो वेदा वयं मुने ।
राधिकाभजनं कार्यं शीघ्रं द्विजवर त्वया ॥ ३१ ॥
तदा ते सिद्धिरतुला भविष्यति न संशयः ।
कामिनीभावमाश्रित्य भजनं कुरु द्विजर्षभ ॥ ३२ ॥
इत्यन्तर्दधिरे वेदा उक्त्वा वाक्यं द्विज प्रति ।
तस्य ज्ञानं तु सञ्जातं सत्यमुक्तं न संशयः ॥ ३३ ॥
तदा द्विजवरो धन्यो राधामङ्क नयाम्यहम् ।
इति प्रतिज्ञां महतीं कृत्वा दध्यौ च राधिकाम् ॥ ३४ ॥
कामिनीभावमाश्रित्य वाणी व्योममयी द्विजम् ।
जाता द्विजवरश्रेष्ठ सफलस्ते मनोरथः ॥ ३५ ॥
द्वापरान्ते च रंस्यामि त्वं प्राप्स्यसि परं ध्रुवम् ।
वृषभानुर्द्विजवरः कीर्तिर्भार्या व्यजायत ॥ ३६ ॥
कश्यपोदितिसंयुक्तो ब्रह्मपुत्रो व्यचिंतयन् ।
अनादिपुरुषः कोयं किंरूपः कीदृशः परः ॥ ३७ ॥
यथा चतुर्भुजो विष्णुस्तथा कोपि महाप्रभुः ।

इति मन्त्रित्य पुत्रस्य भावेन स महामुनिः ॥ ३८ ॥
तपस्तेपे चिरं दध्यौ चतुर्भुजरूपमव्ययम् ।
व्यभिचारस्तु सञ्जातस्ततो वामनसंज्ञकः ॥ ३९ ॥
विष्णोश्चैवावतारोऽभूत्कश्यपप्रीतये द्विज ।
पुनस्तु सुतपापृश्नीगर्भो जातस्तयोर्द्वयोः ॥ ४० ॥
तृतीयजन्मनि सञ्जातो देवकीवसुदेवयोः ।
तदा कृष्णेन करुणामयेन च कृतस्तयोः ॥ ४१ ॥
प्रादुर्भावश्चतुर्बाहोः कृष्णं च जानतो गृहे ।
तस्मिंश्च समये जातो नन्दवसुदेवसद्मनि ॥ ४२ ॥
वसुदेवगृहे जातश्चातुर्बाहुर्महाप्रभुः ।
उवाच वचनं रम्यं श्रीकृष्णो भक्तवत्सलः ॥ ४३ ॥
॥ श्रीकृष्ण उवाच ॥
वसुदेव महाभाग व्यभिचारो भजने तव ।
तृतीये जन्मनि सञ्जातं व्यभिचारं शृणुष्व च ॥ ४४ ॥
द्विभुजानन्दसंयुक्तं नित्यं नित्यविहारिणम् ।
चतुर्भुजस्त्वया ध्यातः समक्ष च कथं भवेत् ॥ ४५ ॥
अहं नन्दस्य गेहे च सञ्जातस्तत्र मायया ।
अचिन्त्यशक्तिरुत्पन्ना तां त्वं कारागृहे नय ॥ ४६ ॥
विष्णुश्चतुर्भुजो मथुरा प्रतिहारस्तु रक्षकः ।
मदंशयुक्तो मद्रूपः कार्यं वश्च करिष्यति ॥ ४७ ॥
गोकुले च गतो नन्दपुत्रोऽप्यन्तर्दधे पुनः ॥ ४८ ॥
कंसेन प्रेषिता दैत्या हता वसुदेवसूनुना ।
नन्दपुत्रेण निहताः केऽपि दैत्या महामुने ॥ ४९ ॥
आनन्दमात्रो नन्दस्य पुत्रो रासाय माथुरे ।
मण्डले गमनं भक्तस्वरूप रूपवर्जितम् ॥ ५० ॥
कंसं जघान वासुदेवः श्रीकृष्णो नन्दसूनं तु ।
द्वारकां च ययौ विष्णुः [1]कृष्णांशाद्यो जगत्प्रभुः ॥५१॥

[1] विष्णुष्कृष्णांशाद्यः इति पाठः।

नन्दसूनुश्च श्रीकृष्णो वृषभानुसुता शुभा ।
राधिकाकेलिसंकीर्तौ रासाथ निर्मितं[1] द्वयम् ॥ ५२ ॥
व्रजे यद्वस्तु सञ्जातं गोप्यः पुष्पलताः खगाः ।
नित्यधाम्नश्चतुर्थांशा तत्सर्वं वेद सात्वतम्[2] ॥ ५३ ॥
वृषभानुपुत्र्या अंश च रुक्मिणीं विद्धि सात्वत ।
अन्याश्च विद्धि गोप्यंशाः स्त्रियः कृष्णस्य सद्मनि ॥५४॥
साक्षात्कृष्णो व्रजे नित्यं स्वांशेन च विहारिणः ।
तस्यांशो[3] हि मथुरायां वासुदेवो जगद्गुरुः ॥ ५५ ॥
द्वारकायां तदंशोऽस्ति विष्णुर्वीर्यो यतः प्रभुः ।
एकस्मिन्समये रात्रौ कृष्णो राधासखीवृतः ॥ ५६ ॥
चकार ललितं रासं मण्डपे स्वर्णमण्डित ।
मुक्ताफलसमायुक्ते नानामणिविभूषिते ॥ ५७ ॥
सखीनां मण्डले ऽपि राधाकृष्णौ च मध्यगौ ।
चक्रतुः स्म महारास मुनिविस्मयकारकम् ॥ ५८ ॥
ब्रह्मविष्णुमहेशाद्यैर्दुर्वीक्ष्यं देवतागणैः ।
तस्मिंश्च समये जातः परो मोदो द्वयोरपि ॥ ५९ ॥
क्षण निद्ध्यौ कृष्णश्च राधिका केलितत्परा ।
ध्यानेन ददृशतुस्तौ तु युगलौ वरमङ्गलौ ॥ ६० ॥
सखीयूथश्च संयुक्तौ नित्यौ नित्यविहारिणौ ।
कुर्वन्तौ रासचरितं राधाकृष्णौ महाप्रभू ॥ ६१ ॥
संवीक्ष्य हर्षितौ द्वन्द्वौ राधाकृष्णाभिधौ व्रजे ।
प्रत्यक्षदर्शनार्थं च ध्यानं त्यक्तं महामुने ॥ ६२ ॥
राधाकृष्णाभ्यां युग्मं तु पुनर्न ददृश परम् ।
तदा तौ विस्मयं प्राप्तौ कारणं युग्ममीक्षितम् ॥ ६३ ॥
ध्यानेन तौ तु प्रत्यक्षे ( क्षौ ) किमिदं कारणं प्रिये ।
इति जल्पिते कृष्णे वै राधिकां प्रति व्योमतः ॥ ६४ ॥

---

१ रासार्थं चागतं द्वयमित्यपि पाठः । २ सात्वताम् इति पा० । ३ तस्यांशं इति पा० ।

भारती शुक्ला जाता राधाकृष्णस्य चोत्तमा ।
कृष्ण कृष्ण महाबाहो राधिके शर्मवर्धिने[1] ॥ ६५ ॥
युवां सृष्टौ हि भूतानां रूपदर्शनहेतवे ।
नान्यत्कार्यं युवाभ्यां च विना रासं परं सुखम् ॥ ६६ ॥
रास एव हि संस्कार्यो भवद्भ्यां लोकहेतवे ।
भवन्तौ प्राप्स्यतः स्थानं वृन्दावनमनुत्तमम् ॥ ६७ ॥
द्वारकेशो मथुरेशो व्रजस्थो नन्दनन्दनः ।
नन्दस्य नन्दनः कृष्णः कृष्णे चादौ व्यलीयत । ६८ ॥
रुक्मिणी राधिकां प्राप्ता राधिका राधिकां पराम् ।
मथुरेशस्य कान्ताया अभावो विद्यते ध्रुवम् ॥ ६९ ॥
व्यभिचारसमायोगादभावाच्च स्थितेर्मुने ।
महामोहेन[2] संयुक्तं विश्वं भवति वै यदा ७० ॥
तदा युग्मतुरीयांशः स्वकीयः प्रेष्यते परः ।
भक्तानां कार्यसिध्यर्थं धामप्राप्त्यर्थमेव च ॥ ७१ ॥
नान्यो भावोऽस्ति संसारे भक्तिसिध्यर्थमेव च ।
राधाकृष्णा परौ युग्मौ युग्ममेवं च तु क्षितौ ॥ ७२ ॥

॥ सनक उवाच ॥

देवेश वेदैः कथं ज्ञातं सच्चिदानन्दलक्षणम् ।
युग्मं सर्वैरविज्ञेयं विना तस्य प्रसादतः ॥ ७३ ॥

॥ शिव उवाच ॥

वेदैः सर्वैर्मिलितैर्वाक्यं वचः प्रोक्तं रहस्यगम् ।
आनन्दवचनं नस्तु वयमानन्दभर्त्सिताः ॥ ७४ ॥
आनन्दवस्तुरूपं यत्तद्ध्येयं श्रुतिभिः परम् ।
सत्ये युगे तपस्तेपे पञ्चविंशतिवार्षिकम् ॥ ७५ ॥
आनन्दरूपमानन्दमानन्दार्थप्रवर्तकम् ।
तद्ध्येयं तु प्रमन्नं नः परस्थानप्रदं परम् ॥ ७६ ॥

---

१ 'राधिके शर्मवर्धिनि' इत्यपि ।
२ महामोहनसंयुक्तो विश्वो भवति वै मुने । इति मूलपाठः ।

तेषां वाणी च सञ्जाता मधुरा कापि चोत्तमा।
द्वापरान्ते तु रूपं नः प्रकटं च भविष्यति ॥ ७७ ॥
स तद्वदस्मदाकारो ध्यातव्यः श्रुतिभिः परः।
कामिनीभावमाश्रित्य कार्यं वश्च भविष्यति ॥ ७८ ॥
मथुरे मण्डले रम्ये ददृशुः कृष्णं च राधिकाम्।
स्तुतिमारेभिरे पूर्वं तस्य युग्मस्य संज्ञिकाम् ॥ ७९ ॥
प्रसन्नः कृष्णो राधा च वेदान् वचनमब्रवीत्।
मनोवृत्तिश्च सफला युष्माकं च भविष्यति ॥ ८० ॥
यदर्थमागता यूयं वेदा आनन्दभाषिणः।
भविष्यति हि तत्सर्वं दुर्घटं देवतागणैः ॥ ८१ ॥
कामिनीभावमाश्रित्य वेदैर्ध्यातं च युग्मकम्।
पञ्चविंशद्दिनैर्जाता प्राप्तिर्वृन्दावनस्य च ॥ ८२ ॥
शतमात्रं सामवेदस्य यजुर्वेदस्य सप्ततिः।
ऋग्वेदस्य पञ्चविंशो नवाथर्वण एव च ॥ ८३ ॥
सखीसवर्णं[1,2] सम्प्राप्ताः शाखा आनन्दसंज्ञकाः।
ललितायूथे साम्नश्च यजुषो विजयागणे ॥ ८४ ॥
ऋग्वेदस्य च शाखाया विशाखाया गणोत्तमे।
अथर्वणे जयन्त्याश्च गणे जाताः सखीवराः ॥ ८५ ॥
ब्रह्मपुत्रा भक्तवरा ध्यातव्यं युग्मकं परम्।
युष्माकं चैव संसिद्धिर्भविष्यति न संशयः ॥ ८६ ॥

इति श्रीसनत्कुमारसंहितायां शिवसनकसंवादे पञ्चत्रिंशः पटलः ॥३५॥

आदितः श्लोकानां समष्ट्यङ्काः ॥ ४८९ ॥

ग्रन्थेऽत्र श्लोका मिलित्वा ॥ ३७९१ ॥

॥ समाप्तेयं श्रीसनत्कुमारसंहिता पटलपञ्चकसहिता श्रीपुराणसंहिता ॥

---

१ एष एव प्रसङ्गः पुराणसंहितायां द्वितीयाध्यायस्य ४३ श्लोके संज्ञितः श्रीमाहेश्वरतन्त्रे च विस्तारितः। २ 'सखीसंवरणं प्राप्ताः शाखा' इ०पा०।

# पाठभेदनिदर्शनम्

| पाठ | पाठान्तरम् | पृष्ठे | पङ्क्तौ | अध्याये | श्लोके |
|---|---|---|---|---|---|
| सशुद्धचे० | सशुद्धिचे० | २ | १२ | १ | १६ |
| पौराणिकनय | पौराणिकीकथा | २ | २२ | १ | २१ |
| वेदार्थघटित | वेदार्थघटिता | २ | २३ | १ | २१ |
| श्रुतियुक्तिवि० | श्रुतियुक्तवि० | ३ | २ | १ | २३ |
| योगिपुगवा | मुनिपुंगवा | ३ | ८ | १ | २६ |
| नदरूपक | नन्दमूर्तिक | ४ | ३ | १ | ३६ |
| संज्ञ यत् | संज्ञ तत् | ४ | ५ | १ | ३७ |
| संततं | सस्मृतं | ४ | ५ | १ | ३७ |
| श्रोत्रमित्यपि | श्रोत्रमस्ति च | ४ | ६ | १ | ३८ |
| घ्राण घ्राणस्य | प्राण प्राणस्य | ४ | ७ | १ | ३८ |
| ब्रह्माडचित्र | ब्रह्मांड चित्र | ४ | १५ | १ | ४२ |
| श्रुतं मम | श्रुतं मया | ५ | १३ | १ | ५४ |
| पृच्छामिकजग | पश्यामिनजग | ६ | ७ | २ | ३ |
| प्रतिध्वनत् | निनादित | ६ | १३ | २ | ६ |
| निवर्त्तकं | विवर्जित | ६ | १४ | २ | ६ |
| ब्रह्मरंध्रेस्थितंब्राह्य, | ब्रह्मरंध्रेस्थित ब्राह्य | ८ | १७ | २ | २४ |
| गंचिदाकारज्ञा | गचिदाकाशज्ञा | १० | ८ | २ | ४१ |
| शुद्ध वाङ्मनोगोचरं शिवम् | शुद्धमगुण व्यापकं स्मृतम् | १० | ९ | २ | ४१ |
| जीवितं यस्माचि | जीवितंयेनचि | ४५ | ८ | ८ | १५ |
| नमव्यय | नमीश्वरं | ४५ | १७ | ८ | २० |
| शक्त्यासिसद्रूपो | शक्त्यासतसद्रूपो | ४५ | २० | ८ | २१ |
| त्वं तु पश्य | त्वं च पश्य | ४६ | ६ | ८ | २७ |
| सूक्तौ | शुक्तौ | ४६ | १३ | ८ | ३१ |
| तरलाभसि | तरलोंभसि | ४६ | १३ | ८ | ३१ |
| सुतो विभुः | सुतो बभूः | ४७ | ४ | ८ | ३९ |
| मदोत्कटः | महोत्कटः | ४७ | ६ | ८ | ४० |
| रूपं धृत्वा | रूपमास्थाय | ४७ | ८ | ८ | ४१ |
| गुख | गुरव | ४७ | १८ | ८ | ४७ |
| उपदिष्टासनेष्वेव | उपदिष्टाम नस्येव | ४७ | १९ | ८ | ४७ |

| पाठः | पाठांतर | पृष्ठे | पंक्तौ | अध्याये | श्लोके |
|---|---|---|---|---|---|
| पुण्यैरगण्यैः क्वापिचित्कथं | पुण्यैः कदापिक्वापिचित्कथम् | ४७ | २५ | ८ | ४९ |
| वृत्तीर्विषयधाविनीः | वृत्ति विषयधाविनीम् | ६३ | २१ | ११ | १९ |
| भगवतो ह्रियत् | भगवतो महत् | ६३ | २३ | ११ | २० |
| मथाविशत् | मथागमत् | ६४ | ३ | ११ | २२ |
| गमनंचवः | गमनचन | ६७ | ९ | १२ | ३ |
| रुंधनी | रुधिनी | ७० | १६ | १२ | ४६ |
| ज्ञानरोधा | ज्ञानबोधा | ७० | १६ | १२ | ४६ |
| जीवेश्वरादिक | जीवेश्वरादिकान् | ७१ | २७ | १२ | ६२ |
| मर्यादेयंच महती | मर्यादेयं चमहता, मयादेय चमहतीं, महादेवी चमहती | ७२ | १ | १२ | ६३ |
| नावरोधितुमुत्सहे | नानुरोद्धुमिहोत्सहे | ७२ | ४ | १२ | ६५ |
| शमनाच | समनाच | ७२ | ७ | १२ | ६६ |
| न प्राप्य | न प्राप्य | ७३ | ६ | १३ | ५ |
| ऽर्बुदयोजने। पद्ममध्येसमा | ऽर्बुदयोजन। पद्ममध्येसमा | ७४ | १६ | १३ | २३ |
| जलाप्लुतेक्षणाः | जलप्लुतेक्षणा | ७५ | ८ | १३ | ३२ |
| स्तेयकरैः | स्तेयपरैः | ८१ | १ | १४ | १५ |
| यथातथ | यथायथम् | ८१ | १९ | १४ | २४ |
| मयाह्रियत् | मयाहितत् | ८२ | ४ | १४ | २८ |
| रसावेशाद् | रसावेशा | ८२ | १५ | १४ | ३३ |
| किमाचरद्राधा | किमकरोद्राधा | ८८ | ६ | १५ | २ |
| मुक्ताविचित्रबालोत्थ | मुक्ताचित्रप्रबालोत्थ | ८८ | १६ | १५ | ७ |
| यद्रूपे कृष्णकामिते | यद्रूपा कृष्ण कामिन | ९२ | १ | १५ | ५२ |
| गगाप्रवाहयुक् | गांगप्रवाहयुक् | ९२ | ९ | १५ | ५६ |
| भवती स्थिर्ति | भवति च्युति | ९३ | ४ | १५ | ६७ |

| पाठः, | पाठान्तरम्, | पृष्ठे, | पंक्तौ, | अध्याये, | श्लोके, |
|---|---|---|---|---|---|
| वससीतिचमे मतिः । | सावास्तीतीव, सावास्तीति चमेस्मृतिः | ९३ | १३ | १५ | ७१ |
| प्रतिसादरं | प्रतिमानद॰ | ९४ | २ | १५ | ७९ |
| युतेनचापि | युतेनवापि | ९४ | २० | १५ | ८६ |
| नैरात्म्यवादै॰ करतैश्च | निरात्मवादैक॰ परैश्च | ९५ | १४ | १५ | ९६ |
| मक्तदेशे | मंकमध्ये | ९६ | ४ | १५ | १०३ |
| धिदेवा अपि | धिदेवा इमे | ९८ | २२ | १६ | १५ |
| सोपरानपर | सचान्यमपर | ९९ | १५ | १६ | २६ |
| कृष्णस्यापिप्र शंसिरे | कृष्णश्च प्रशसशिरे | ९९ | १८ | १६ | २७ |
| कोसौबलेननिहतो | कोसौ कलमेनहतो | १०० | २ | १६ | ३२ |
| मृतमस्तक | वृतभालक | १०० | १२ | १६ | ३७ |
| दृष्ट्वातत्रसुवि | तत्रदृष्ट्वातिवि | १०० | १४ | १६ | ३८ |
| पुनश्चित्त | पुरश्चित्तं | १०० | १८ | १६ | ४० |
| त्वत्पुण्यसंप॰ दानया | त्वत्पुण्यस पदनघा | १०१ | ८ | १६ | ४७ |
| राशिषस्त | राशिषंत | १ १ | १२ | १६ | ५१ |
| माज्ञापयाधुना | माज्ञापयप्रभो | १०३ | ९ | १७ | ७ |
| कोऽनल॰ | कोऽनिल | १०३ | १९ | १७ | १२ |
| मदीयहृदया | स्वकीयहृदया | १०३ | २३ | १७ | १४ |
| फलोदय | बलोदयः | १०४ | १ | १७ | १६ |
| प्रीतिमावह | सुखमावह | १०४ | ८ | १७ | १९ |
| दिवसोभूया | दिवसीभूया | १०४ | १० | १७ | २० |
| पथच्युता॰ | पदच्युता॰ | १०४ | ११ | १७ | २५ |
| वने दूर | वनं दूरं | १०४ | २० | १७ | ३० |
| गोपालानपि | गोपालानाच | १०५ | ५ | १७ | ३० |
| शृण्वता | पश्यता | १०५ | १५ | १७ | ३५ |
| वाक्यविचार | वक्यविचार | १०५ | १५ | १७ | ३५ |
| यूयमादरात् | यूयमादृता॰ | १०५ | १६ | १७ | ३५ |
| सुताना च | सुतानां तु | १०५ | २२ | १७ | ३८ |
| रत्नसिंहासन | स्वर्णसिंहासन | १०६ | २२ | १७ | ५२ |
| मदात् | मधात् | १०८ | १ | १७ | ६७ |

| पाठ· | पाठांतर | पृष्ठे | पंक्तौ | अध्याये | श्लोके |
|---|---|---|---|---|---|
| तुमर्हति | तुमिच्छति | १०८ | १५ | १७ | ७४ |
| एव नस | एषो नस | १०८ | २३ | १७ | ७८ |
| स्वप्नवासत्य मित्येवंनजा- नामिय | स्प्नवायदिवा सत्यनैतज्जाने य | १०९ | ४ | १७ | ८२ |
| धूममानेत्वग- र्भि· | धूमायमानेऽग र्भिः | ११४ | १४ | १८ | ३३ |
| पदार्थैरुपशो भितम् | पदार्थैः परि- भावितम् | ११४ | २३ | १८ | ३७ |
| किमकरोन् | समकरोन् | ११७ | १० | १८ | ८२ |
| बलभद्रउ | बलदेवउ | ११९ | ८ | १८ | ९६ |
| रसहायेन | रसाहाय्येन | ११९ | ११—१२ | १८ | ९७ |
| मुपगृह्य | मुपगृह्य | ११९ | १६ | १८ | ९९ |
| स्मयाबुधौ | स्मयोदधौ | ११९ | २० | १८ | १०१ |
| सधूसर | च धूसर | १२० | ५ | १९ | २ |
| निलीयच | विलीयच | १२१ | ६ | १९ | १५ |
| प्रकारेणापि वंचयन् | प्रकारेणा- थवचयन | १२१ | १० | १९ | १७ |
| स्थापयंतीपुरः | स्थापयित्वापुर | १२१ | २३ | १९ | २४ |
| विधाय च | विविधानि च | १२१ | १२ | १९ | १८ |
| मशंकित | मशाकित | १२२ | १७ | १९ | ३४ |
| निषेध्यमानो | निवार्यमाणो | १२२ | २३ | १९ | ३७ |
| तान्येवनिर्भयो भुंक्त्वमाचौर्ये णाहरक्कचित् | तानित्वंनिर्भ- योभूत्वाखाद चौर्येणनक्कचित् | १२२ | २७ | १९ | ३९ |
| यासिभोः | यासिवा | १२३ | ७ | १९ | ४३ |
| कोत्यस्मद्भागया | कोममभाग्या | १२३ | १७ | १९ | ४८* |
| धिको मया | धिको मम | १२३ | २६ | १९ | ५२ |
| दृष्ट्वानीतस्त्वत | आनीतं च स्वत | १२४ | १ | १९ | ५३ |
| सर्वानारोपयं | सम्यगारोपय | १२४ | १० | १९ | ५७ |
| भूत्वासा | ह्येतासा | १२५ | १२ | १९ | ७२ |
| साक्षादिव | साक्षादपि | १२५ | १७ | १९ | ७४ |
| जहार च | जहारह | १२६ | ८ | १९ | ८३ |
| विधेःकृतं | हरेःकृत | १२६ | ९ | १९ | ८४ |

| राठ | पाठांतरं | पृष्ठे | कौ | अध्याये | श्लोके |
|---|---|---|---|---|---|
| मवस्थितं | मवस्थितान् | १२६ | ११ | १९ | ८५ |
| धूपोद्गार | धूमोद्गार | १२८ | ५ | २० | ८ |
| कोष्ठ्यष्टको | कोटयष्टके | १३१ | १३ | २० | ५० |
| यापरागति | परमागतिः | १३१ | १६ | २० | ५२ |
| विष्णुर्विश्वैक | विष्णुर्लोकैक | १३१ | १७ | २० | ५२ |
| ब्रह्माथाऊचु | ब्रह्मोवाच | १३२ | १० | २० | ६१ |
| निश्चयात् | वैयथा | १३३ | ६ | २० | ७२ |
| नमव्यय | नमीश्वरं | १३३ | १६ | २० | ७७ |
| पुरस्तात्द्दष्ट्यु | युवयोर्दृष्ट्यु | १३२ | २७ | २० | ९५ |
| त्यानंदपद | त्यारखंडपद | १३५ | २१ | २० | १०५ |
| निषेध्यने | निषिध्यते | १३६ | २ | २० | १०९ |
| ऽक्षरःपर | ऽक्षर.पर | १३६ | ८ | २० | ११२ |
| मसशयः | मसशय | १३८ | १ | २० | १३६ |
| यस्तुता | यस्तुया | १३८ | २ | २० | १३६ |
| नमिद्राणीस | नंपौलोमीस | १३९ | २७ | २१ | २१ |
| छायसमाश्रय | छायकृतालय | १४० | १ | २१ | २१ |
| प्रत्यूचुस्तेदिवौकस | प्रत्यूचुः पुरुषर्षभा | १४० | ११ | २१ | २६ |
| निर्ययु | प्रययु | १४१ | ७ | २१ | ३७ |
| नोशोकोयत्र नोद्वेगोनादुखनारति | नशोकोयत्र नोदु खंनो द्वेगोनारति | १४१ | ८ | २१ | ३७ |
| न्प्रविष्टोनिष्ट | न्प्रविष्टोविष्ट | १४२ | ९ | २१ | ५० |
| दभेदिन | दभेदत | १४२ | १४ | २१ | ५३ |
| ण्डसंगता | ण्डयो स्थिताः | १४२ | १६ | २१ | ५४ |
| तयोरेषस्तं | तयोरेवतै | १४२ | २३ | २१ | ५७ |
| प्राज्ञं प्राहु | प्राज्ञमाहुः | १४३ | १ | २१ | ६० |
| साक्षिकस्तत्र | क'साक्षीतत्र | १४३ | ११ | २१ | ६५ |
| भूतलयो | भूतलये | १४३ | १४ | २१ | ६६ |
| त्वया मुने | महामुने | १५४ | २६ | २३ | १० |
| रसस्वाभाव्यतो | रसस्वभावतो | १५५ | ३ | २३ | ११ |
| प्रकृतिः परा | प्रकृतिर्हिंसा | १५५ | २७ | २३ | २३ |
| काम्यया | कांक्षया | १५६ | १९ | २३ | ३२ |

| पाठ | पाठांतरं | पृष्ठे | पङ्क्तौ | अध्याये | श्लोके |
|---|---|---|---|---|---|
| मच्युत | मिस्युत | १६१ | ३ | २४ | ४ |
| तेऽनिशं | तेतराम् | १६१ | ९ | २४ | ६ |
| स्यादमृत | स्यात्पीयूष | १६१ | १६ | २४ | १० |
| कवर्णात्मा | कशब्दात्मा | १६३ | ७ | २४ | ३२ |
| रणसवृतं | रणसंयुतं | १६३ | १८ | २४ | ३८ |
| यायालीला क्षितितलेगता | यांयालीला क्षितितलेगता | १६४ | ९ | २४ | ४६ |
| ज्ञानकर्मविभा गश | ज्ञानकर्ममया निच | १६७ | ८ | २४ | ८४ |
| नारायणेन रूपेणद्रष्टा | नारायस्व- रूपेणद्रष्टा | १६७ | ११ | २४ | ८५ |
| भिर्युतम् | भिर्वृतम् | १६७ | १६ | २४ | ८७ |
| मिश्रित | सयुत | १६७ | १९ | २४ | ८९ |
| स्तुवन् | ब्रुवन् | १७० | ६ | २४ | १२३ |
| स्वानिमहेश्वरा | स्वान्यमरेश्वरा | १७० | १६ | २४ | १२८ |
| लेवसन् | लेऽभवन् | १७० | १९ | २४ | १२९ |
| लै स्तुतम् | लै श्रुत | १७१ | २२ | २५ | १० |
| जगु | विदुः | १७१ | २३ | २५ | १० |
| गाः स्थिता | गाः स्मृता | १७२ | १९ | २५ | २१ |
| देहेष्वेव | देहे एव | १७२ | २० | २५ | २२ |
| इत्येवमनुभू | इत्युक्तावनुभू | १७३ | २ | २५ | २६ |
| दुरन्तया | दुरत्यया | १८० | १६ | २६ | ५४ |
| नाभवत् | नाभवेत् | १८३ | ६-८ | २६ | ९०-९१ |
| तिश्री | इतिश्री | १८३ | २२ | २६ | ९८ |
| शृङ्गाररचना | स्वरूपरचना | १९३ | २ | २८ | १७ |
| स्तवलाभाय | स्तत्स्वलाभाय | १९९ | २५ | २८ | १०४ |
| खिन्नतांने | स्विन्नतांने | २०९ | ३ | ३० | ८ |
| कृष्णमाजा- नती पराम् | कृष्णरूप- वती परा | २१० | १२ | ३० | २६४ |
| नचेतसः | नचेतसी | २१० | २१ | ३० | ३० |
| अजनामे | आजनामे | २१५ | २ | ३१ | ११ |
| प्रकाशगुणा | प्रकाशं गुणा | २२३ | २१ | ३२ | ७ |
| धिष्ठानमद्भुतं | धिष्टानमुत्तम | २२४ | ८ | ३२ | १२ |

| पाठ | पाठांतर | पृष्ठे | पङ्क्तौ | अध्याये | श्लोके |
|---|---|---|---|---|---|
| पतगरगसं | माणिक्यरगस | २२८ | १२ | ३२ | १४ |
| हारिचंदने वैदूरवन | हरिचदने विदूरयन | २३४ | ५ | ३२ | १४६ |
| सहस्तोम | महस्तोम | २३५ | ११ | ३२ | १६२ |
| आनद परम | आनद परमं | २४१ | २१ | ३३ | २८ |
| यथाजानासिनमुने, तथाजानासिनोमुने, | तथाजानीहिभोमुने, तथाजानीहिनोमुने, | २४१ | २० | ३३ | २७ |
| निजधामेति | निजधामेति | २४३ | २१ | ३३ | ५३ |
| प्रभायाश्च चाचक्येन | प्रभायाश्च कचकयेन | २४४ | १२ | ३३ | ६२ |
| विभावाद्या· | विभावास्ते | २४५ | ९ | ३३ | ७४ |
| प्रेमावर्णविता-नानि | प्रेमावरणवीतानि । प्रेमा-वृत्तिर्वितानानि | २४५ | १० | ३३ | ७५ |
| विप्रलभभवस्ता | विप्रलम्भादलेना | २४५ | १५ | ३३ | ७७ |
| वस्त्रपूजामनोहरा । चैत्रीं वापाद्य । | चैत्रीं चतुमनोहरा मूर्तिमापाद्य। त्रपुजा वा मनोहरा चैत्री चापाद्य । | २४६ | ८ | ३३ | ८८ |
| कृष्णपूजनमासाद्य | नीराजनातमासाद्य | २४७ | ९ | ३३ | ९३ |
| सुदरीमन | ॰दरी मुने | २५७ | १४ | ३४ | ४३ |
| भयात्तीर्णा | भयोत्तीर्णा | २६१ | १८ | ३४ | ९५ |
| तौ व्याहरतश्च | तौ विहरन्तौ च | २७९ | २४ | — | ५९ |
| नन्दपुत्रेण न हता | न हता नन्दपुत्रेण | ३११ | २३ | | |

# शुद्धिपत्रम्

| अशुद्धं | शुद्धं | पृष्ठ | पंक्तौ |
|---|---|---|---|
| वस्त्वीति | वस्त्विति | ४ | २ |
| पृच्छामि कं च जग० | पृच्छामि कं जग० | ६ | ७ |
| ब्रह्मरन्ध्ने | ब्रह्मरन्ध्रे | ८ | १७ |
| महाप्राज्ञ | महाप्राज्ञ | १० | २४ |
| ससार कर्मबधन' | ससारकर्मबन्धनं | १० | २६ |
| प्रकृतिसंम्क्षिका | प्रकृतिसंज्ञिका· | १२ | १४ |
| प्रतींचि | प्रतीचिं | १६ | १८ |
| वदनांशभोजरस | वदनांभोजरस | १७ | १६ |
| बिण्डवक | विडम्बकं | १८ | २ |
| पद्मप्रागदड | पद्मरागदडं | २० | १२ |
| विषभूयामास | विभूषयामास | २१ | १६ |
| तापितादधृदया | तापिताद्धृदया | २२ | २३ |
| भूषणद्योतसुस्मित | भूषणद्योतिसुस्मित | २३ | २४ |
| मानेऽस्य | मनोऽस्य | २७ | २५ |
| सुकर्कराक्या | सुकर्कराढ्या | ३२ | ६ |
| शष्टे दृष्टो | शठे दृष्टो | ३३ | २५ |
| मानस्यालोचय | मनस्यालोचय | ३६ | १५ |
| चादिन | वादिनं | ३७ | २४ |
| परम ग्रकृतौ | परम प्रकृतौ | ३८ | २२ |
| प्रकृते· परव्यक्त | प्रकृते' परमव्यक्त | ३९ | २ |
| तादाम्यमुप | तादात्म्यमुप | ३९ | ४ |
| प्रेमहीना दुराचरा | प्रेमहीना दुराचारा | ३९ | २० |
| बद्धप्रमरसा | बद्धप्रेमरसा | ४० | २ |
| कटाक्षणबाणो | कटाक्षवाणो | ४१ | १० |
| किमप्मबधि | किमप्यवधि | ४१ | १३ |
| स्तनयारधात् | स्तनयोरधात् | ४१ | २६ |
| प्रेमस्वरूपानुभावो | प्रेमस्वरूपानुभवो | ४३ | २४ |
| धनमेतद्धि ह्यस्माकं० | धनमेतद्धिद्ध्यस्माकं | ४४ | १९ |
| रूपाया | रूपाय | ४५ | २ |
| रूणि | रूपिणो | ४५ | २ |
| अब्जोद्भिवाः | अब्जोद्भवाः | ४५ | १५ |
| भवानसि | भवानिति | ४५ | १६ |
| शङ्करस्य च ॥१॥ भगवन्नेव० | शङ्करस्य च ॥ १ ॥ ॥ ब्रह्मोवाच ॥ भगवन्नेव० | ४९ | १ |

| अशुद्धं | शुद्धं | पृष्ठे | पंक्तौ |
|---|---|---|---|
| वंद्याप्रियोगीशो | वद्याप्रियोगीशो | ४९ | १८ |
| भक्तिकीर्तिवि | भक्तकीर्तिवि | ४९ | २६ |
| मथोपि च | मथाप्ववपि | ५० | १ |
| भुषाणया | मुषाणया | ५३ | ११ |
| पटीयस | पटीयसे | ६५ | १ |
| स्वप्नदर्शनम् | स्वप्नदर्शिनम् | ६६ | ८ |
| प्राणतान् | प्रणतान् | ७१ | ११ |
| शमना च | समना च | ७२ | ७ |
| निद्रासवलितस्तस्य | निद्रासवलिनस्तस्य | ७१ | २२ |
| मर्यादेय च महती | मर्यादेय च महना | ७२ | १ |
| सहिताया रोधिनी | सहिताया सिद्धांतसारे व्यास-<br>निगमसम्वादे रोधिनी | ७२ | १६ |
| अत पृच्छामहे | अत पृच्छामि हे | ७३ | २६ |
| पारतो वीत | परितो वीन | ८२ | २६ |
| कर्तव्ये | कर्तव्य | ८३ | ७ |
| प्रधान्येन | प्राधान्येन | ८६ | ९ |
| माणवेत्रधरा | मणिवेत्रधरा | ८८ | २२ |
| वैचेन्द्रवारण | वै चेन्द्रवारुणम् | ८९ | १५ |
| श्रीदामावचन | श्रीदामवचन | ९० | २५ |
| ब्राह्माण्डस्याधि | ब्रह्माण्डस्याधि | ९१ | ४ |
| धन्यतरा स्म | वन्यतरा स्म | ९४ | १६ |
| मुमुहुर्दृष्ट्वा | मुमुदुर्दृष्ट्वा | ९८ | १३ |
| दृष्ट्वा कृष्ण विसि | दृष्ट्वा कस विसि | ९९ | ३ |
| स एव हि | स एव किम् | ९९ | ५ |
| उक्तगरक्त | उत्तुङ्गरक्त | १०० | ११ |
| गूढहृदय | व्यूढहृदयं | १०० | १४ |
| नमस्कृत्वा | नमस्कृत्य | १०० | २० |
| भयाकुला | भयातुरा | १०२ | ३ |
| मकारयत् ॥ ६२ ॥<br>पठन्विप्राननुमुख<br>विष्णवाद्यनुगतो<br>ययौ । | मकारयत् ॥ ६२ ॥ हुत्वानल वेदमत्रैः सस्कृतेन च वारिणा । अभिषेक द्विजाश्चक्रुस्तत्र ब्रह्मापि वेदवित् ॥ ६३ ॥ पठन्मंत्रानभिमुखं विष्णवाद्यनुगतो<br>ययौ । | १०२ | ९ |
| रुल्लसत् | रुल्लसन् | १०३ | १६ |
| रसनाघटिका | रशनाघटिका | १०५ | २६ |
| करोत्तस्य | करोत्तत्र | १०६ | २७ |
| मुक्ताद्या | मुक्ताढ्या | १०७ | ९ |
| रयजटितरु | रयरचितरु | १०७ | २४ |

| अशुद्धं | शुद्धम् | पृष्ठे | पंक्तौ |
| --- | --- | --- | --- |
| नोत्थितुमर्हति | नोत्थितुमिच्छति | १०८ | १५ |
| एक एव न | एक एष न | १०८ | २३ |
| अत्यर्ग्यति | अत्यर्पयति | १०९ | |
| दृष्टिर्हिर्दोषाय | दृष्टिर्हि दोषाय | १०९ | १५ |
| प्रमभेदनिदर्शकं | प्रेमभेदनिदर्शकं | १०९ | २० |
| राभकृष्णौ | रामकृष्णौ | १११ | १५ |
| सुतस्य वक्र | सुतस्य वक्र | ११२ | १४ |
| ससीत्कृति | ससीत्कृति | ११५ | १५ |
| पाययित्वा | यापयित्वा | ११५ | १८ |
| चदन द्रव्यचर्चित | चदनद्रवचर्चित | ११६ | १४ |
| मन्दमन्द | मन्द मन्द | ११६ | २३ |
| अवातरत्सुत | अवातरत्सुत | ११७ | ११ |
| सह मे निपा | सहसा निपा | ११८ | १० |
| तेऽग्र किल गो | तेऽग्र पशुगो | ११८ | ११ |
| रसातुरः | रसाकुल | ११८ | २४ |
| श्रीदामाद्या सहस्रश । | स्तोककृष्णादयोऽपरे | ११९ | ४ |
| वृथापराधमातुरप्रे | वृथापराधान्मातुरप्रे | १२५ | ६ |
| राधान्वृथा | राधान् हि वृथा | १२५ | ७ |
| साक्षादिव स्वय | साक्षादपि स्वय | १२५ | १७ |
| कार्द्रवेयस्य | काद्रवेयस्य | १२५ | २३ |
| दशाशुर्बद्ध | ददशुर्बद्ध | १२५ | २६ |
| यथापूर्वमवस्थित | यथापूर्वमवस्थितान | १२६ | ११ |
| एव विधा महा | एवविधमहा | १२६ | २१ |
| रीक्षिता. । विष्णवो<br>विश्वनेतार स्तुवंतो | रीक्षिता । हरे त्वत्तुल्यवसनालकारायुधभूषणा ॥९२॥<br>विष्णवो विश्वनेतार स्तुवन्तो | १२६ | २५ |
| तेजकूटमिवो | तेज कूटमिवो | १२८ | १४ |
| भुवन महत् | भवन महत् | १२९ | २२ |
| अप्रवेश्या प्रवेश्याः | अप्रवेश्याः प्रवेश्या | १३० | २[illegible] |

पृष्ठे १३२ तमे पंक्तौ १६ 'पण्डिताः' इति पदानन्तर ६४-६५, श्लोकयोर्व्यत्यासो बोध्यः । आदौ 'यदि कश्चन सत्समागमे'ति पद्यपठित्वानन्तरं 'यदि नाथ तवैव मायया' इति पद्यं चोच्चार्य 'जगदेव भवास्तदीश्वरो' इत्यादिपठनीय लेख्यमपि ।

| | | | |
| --- | --- | --- | --- |
| तेन निश्चयात् | तेन वै यथा | १३३ | ६ |
| परमानदरसेन | परमानदमयेन | १३३ | ७ |
| रूपिणीम् ॥ ९२ ॥ ब्रह्माद्या<br>ऊचुः ॥ नजानीमोवयंनाथ<br>द्रष्टुं युगलमद्भुतम् | रूपिणीम् ॥९२॥ गत्वा प्रणम्य<br>बहुश· प्रार्थयामासुरुत्सुकाः ॥<br>ब्रह्माद्या ऊचु. ॥ न जानीमो वय<br>नाथ द्रष्टुं युगलमद्भुतम् | १३४ | २० |

| अशुद्धं | शुद्धम् | पृष्ठे | पंक्तौ |
|---|---|---|---|
| दृष्टमात्रयुगंतयो | दृष्टमात्र युग तयो | १३४ | २५ |
| निषेध्यते ॥ १०९ ॥ अतो बहुविधा व्यक्तिर्वर्तते | निषेध्यते ॥ १०९ ॥ एकस्यान-<br>करूपत्वे कारण रसरूपता । नैका-<br>कीरमते यस्मात्स द्वितीयममन्यत<br>॥११०॥ अतो बहुविधा व्यक्तिर्वर्तत | १३८ | २ |
| तूर्णं यात· मुदान्विता | तूर्णं यात मुदान्विता | १३८ | ५ |
| हृदयं तस्मात् | हृदय यस्मात् | १३८ | १२ |
| तत्पद् प्राप्य | तत्पदं प्राप्य | १३८ | १३ |
| भ्रमतो भूलोकमप | भ्रमन्तो भूर्लोकमप | १३९ | १७ |
| ते भूलोकमतिक्रम्य | ते भुवर्लोकमतिक्रम्य | १३९ | १८ |
| ईश्वरा एव लक्ष्यन्ते | ईश्वरा इव लक्ष्यन्ते | १४ | ८ |
| नादरूपी सनातन· ॥३३॥ तस्माद्वय त्रयो जाता स्थित्युत्र | नादरूपी सनातन ॥ ३३ ॥<br>अथ सदाशिव साक्षान्निगुणो।<br>विन्दुरूपधृक् । महत्तत्वात्मको<br>विन्दुर्नादस्तस्मादहङ्कृति ॥ ३४ ॥<br>तस्माद्वय त्रयो जाता स्थित्युत्प | १४१ | १ |
| इत्युक्त्वा निर्ययु | इत्युक्त्वा प्रययु | १४१ | ७ |
| सहितादिभि | सहितादिभि | १४१ | १२ |
| पिडा· स्तद्वयक्ति | पिडास्तद्व्यक्ति | १४ | १४ |
| साक्षिकस्तत्र तैजस | क साक्षी तत्र तैजस | १४२ | ११ |
| महाभूतलयो भवेत् | महाभूतलये भवेत् | १४३ | १४ |
| यूय समायातु | यूय समायान्तु | १४३ | २५ |
| क्षुरान्त्यधारामात्रेण | क्षुरान्तधारामात्रेण | १४१ | १९ |
| पावन सर्व | पावन सर्व | १४८ | १९ |
| तददक्षरस्य विशेषण | तदक्षरस्य विशेषण | १५० | १ |
| स्वतत्रपदमेव हि | स्वतत्र पदमेव हि | १५० | ३ |
| व्यजनानि हसा सर्वे | व्यजनानि हल· सर्वे | १५१ | ३ |
| नवमी श्रिस्थित· । | नवमी श्रि(स्थि)त । | १५२ | १६ |
| मन्मना न पुन· | मन्मनो न पुन | १५३ | ६ |
| श्रवणनायमश्राव्य | श्रवर्णनीयमश्राव्य | १५३ | १० |
| दशन नाम | दर्शन नाम | १५३ | २१ |
| स्फाटिक | स्फटिक | १५४ | ७ |
| कथ न हि | कथ न हि | १५४ | १५ |
| वाचकोस्तित । | वाचकोक्तित । | १५५ | १६ |
| न सहाते कथ | न सहेते कथ | १५६ | ६ |
| दर्शनोत्थमनोरथ | दर्शनोत्थो मनोरथ | १५६ | १५ |
| स्तन्मनासि | स्तन्मनासि | १५७ | १६ |
| नोचितस्तव | नोचित तव | १६१ | १३ |

| अशुद्धिः | शुद्धिः | पृष्ठे | पंक्तौ |
| --- | --- | --- | --- |
| नासौ वाक्प्रयोगेण | न चासौ वाक्प्रयोगेण | १६२ | ९ |
| भूतदेहेन्द्रियैश्चैव | भूतदेवेन्द्रियैश्चैव | १६३ | २ |
| विद्यूत्पुजनिभा | विद्युत्पुजनिभा | १६५ | [illegible] |
| दिधि कास्थले | दिधिकास्थले | १६५ | २६ |
| तज्जीवेषु | तज्जीवेषु | १६६ | २१ |
| घ्रम् । | ध्रुवम् । | १६६ | २१ |
| सूर्याग्निनक्षत्र | सूर्यादिनक्षत्र | १६७ | १८ |
| मतरे च प्रपश्यति | मतरेवप्रपश्यति | १६८ | ११ |
| न प्रकाशन्ते स्वय | न प्रकाशेते स्वय | १६८ | १५ |
| दिव्य वन | दिव्य नवं | १६८ | २६ |
| द्रुत्वाज्ञान्यथाद्वय | द्रुत्वान्नान्यथा तद्द्वय | १७४ | २५ |
| उज्जवलश्चैव | उज्ज्वलश्चैव | १७८ | ७ |
| स्वरुप मम | स्वरूप मम | १७८ | १७ |
| श्रीदामावचनाद्रा | श्रीदामवचनाद्रा | १७८ | २३ |
| कृष्णाप्राणाधिका | कृष्णप्राणाधिका | १८१ | ८ |
| विवशान्तरा | विवशान्तरा | १८३ | ३ |
| प्रजे गत्वा | व्रजे गत्वा | १८४ | ६ |
| दवकीगर्भग | देवकीगर्भगं | १८४ | १९ |
| स्वात्मरक्षापरा | स्वात्मरक्षापरो | १८५ | ८ |
| सुदवमुवाच | सुदेवमुवाच | १८५ | २२ |
| सुक्तिमेष्यथ | मुक्तिमेष्यथ | १८६ | ३ |
| नन्दगह नय | नन्दगेह नय | १८६ | ६ |
| प्रमुवाडवसुदेवस्य | प्रभुवाङ्वसुदेवस्य | १८६ | २३ |
| मायामोहितान् | मायाविमोहितान् | १८६ | २४ |
| राययाा पुरुषो | राययौ पुरुषो | १९१ | ५ |
| सपादावदघे गोपदवीषु | सपदिविदघे गोपदेवीषु | १९१ | १३ |
| गोपभ्या | गोपभ्यो | १९१ | २४ |
| युष्पसिहासन | पुष्पसिंहासन | १९२ | २५ |
| कृष्णोऽभूदिति | कृष्णोऽभूदिति | १९४ | १५ |
| चिश्चित्प्रबुद्धो | किञ्चित्प्रबुद्धो | १९४ | १७ |
| विदित तथव | विदितं त(था)व | १९९ | ६ |
| प्रविष्टा ववनमि | प्रविष्टा वनमि | १९९ | २४ |
| मात्रोपमूढने | मात्रोपगूढने | २०० | २ |
| कृष्णोनानदमूर्तिना | कृष्णोनानंदमूर्तिना | २०३ | १४ |
| पृयक् | पृथक् | २०५ | २० |

| अशुद्धिः | शुद्धिः | पृष्ठे | पङ्क्तौ |
|---|---|---|---|
| लाश्वरणा स्निग्धलोहिता । | लश्वरण स्निग्धलोहित । | २०६ | १४ |
| स्नष्टाको | स्रष्टाको | २०६ | २५ |
| सा आत्मा | स आत्मा | २१० | ३ |
| तत्तद्भावासमाश्रया | तत्तद्भावसमाश्रया | २१० | १३ |
| चलन्त्यका | चलन्त्येका | २१० | २४ |
| निर्दय | निर्दय' | २१२ | १६ |
| षष्ठादिमारुरूमिद | षष्ठादिमारूढमिद | २१८ | ११ |
| षष्टत्य द्वितीयं | षष्टस्य द्वितीय | २१८ | १२ |
| रसाद्यारूढा | रसाद्यारूढो | २१८ | २३ |
| षोडशाद्यसमेत | षोडश्याद्यसमेत | २२० | १ |
| नवोपपद्येत | नैवोपपद्येत | २२३ | २५ |
| तथव | तथैव | २२५ | १६ |
| सतो (भूमि) षरूपा | सतोष (भूमि) रूपा | २२६ | १० |
| चद्रगारगजेन्द्रा | चंद्रगौरगजेन्द्रा | २३० | ७ |
| सन्मुखं | सम्मुख | २३१ | १ |
| दुद्यानषु | दुद्यानेषु | २३१ | ४ |
| स्तंभावली | स्तभावली | २३३ | १७ |
| हारिचदने | हरिचदने | २३४ | ४ |
| वदूरवन | वैदूर्यवन | २३४ | ५ |
| पटान च | पटानि च | २३४ | १७ |
| सहस्तोम | सह ( महा ) स्तोम | २३५ | ११ |
| दिव्यतुमंडितं | दिव्यर्तुमडित | २३६ | २२ |
| शश्वाद्व्य | शश्वद्दिव्य | २३६ | २२ |
| स्वैश्वय्यमडप | स्वैश्व मध्यमडप | २३७ | २३ |
| यत्रापविश्यखेलान्त | यत्रोपविश्यखेलति | २३८ | ११ |
| पीतमीहा | पीतमोहा | २३८ | २६ |
| ।नजान्तरे | निजान्तरे | २३९ | ५ |
| [illegible]वणनं | धामवर्णन | २३९ | १४ |
| स्पृशन्त्यव | स्पृशन्त्येव | २[illegible]९ | २२ |
| त्वत्प्रसादन | त्वत्प्रसादेन | [illegible] | २५ |
| वैकुंठवल्लाको | वैकुंठवल्लोको | [illegible]१ | ८ |
| मनस स्मृता | मनस स्मृता· | २[illegible]७ | ७ |
| उद्दीपनविभावाद्या | उद्दीपनविभावास्ते | २४५ | ९ |
| प्रेमा ' नीतानि | प्रेमावर्णवितानानि | २४५ | १० |
| कीतत' सोऽत्र | कीर्तित' सोऽत्र | २४५ | १५ |
| वस्त्रपूजां मनोहरां | त्रपुजा वा मनोहरां | २४६ | ८ |
| स्तदात्मिका | स्तदात्मक | २४७ | १५ |

| अशुद्धं | शुद्धं | पृष्ठ | पंक्तौ |
|---|---|---|---|
| यमु । तटसीमनि | यमुनातटसीमनि | २४७ | ६ |
| तेनाप्याश्वा । सत | तेनाप्याश्वासितं | २४८ | ११ |
| कस्यचिद्रोह | कस्यचिद्द्रोह | २४८ | १० |
| कामक्रोध | काम क्रोध | २४८ | २७ |
| मोन्तस्करणाभ्या | सोऽन्तःकरणाभ्या | २५५ | २१ |
| ( श्रणुष्व भो ) | ( शृणुष्व भो ) | २५६ | ६ |
| इयेष ( उवाच ) | इयेष ( उवास ) | २५७ | २२ |
| चित्त सुन्द | चित्ते सुन्द | २५७ | २२ |
| मुदता | मुदिता | २५८ | १३ |
| सङ्किवद्ध | सङ्कनिवद्ध | २५८ | २० |
| धनुर्धुरणिभ्रूवि | धनुर्धुरीणभ्रूवि | २५८ | २२ |
| पौराण संहिता | पौराणी सहिता | २६१ | १० |
| कृष्णो व्रजात्तु | कृष्णो व्रजात्तु | २७१ | ६ |
| गुणक्षाभक | गुणक्षोभकः | २७२ | १८ |
| छ्रोतुमर्हत | छ्रोतुमिच्छथ | २७४ | २[illegible] |
| ता राधाकृष्णा महा | तौ राधाकृष्णौ महा | २७९ | ५ |
| राध्यं ( धौ ) का | राध्य ( ध्यौ ) का | २७९ | ६ |
| राध्यं ( धौ ) ज | राध्यं ( ध्यौ ) ज | २७९ | ७ |
| पुष्पाण विवि | पुष्पाणि विवि | २७९ | १२ |
| ताव्याहरतश्च | तौ व्याहरंतौ च | २७९ | २४ |
| श्रमकरणा शुभाः | श्रमकणाः शुभा | २८८ | १६ |
| कृष्णेश कृष्ण | कृष्णेशे कृष्ण | २९१ | १५ |
| नंदपुत्रेण निहता | नदपुत्रेण न हताः | ३११ | २३ |
| रासाथ | रासार्थं | ३१२ | २ |
| गाप्यशाः | गोप्यशा | ३१२ | ६ |
| स्वाशन | स्वाशेन | ३१२ | [illegible] |
| समयरात्रौ | समये रात्रौ | ३१२ | १० |
| स्वर्णमण्डित | स्वर्णमण्डिते | ३१२ | ११ |
| मंडलश्रष्ठ | मडले श्रेष्ठे | ३१२ | १३ |
| दवतागणै | देवतागणैः | ३१२ | १५ |
| पुननददृश | पुनर्न ददृशे | ३१२ | २३ |